नन्दस्वामिभिरावेदितम् । किञ्च तैर्हि परमया कृपया तत्प्रबन्धैकदेशषोडशताळपत्रपरिमितः ग्रन्थः प्रसादितोभवति । तत्र सप्तशतं श्लोकानां भवति, शतैश्च तत्र श्लोकैर्महावाक्यविचारस्समग्रं साधुकृतो भवति । तदाशयश्चेत्थम्—सर्वातीतपरब्रह्मणो बहुभवनसङ्कल्पलोकजननी लक्ष्मीस्सरस्वती पार्वतीति प्रसिद्धा च महाशक्तिस्तस्यैव ब्रह्मणस्समाहाराख्यमैक्यविज्ञानमूलं संसारं सृजति, स च ज्ञानेच्छाक्रियासमाहारभावेन चतुर्विधः, तत्र च प्रवरश्च समाहारसंसारः, तस्मिंश्च सनातनं ब्रह्म ह्योमिति स्वरूपम्, तच्चोमिति महावाक्यार्थविज्ञानेन समुपासते संसारिणो मुमुक्षवः परमहंसाः, तत्र च द्वितीयस्तज्ज्ञानसंसारः, तत्स्वरूपं हि तत्र ब्रह्म भवति, तदधिकारी च हंसः तदिति महावाक्यानुसंधानेन ब्रह्मोपास्ते, ततस्तृतीयश्चेच्छासंसारः, तस्मिंश्च सद्रूपं ब्रह्म भवति, अस्ति च तदधिकारी भक्तः सदिति महावाक्यानुसन्धानेन ब्रह्मोपासनायाम्, ततश्चतुर्थश्च तत्कर्मसंसारः ब्रह्म च तत्र तत्सद्रूपं भवति, कर्मयोगी चाधिकारी तत्सदिति महावाक्येन ब्रह्म विजानाति, एवं चतुष्टयसमाहारसंसाराधिपतिव्यवसायेनाभिवर्द्धितश्च ज्ञानसंसारो द्वितीयः, एवं तृतीयश्चेच्छासंसारः चतुर्थश्च कर्मसंसारोऽपि, ज्ञानादिसंसारेष्वपि प्रत्येकं चातुर्विध्यम्, तत्र ब्रह्मतदुपासकमहावाक्यानि च पूर्ववद्विज्ञेयानि भवन्ति, महावाक्यं हि तत्त

त्संसारगतानां मुमुक्षूणां सत्यवस्तुब्रह्मविज्ञानसाधनं भवतीति। एवमेतेषां स्वरूपादिकं तत्र विशेषतोऽभिवर्णितं भवति। तत्र च कानि चित्पद्यानि बुभुत्सुबोधायेत्थमुदाह्रियन्ते।

"महावाक्यानि वक्ष्यामि सर्वसंसारिणां प्रिये।
परमार्थपरिज्ञानसाधनानि महेश्वरि॥
यत्र वस्तु समस्तञ्च भाति सर्वनिरन्तरम्।
तद्वस्तु परमार्थं स्यात्समाहारपरं भवेत्॥
त्याज्योपादेयविज्ञानं सर्वसंसारजीवनम्।
तद्विज्ञानप्रवचनपराण्याहुर्महर्षयः॥
महावाक्यानि तैर्लोकाःप्राप्नुवन्ति परं पदम्।
महावाच इमानीति महावाक्यानि चक्षिरे॥
महावाक्च परा विद्या समष्टिव्यष्टिरूपिणी।
सर्वसंसारिवेद्यानि महावाक्यानि षोडश॥
अहमेतन्नेति वाक्यं महावाक्यं परं भवेत्।
इदमेव महावाक्यं प्रणवार्थपरं भवेत्॥
एतदेव हि सर्वेषु महावाक्येषु सुन्दरि।
बोध्यं स्याद्रूढवृत्त्येति वदन्ति श्रुतयः प्रिये॥
अकारवाच्यः पुरुषः परमात्मा सनातनः।
तस्य शुद्धस्वरूपं हि महावाक्येन बुध्यते॥

सर्वास्मिन्नपि संसारे ह्ययमात्मैव सुन्दरि ।
नानास्वभावयुक्तश्च स्वेक्षणाद्भवति प्रभुः ॥
कथं वायं कथं बद्धः कथं संसरति स्वयम् ।
आत्मा चेति परिज्ञानं विद्याध्ययनतो भवेत् ॥
संसारिणश्च सर्वेऽपि येन जानन्ति चाव्ययम् ।
आत्मानं परिपूर्णञ्च तन्महावाक्यमुच्यते ॥
महावाक्यानि तान्येव प्रवृत्त्यर्थानि षोडश ।
निवृत्त्यर्थानि च तथेत्युच्यन्ते श्रुतिभिः प्रिये ॥
श्रुणु देवि प्रवक्ष्यामि त्वया सृष्टमिदं जगत् ।
षोडशभिः पुरुषैश्च चतुष्कोणसमन्वितैः ॥
सम्यग्गुप्तमिदञ्चास्ति ताच्छ्रुणुष्व महेश्वरि ।
प्रवरो ह्येकदासश्च समाहारपरायणः ॥
परमहंसनामायमधिकारपदं गतः ।
सर्वमावश्यकं मत्वा सर्वं कार्यङ्करोति सः ॥
सर्वत्र चैकरूपञ्च सर्वार्थं वस्तु पश्यति ।
ऐक्यं हि परमो धर्मस्तस्य स्याद्रुचिरानने ॥
लोकेभ्यः परमहंसाः प्रार्थयन्त्यन्वहं शुभम् ।
हंसस्तु लोकदासस्स्यात्सर्वन्तदिति निश्चयः ॥
गुणग्राही ज्ञानयोगी गुणातीतं स पश्यति ।

भक्तस्तु भगवद्दासश्चोपास्ते सद्गुणं विभुम् ॥
ओमिति प्रथमं वाक्यं द्वितीयं तदिति श्रुतम् ।
तृतीयं सदिति प्रोक्तं तुरीयं तत्सदुच्यते ॥
पञ्चमं तदहं प्रोक्तं षष्ठं चिदहमुच्यते ।
सप्तमंस्यात्सच्चिदहमिति वाक्यं प्रचक्षते ॥
सर्वं ब्रह्मेति वाक्यन्तु चाष्टमं परिकथ्यते ।
हंसस्सोऽहमिति यच्च नवमं वाक्यमिष्यते ॥
तत्सङ्कल्पविकल्पोऽहं दशमं वाक्यमिष्यते ।
नेहनानाहमिति यदेकादशमुदाहृतम् ॥
वासुदेवस्सर्वमहं द्वादशं भवति प्रिये ।
नाहं कर्तेति यद्वाक्यं त्रयोदशमुदाहृतम् ॥
आत्माहमिति वाक्यन्तु चतुर्दशमहेतुकम् ।
सर्वं खल्वहमुच्येत वाक्यं पञ्चदशं बुधैः ॥
आत्मैवेति महावाक्यमन्त्यं षोडशमुच्यते ।
महावाक्यस्य सर्वस्य प्रत्याहारपरन्त्विदम् ॥
प्रणवस्थमहमेतन्नेति वाक्यं भवेत्प्रिये ।
सर्वस्मिंश्च महावाक्ये जीवभूतमिदं मतम् ॥
सनातनमिदं वाक्यमथर्वश्रुतिचोदितम् ।
महावाक्यपरिज्ञाता चाश्नुते शाश्वतं सुखम् ॥"

इति । एवमुत्तरत्र महावाक्यादिकं सार्थं सम्यङ्निरूपितमस्ति । ग्रन्थ-विस्तरभयान्नतदिह प्रपञ्चितम् ।

दिव्यप्रबन्धश्चायं प्रणववादः, महाश्रीयुत- सर्-यस् सुब्रह्मण्यार्येभ्य एव प्रथममस्मद्दृष्टिपथमागतः । ततोऽस्माभिर्बहुधायं परिशीलितश्च संवत्सरमेकम् । प्रत्यक्षे चास्मिंश्चेतनाचेतनस्व-रूपे संसारे, सदसतोश्च कर्मणोरप्यनुष्ठानं सार्वत्रिकं सार्वकालि-कञ्च दृश्यते , अत एव " सहवैदेवानाञ्चासुराणाञ्च " इत्यादि-श्रुतयः कर्मद्वैविध्यञ्च तत्तदधिकारिनामनिर्देशपूर्वकमावेदयन्ति, " ईशेशितव्यवैषम्यनिम्नोन्नतमिदं जगत् " इति पूर्वसूरिवचनञ्च तत्स्वरूपभेदमाचष्टे,

" समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
नहिनस्त्यात्मनात्मानन्ततो याति पराङ्गतिम् ॥"

इति भगवद्वचनञ्चोपास्यवस्तुनिर्देशपूर्वकं तत्तद्धर्ममुपदिशति , " प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः " इत्यतश्च प्रवृत्तिनि-वृत्तिधर्मश्च मोक्षसाधनस्सर्वाभ्युदयरूपः जानतां वेदनफलत्वेनोक्तो भवति । " आत्मज्ञानविधुराः केवलसंसारकर्म चिकीर्षवश्चासुराः, येतु पुनर्विना संसारधर्मविज्ञानमात्मजिज्ञासायां प्रवर्तन्ते तेऽपि महासुरा एव, ये तूभयमपि जानन्ति त एव देवाः " इति खण्ड-रहस्ये देवासुरभेदो ह्यभिवर्णितो भवति । तस्मादसत्कर्म च सांसारिकं

तथात्मीयश्च सत्कर्मह्यविरोधेन येऽनुतिष्ठन्ति, एवमेव परस्परं बोधयन्ति च ; तेषामयमेव प्रबन्धः, सर्वाभ्युदयनिश्श्रेयसाधनसर्वशास्त्ररहस्यार्थपरिशीलनपूर्वकपरतत्वनिर्णये प्रवर इति प्रकारैश्च बहुभिर्निश्चितोऽस्माभिः । अत एव प्रबन्धममुं सुपरिष्कृतं मुद्रयित्वा प्रकटने संप्रार्थितास्ते सुब्रह्मण्यार्याश्च सकौतुकं विशषतो द्रव्यदानदापनाभ्याञ्चोपकुर्वन्तो विराजन्ते । तस्माद्यैश्च पुनः श्रीमद्भिर्महाभागैस्सामोदं द्रव्यदानेन प्रबन्धश्चायं मुद्रणावस्थां नीतः, येन हि पुनरेतत्प्रबन्धार्थसुधास्वादसञ्जातप्रमोदेन महाश्रीयुत डाक्टर्. सर्. यस्. सुब्रह्मण्यार्येण प्रबन्धो ह्यय माङ्गिलवाण्या विरचितेनोपोद्घातेन भूषितः, येन हि स्वामियोगानन्देन स्वविरचितेन प्रणववादार्थदीपिकानाम्ना प्रबन्धेनायं प्रणववादः प्रेक्षावतां प्रीतिपदमानीतः, येन च श्रीमता गोमठं रामानुजार्यज्यौतिषिकेण प्रणववादार्थदीपिका च श्लक्ष्णयाङ्गिलवाण्या व्याख्याता ; तेभ्यो महद्भ्यस्सर्वेभ्यो वयं सकार्तज्ञं प्रणामसमर्पणपूर्वकम्, महर्षिरयं प्रबन्धवक्ता स्वप्रबन्धेन लोकानित्थमनुशास्तीति संग्रहेणावेदयामः—विद्याभ्यासकाले ह्येव यथास्मदीयानां बालानाम्, परस्परमैत्रीमूलपरमात्मस्वरूपविज्ञानम्, कालत्रयावस्थोचितकर्तव्यधर्मरहस्यार्थविज्ञानम्, सर्वसंस्कारतत्क्रमरहस्यार्थविज्ञानम्, जगत्स्वरूपविज्ञानम्, वेदशास्त्रादितत्वविज्ञानम्, तत्त-

दधिकारिपुरुषस्वरूपविज्ञानञ्च भवेत् ; तथा यथाधिकारमस्माभिः प्रणवशास्त्रमध्याप्यतामिति। प्रणववादप्रतिपादितार्थ एव पूर्वसमयाचार्याणां व्यासादिमहर्षीणां वेदपुरुषस्य चाभिमतो भवतीति प्रणववादविमर्शग्रन्थेऽस्माभिस्सप्रमाणन्निरूपितो भवति । स च साकं प्रणववादद्वितीयतृतीयभागाभ्यां मुद्रयित्वा प्रकटीक्रियते । तस्मादेवमनेनोपोद्घातप्रबन्धेन, प्रणववादप्रबन्धार्थं सप्रमोदमाकाङ्क्षन्तो महाभागाः पण्डितास्सन्तः परमात्मा च सर्वान्तर्यामी भगवानामोदेरन्निति सर्वमवदातम् ।

इत्थम्,

दासभूतः,

पण्डित. के. टि. श्रीनिवासाचार्यः ।



ॐ

स्वामियोगानन्दानां पत्रिका

## ॐ नमः श्रीपरमर्षिभ्यो योगिभ्यः

---

महाशया महाभागाः!

श्रीमान्पण्डितः, के. टि. श्रीनिवासाचार्यः, स्वप्रकाशित-प्रणववादग्रन्थविषयकमभिप्रायमस्मानपृच्छत् । तत्र हि भृशं कृतज्ञा वयम् "आम्राश्च सिक्ताः पितरश्च तृप्ताः" इति न्याय-मनुसरन्तः पण्डितश्रीनिवासाचार्यप्रार्थनाभिपूरणपूर्वकम्, प्रणव-वादग्रन्थार्थजिज्ञासुभ्यः, सनातनधर्मसंरक्षणधुरन्धरेभ्यश्च भवद्भ्य-स्तद्ग्रन्थविषयकमस्मदभिप्रायम्, यथाबुद्धिविभव सविनयञ्चेत्थ-मावेदयामः ।

यदा हि कालदोषवशात्सर्वे धर्मास्तदनुयायिनश्च केवलं नाममात्रावशेषितवैभवाः, यदा च सर्वे लोकास्समस्तधर्मविभूतिबी जभूतं सनातनधर्ममजानन्तस्तत्तदार्यकृतब्रह्मविद्याशास्त्रगुप्तार्थज्ञा-

नविधुराः स्वसङ्कुचितशेमुषीविकसितैश्च कर्मभिर्लोकाभ्युदयमुन्मूलयन्ति; तदा हि भगवान्नारायणः स्वांशभूतैर्महर्षिभिस्सनातनधर्मशास्त्रमवतारयित्वा सर्वांश्च लोकान्संरक्षतीत्येतच्च पुराणेतिहासवेद्यमिति यत्तन्न वो न विदितम् ।

अयञ्च प्रणववादग्रन्थः तादृशभगवदंशभूतेन महर्षिणा गार्ग्यायणेन विरचित इत्येव ह्यस्माकमस्मदाचार्याणाञ्च राद्धान्तः, यतः कलयत्ययं बुद्धिवैशाल्यमास्तिकानाम्, अवगमयति च सर्वं शास्त्रार्थतत्वम्, शिक्षयति चात्मानात्मब्रह्मतत्वविवेकम् । प्रबन्धश्चायं त्रिंशद्वत्सरात्पूर्वं केषाञ्चित्सन्यासिनां निकटे दृष्टोऽधीतोऽध्यापितश्चास्माभिः । किञ्चानेनैव महर्षिणा प्रणवबोधः प्रणवसारः लोकदर्पणमिति च त्रयः प्रबन्धाः कृता इति च विज्ञायते ।

यथा च कृषीवलाः हेमन्तसमये क्षेत्रे जीर्णपर्णानि सस्यान्यभिवीक्ष्य कालान्तरे तदभिवृद्धिकामास्तद्बीजमभिरक्षन्ति, तथास्तिकास्सर्वेऽपि भवन्तः तत्तद्धर्माभिवृद्धिकामाः कालगतिं दृष्ट्वा सर्वधर्मबीजं सनातनं धर्ममभिरक्षन्तु । अयमेव हि प्रबन्धः सनातनधर्मसंरक्षणोपायं सम्यगावेदयति । अत एवेमं प्रबन्धं कुत्रचिदभिरक्षितं माहात्मानः परमया च कृपया निरगमयन् । किञ्च बालबोधार्थम्, प्रणववादप्रबन्धार्थ संग्रहकारिकाः काश्चिदस्माभिः कृतास्ताकमनया पत्रिकया प्रेषिता भवन्ति ।

तस्मादस्य प्रणववादाख्यदिव्यप्रबन्धस्य, यश्च वाङ्गिलभाषाव्याख्यानरूपोत्पादनेन प्रथमप्रवर्तकः वाराणसीपुरवासी श्रीमान् बाबु भगवान्दासः, यश्च वास्य प्रबन्धस्यास्मिन्लोके स्वस्वरूपेण प्रवृत्तौ प्रधानभूतः चेन्नपत्तनस्थः स्वीकृतमहाराजसम्मानितविद्यापीठः श्रीमान् . सर् . यस् . सुब्रह्मण्यार्यः, यश्च वास्य प्रबन्धस्य लेखकप्रमादादिदोषरहितं परिष्कृत्य मुद्रापयित्वा प्रकाशयिता इदानीं चेन्नपत्तनस्थः तिरुविन्दळूर् . श्रीमान् . पण्डितः. के. टि. श्रीनिवासाचार्यः, ये च वा श्रीमन्तः लोकश्रेयसेऽस्य प्रबन्धस्य मुद्रणाय दत्तधनाः ; तेभ्यस्सर्वेभ्यो महद्भ्यो महाभागेभ्यो वयं सकार्तज्ञं मङ्गळानुशासनपराः, प्रणववादाख्यमहाप्रबन्धश्चायमाचन्द्रतारं विजयतामिति भगवन्तं सर्वेश्वरं सविनयं प्रार्थयामः ।

इत्थम्,

स्वामियोगानन्दः.

ॐ

॥ स्वामियोगानन्दविरचिता ॥

# ॥ प्रणववादार्थदीपिका ॥



ओं महर्षेः पदांभोजं ध्यात्वा गार्ग्यायणस्य च ।
तच्छास्त्रार्थं परिज्ञाय यथामतिबलं बुधाः ॥
कारिकां बालबोधाय चैतच्छास्त्रार्थदीपिकां ।
योगानन्दो यतिश्चाहं करोम्यद्य प्रमोदतः ॥
पठन्तु पण्डितास्सन्तः स्थितप्रज्ञा हितैषिणः ।
वर्धतां ब्रह्मविद्या च लोकेभ्यस्सुखमेधताम् ॥
अनुग्रहाय लोकानामृषिर्गार्ग्यायणस्स्वयम् ।
शास्त्रं प्रणववादाख्यं चकार श्रुतिसम्मतम् ॥
ब्रह्मणः प्रतिमाभूता या च विद्या परा श्रुता ।
तस्या ह्योङ्काररूपायाः कृतञ्चेदं महर्षिणा ॥
शास्त्रं व्याख्यानरूपेण ज्ञानिनां हृदयङ्गमम् ।
अनेन शाश्वतो धर्मो रक्ष्यते नात्र संशयः ॥

समाहारो हि शास्त्रेऽस्मिन्जीवभूतो हि दृश्यते ।
समाहारो हि सर्वात्मा परब्रह्मेत्युदाहृतः ॥
त्रीणि प्रकरणान्यस्मिन्कल्पितानि महर्षिणा ।
अग्र्यं प्रकृतिसन्धिप्रकरणश्चात्र कीर्तितम् ॥
तरङ्गपञ्चकोपेतं तत्वयाथात्म्यबोधकम् ।
एतत्प्रथमतो वेद्यं सर्वार्थमिति कथ्यते ॥
मुमुक्षुसर्ववेद्यार्थवाचकः प्रणवो यतः ।
तस्मादृषिस्तद्व्याख्याने स्वप्रवृत्तिमचीकथत् ॥
प्रथमे ह्यनुक्रमणिके तरङ्गे भगवानृषिः ।
स्वचिकीर्षितशास्त्रार्थसंग्रहं सम्यगुक्तवान् ॥
प्रणवस्य हि सर्वेभ्यश्शास्त्रेभ्यः प्रथमं सता ।
अध्यापनं चाध्ययनं यथाकालं यथामति ॥
यथादेशं सर्वशास्त्रसुसमन्वयपूर्वकम् ।
कर्तव्यमिति सर्वांश्च प्रार्थयत्यादरान्मुनिः ॥
द्वितीये हि तरङ्गेऽस्मिन्ये च प्रोक्ता महर्षिणा ।
ते चैवं क्रमशो ह्येवं वेद्या विज्ञानकांक्षिभिः ॥
भावाभावव्याप्तिभिश्च त्रिविधं जगदुच्यते ।
युक्तं गुणेन कालेन क्रियया विषयेण च ॥
त्रिभिरोङ्कारलीनैश्च वर्णैरेवं हि कथ्यते ।

ओमित्येकाक्षरश्शब्दो वाचको ब्रह्मणः परः ॥
समष्टिव्यष्टिरूपेण स द्विधा परिकथ्यते ।
ब्रह्मदृष्ट्या समष्टिस्स्याद्व्यष्टिस्तु जगदीक्षणात् ॥
अकारोकारमकारैर्व्यष्टिरूपं तदुच्यते ।
प्रथमस्तत्र चाकारस्स चात्मार्थस्य बोधकः ॥
स द्रष्टव्यश्च श्रोतव्यस्समन्तव्यो मुमुक्षुभिः ।
स वै निदिध्यासितव्यश्चेति श्रुतिभिरुच्यते ॥
अर्थानाञ्चैव सर्वेषां यथात्मा भवतीश्वरः ।
तथैव सर्वशब्दानामकारो ह्यात्मवाचकः ॥
लोके सर्वाणि कर्माणि वयं कुर्मो दिने दिने ।
प्रतिकर्मफलं भिन्नं विचार्य स्वफलप्रदम् ॥
तृणच्छेदादि यत्कर्म निष्फलं तद्धि कथ्यते ।
तस्मात्कर्मैव बोद्धव्यं साङ्गं मानुषमण्डले ॥
इति कर्मपरा लोके वदन्ति बहुवैदिकाः ।
स्वकर्म पत्रैः पुष्पैश्च दर्भैस्तोयैस्तिलादिभिः ॥
अलङ्कुर्वन्ति चान्ये तु स्तोत्रप्रपदनादिभिः ।
वर्णाश्रमादिचिह्नैश्च यथेच्छं केचिदत्र हि ॥
तथाप्येते न जानन्ति स्वफलप्राप्तिसाधनम् ।
साक्षात्प्रकृत्या सर्वाणि कर्माण्यपि कृतानि च ॥

प्रकृतिर्यदि दुष्टा स्यान्नैव कर्म प्रशस्यते ।
इति स्वानुभवैर्वेद्यन्नैव शङ्कात्र विद्यते ॥
शुभा च सा सर्वकर्मकर्त्री भवितुमर्हति ।
कर्मणा मानसेनेयं प्रकृतिस्तु शुभा भवेत् ॥
मानसङ्कर्म संकल्पो युक्तायुक्तविचारजम् ।
युक्तं सत्यमयुक्तं स्यादसत्यं ज्ञानमेव तत् ॥
अतश्च युक्तज्ञानेन मानसं कर्म चोत्तमम् ।
तत्कर्मणा च प्रकृतेश्शक्तिस्तु परिवर्धते ॥
तच्छक्त्या क्रियमाणानि कर्माणि फलवन्ति च ।
यदा च मानसं कर्म चायुक्तज्ञानसंवृतम् ॥
तदा प्रकृतिकर्माणि नार्थवन्ति भवन्ति हि ।
अनर्थान्येव तानीह कर्माणीति तु सम्मतम् ॥
अतश्चार्थपरास्सर्वे स्वान्तं रक्षन्तु सर्वदा ।
स्वान्तसंरक्षणेनैव कार्यसिद्धिः प्रजायते ॥
स्वान्तसंरक्षणं तत्स्यायुक्तज्ञानमनस्स्थितिः ।
कोऽसौ युक्त इति प्रश्ने सोऽयमात्मेति बुध्यते ॥
तस्माद्युक्तपरामर्शस्सुखिभिः कर्तुमर्हति ।
तदात्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्य इति ॥
अस्मभ्यश्चाष्टमे ऽब्दे हि वेदाश्चाहूय चक्षते ।

तस्माद्युक्तं परं ब्रह्म स्वात्मरूपं विचिन्तयेत् ॥
इत्यतश्चात्मविज्ञानं प्रथमं ऋषिरब्रवीत् ।
अतो जिज्ञास्य एव स्यादात्मा सर्वमुमुक्षुभिः ॥
आत्मनश्च ह्यकारस्य गौणं तादात्म्यमुच्यते ।
यथात्मा तु स्वयंभूश्च निर्विकारो निराश्रयः ॥
सर्वाश्रयो निर्व्यपेक्षश्चाविज्ञेयस्सनातनः ।
सर्वोपाधिस्वरूपश्च नित्योऽनाद्यन्तरूपवान् ॥
वर्णसंख्याक्रमकालरहितश्शुद्ध एव सः ।
उपस्थितश्च सर्वत्र चानुपस्थितमूर्तिमान् ॥
ज्ञानाज्ञानस्वरूपश्च विभुः कर्ता परः प्रभुः ।
निर्मलः परिबद्धोऽपि सत्तारूपस्स भासते ॥
अणोरणीयान्महतो महीयान्स्यादवस्थया ।
अपूर्णः प्रकृतेर्योगात्स्वयं पूर्णः प्रकाशते ॥
सर्वज्ञश्च स्वयं ब्रह्म प्रकृतिस्थः पुमान्परः ।
तथा तद्वाचकोऽकारः बोध्यो भवति योगिभिः ॥
स चाकारो हि सर्वा वागिति श्रुतिभिरुच्यते ।
तरङ्गे च द्वितीयेऽस्मिन्नेवमात्मा निरूपितः ॥
तस्मान्मुमुक्षुभिर्वेद्यं प्रथमं ह्यात्मलक्षणम् ।
तृतीये तरङ्गे चात्मजिज्ञासासाधनोऽयतः ॥

संसारोऽस्ति ततस्तस्य स्वरूपमृषिणोच्यते ।
यश्चात्मभेदवानस्ति सोऽनात्मेति हि लक्ष्यते ॥
अनात्मैव हि संसारः प्रकृतिश्चेति कथ्यते ।
संसरणाद्धि संसारः प्रकृतिः प्रकरोत्यनः ॥
सर्वे गुणा ह्यात्मयोगादनात्मन्यभिदृश्यते ।
आत्मयोगो ह्यात्मशक्तिस्त्वनात्मस्था यदा भवेत् ॥
तदा प्रकृतिशक्तिस्स्यात्सा सूते विविधं जगत् ।
बहुस्यामिति यो भावस्स्याद्धि योगस्स चात्मनः ॥
अतः कारणमात्मेति योगाच्चैवावगम्यते ।
ध्येयं स्यात्कारणं वस्तु सर्वेषां हि मुमुक्षुभिः ॥
तस्मात्संसार एवायमात्मविज्ञानसाधनः ।
ओमित्यत्र द्वितीयेन चोकारेणाभिधीयते ॥
संसारस्सत्वनाद्यन्तो यथात्मा तदधिष्ठितः ।
विविधेऽस्मिन्क्रमस्सर्वोऽप्यात्मशक्त्यैव लक्ष्यते ॥
जगद्रूपे हि संसारे लुप्तो बद्धस्सनातनः ।
जगद्रूपेणैव भाति चात्मा सर्वस्य रक्षकः ॥
आत्मगुप्ते हि संसारे जननं मरणं तथा ।
भावोऽभावस्तथाज्ञानमज्ञानञ्च विलोक्यते ॥
नानात्वे सति चैतस्य प्रपञ्चव्यवहारता ।

तदा प्रपञ्चरूपस्स्यादात्माऽपूर्णो विभाव्यते ॥
क्रियाधिकरणश्चायं संबन्धादात्मनो भवेत् ।
एतस्य चात्मकार्यस्य सृष्ट्यादेर्हि प्रयोजनम् ॥
जिज्ञासाकरणत्वं स्यात्तच्च सर्वं विशेषणम् ।
महदादीनि तत्वानि संसारे चैव भान्ति हि ॥
स द्रव्याद्यः पदार्थश्च सर्वाद्योऽन्त्यस्स्वयं भवेत् ।
अनाद्यनन्तस्यार्थस्य बोधकश्चाथ तत्र हि ॥
तिष्ठति प्रकृतेश्शक्तिस्सर्वं तद्वशगं भवेत् ।
ततश्चाधारभूतेयं सर्वेषामिति सिद्ध्यति ॥
संसारस्य हि नानात्वात्कर्तृत्वाभावतश्च हि ।
मिथ्यात्वं परिकल्प्येत ह्यतोऽसौ स्यादसत्स्थितिः ॥
आत्मानात्मनोस्संबन्धान्नामरूपादिभेदधीः ।
कालस्वरूपभेदेन तत्सम्बन्धश्च जायते ॥
व्यापारार्थश्च संसारः व्यापारः कालमूलकः ।
संसारेणैव सर्वेषां सन्धिर्हि परिदृश्यते ॥
आत्मावश्यकस्संसारस्सवदायं सनातनः ।
उच्चावचत्वधीर्नैव संसारे विदुषां भवेत् ॥
सर्वकर्मणां संसारे फलसाम्यमतिर्भवेत् ।
अत एव च साधूनां संसारो नित्य एव हि ॥

संसारेणात्मना चैव ब्रह्मबोधः प्रजायते ।
अत एव च संसारो नैव त्याज्यः कदाचन ॥
केवलं तत्र मिथ्यात्वज्ञानमेवेति निश्चयः ।
तस्मात्संसारविज्ञानमात्मानिश्चयसाधनम् ॥
चतुर्थेऽस्मिन्तरङ्गे हि मकारेणाऽव्ययेन च ।
ओमित्यत्र तृतीयेन द्व्यर्थेन परमेष्ठिना ॥
निषेधवचनेनात्मानात्मविमर्शपूर्वकम् ।
विचार्यते परं ब्रह्म मुनिना गार्ग्यसूनुना ॥
अस्य भेदवचनत्वं न स्वतः किन्तु संसृतेः ।
अस्तित्वमस्य नास्तित्वञ्चैवं वेद्यं मनीषिभिः ॥
आत्मानात्मनोर्योगं हि प्रथमञ्च निषेधति ।
मकारोऽयन्ततो ब्रह्म ह्यतीतमिति वक्ति च ॥
आत्मानात्मनोर्योगस्य निषेधाद्रूपमात्मनः ।
निर्णीतं सविमर्शं स्याच्चात्मभिन्नस्य वस्तुनः ॥
आत्मानात्मनोरस्तित्वमावश्यकमितीरितम् ।
असत्यपि च संसारे ह्यात्मास्तित्वं हि बुध्यते ॥
न तथाहि च संसारे मिथ्यात्वात्तत्र कल्प्यते ।
उकारबुध्या संसारश्चास्तिनात्मेति निर्णयः ॥
अस्तिनास्तीति च द्वाभ्यां भावाभावार्थधीर्भवेत् ।

अकारोकारवर्णाभ्यान्तयोर्बोधः प्रभासते ॥
नेदं ब्रह्म प्रतिषिद्धं तद्वर्ज्यावर्ज्यवर्जितम् ।
तत्कुत्सितमकुत्सितं मूलञ्चामूलमेव च ॥
नैव शून्यं न चाशून्यं न ह्युपाधिर्न केवलम् ।
न चेदं कामनारूपं पूर्णं नापूर्णमेव च ॥
सविकारं निर्विकारं सर्वातीतं हि तद्भवेत् ।
नाधीनङ्कस्यचिद्ब्रह्म ब्रह्माधीनं न किञ्चन ॥
नेदं हि लीयते ब्रह्म न किञ्चित्तत्र लीयते ।
न स्यादुपस्थितं ह्येतदनुपस्थितमेव च ॥
न च पूर्वापरौ यस्य नार्थानर्थौ च यस्य हि ।
सर्वस्वभावयुक्तञ्च ब्रह्मेति परिकीर्तितम् ॥
तच्च ज्ञानाविषयत्वादसामर्थ्यात्स्वभावतः ।
न बोध्यत्वेनोपयुक्तं ब्रह्मेति हि सुनिश्चितम् ॥
तत्सर्वगतं हि ब्रह्म सर्वं ब्रह्मगतं भवेत् ।
सर्वनिषेधबोध्यत्वमात्रेण ब्रह्म बुध्यते ॥
संसारात्मनोर्विरुद्धं ताभ्याञ्च सहितं भवेत् ।
परस्परोपहार्यञ्च ब्रह्मेति हि निगद्यते ॥
अनेकैकत्वयुक्तञ्च तादृशं ब्रह्म बुध्यते ।
वस्तुतस्त्वेकमेतच्च सर्वातीतमिति स्थितिः ॥

ध्यानादेर्विषयश्चैव न च पूजादिकर्मणाम् ।
तादृशं वचनं यच्च तदात्मार्थकमुच्यते ॥
कारणश्रुतिरप्याह चात्मानं ब्रह्म नैव हि ।
पदार्थत्वाभावतश्च न तद्ब्रह्म हि कारणम् ॥
अहं ब्रह्मेति च श्रुत्या नान्यद्ब्रह्मेति सूच्यते ।
अतो हि नाहञ्च न त्वं नायं ब्रह्मेति निश्चितम् ॥
किन्तु शुद्धं हि तत्सत्यं ब्रह्मेति मुनिसंमतम् ।
अतस्तत्प्रवचनं हि सर्वमावश्यकं भवेत् ॥
न चात्मनो हि योगेन ब्रह्मसंज्ञा हि संभवेत् ।
तथोपचाराद्ब्रह्मेति चात्मा श्रुतिभिरुच्यते ॥
त्रयाणां योगरूपञ्च ब्रह्मेति प्रणवाद्भवेत् ।
वस्तु तत्र न चैकैकं किञ्चिदस्तीति निर्णयः ॥
सर्वं खल्विदं ब्रह्मेति श्रुतेर्हि सर्वशब्दतः ।
आत्मानात्मनिषिद्धानां ब्रह्मरूपत्वमुच्यते ॥
एवं तत्वमसीत्यादिवाक्यैरपि च बुध्यते ।
त्वमहञ्चायमिति च पुरुषेण त्रयेण च ॥
तदेकत्वात्सर्वमेकस्वरूपमिति निर्णयः ।
अहमन्यस्त्वमन्यश्च तथान्य इति हि भ्रमः ॥
नायं तिष्ठति संसारः विनात्मानं तथा ह्ययम् ।

संसारं च विना नास्ति निषिद्धश्च विना न तौ ॥
अतो हि प्रणवस्यास्य भागत्रयनिरूपणम् ।
केवलं सर्वबोधाय चेति बोध्यं मनीषिभिः ॥
वस्तुतस्त्वयमेकश्च ह्यक्षरः परिकथ्यते ।
एव मेव परं ब्रह्म विज्ञेयं हि मुमुक्षुभिः ॥
अतो ह्येवं हि निश्चित्य सर्वं कार्यश्च देहिनाम् ।
तदावश्यकमित्येव ज्ञात्वानन्दो हि भुज्यताम् ॥
तरङ्गे पश्चमे चास्मिन्नृषिणा गार्ग्यसूनुना ।
त्रयाणां हि पदार्थानामैक्यमावेद्यते पुनः ॥
आत्मानात्मनिषेधानां त्रयाणां हि मुमुक्षुभिः ।
संयोगवियोगार्थश्च स हेतुर्बोध्य एव हि ॥
नावश्यकानां संयोगवियोगौ भवतश्च तौ ।
किन्त्वावश्यकानां योगो वियोगोऽनावश्यकानाम् ॥
संयोगवियोगयोस्तु क्रम एव हि कारणम् ।
क्रमस्स्यात्प्रथमं तस्मादवस्था ह्युपजायते ॥
तस्यायोगवियोगौ च स्यातामिति हि निर्णयः ।
निदिधीर्षा हि यस्य स्यादात्मानात्मपदार्थयोः ॥
वियोगस्तेन मन्येत वस्तुनिर्णयसाधनः ।
अतो नात्मानात्मनोर्हि चान्योन्यावश्यकत्वधीः ॥

कार्यकारणकर्तृत्वे सत्यन्योन्यन्तयोर्यदि ।
स्याद्योगवियोगार्थस्य चाप्यन्योन्याश्रयत्वधीः ॥
संसारेण च संयुक्तो ह्यात्मा भवति तेन च ।
संसारोऽप्यस्ति संयुक्तश्चेति योगो विभाव्यते ॥
यथैकस्मिन्हि दृश्येते ज्ञानाज्ञाने च तत्र हि ।
भ्रमनाशे हि ज्ञानी स्यादज्ञानी तदभावतः ॥
तथा योगवियोगौ च विज्ञेयौ हि मनीषिभिः ।
तादृशो हि भ्रमस्याच्च संसारे नात्मवस्तुनि ॥
किन्त्वात्मनि केवलन्तत्सत्तामात्रस्य संस्थितिः ।
अतस्सर्वे पदार्थाश्च युक्तायुक्ता विभान्ति हि ॥
कारणं परमं तत्र विवक्षेति हि निर्णयः ।
तस्यां सन्धिस्तदभावे सन्ध्यभावो हि बुध्यते ॥
विवक्षाकारणं तत्र संसारावश्यकत्वधीः ।
तस्माद्धि सन्धिवचनः मकारश्चान्तिमो भवेत् ॥
व्यवहारादेवमुक्तं तत्वतस्त्विदमेव हि ।
त्रयाणामेकधर्मस्तु ब्रह्मेति मुनिसम्मतम् ॥
आत्मनश्शक्तिमत्वात्स्याच्छक्त्या योगोऽस्य सर्वथा ।
अतस्सर्वत्र चात्मानं पश्येदित्याह वेदवाक् ॥
परस्पराधिकरणौ वीर्यवृक्षौ यथास्थितौ ।

तथा स्यातां जीवदेहौ बद्धात्मा जीवसंज्ञकः ॥
यथा प्रणवरूपंहि सन्धिप्रकृतिसंयुतम् ।
तथा स्यात्तादृशं ब्रह्म निषिद्धश्चेति निर्णयः ॥
ब्रह्मरूपप्रवचनं साध्यञ्चासाध्यमेव च ।
प्रसिद्धञ्चाप्यप्रसिद्धं दृष्टञ्चादृष्टमेव च ॥
सगुणं निर्गुणञ्चेति वर्ण्यते ब्रह्म साधुभिः ।
संसारात्मस्वरूपं हि सगुणं ब्रह्म कथ्यते ॥
यदिदन्निर्गुणं ब्रह्म तन्निषिद्धस्वरूपवत् ।
सगुणं निर्गुणञ्चेति पृथग्भानं भ्रमाद्भवेत् ॥
ओमित्येकाक्षरस्यार्थे परब्रह्मणि नैव हि ।
आत्मानात्मा तथान्यश्च यच्चान्यद्वस्तु किञ्चन ॥
तत्सार्वकालिकं चैव केवलं ब्रह्मसंस्थितम् ।
नानात्वरहितं चैव परं सार्वत्रिकं भवेत् ॥
अत एव मुनिर्व्यासो ब्रह्मसूत्रप्रवर्तकः ।
अथातो ब्रह्मजिज्ञासेत्येतत्सूत्रञ्चकार हि ॥
आत्मानात्मपदार्थस्य विज्ञानं चैव तत्र हि ।
ब्रह्मस्वरूपजिज्ञासा कारणञ्चेति निर्णयः ॥
पदार्थस्य पृथक्सत्वे दोषाद्द्वैपायनो मुनिः ।
तदेकत्वविज्ञानाय जिज्ञासां ब्रह्मणोऽवदत् ॥

प्रमाणञ्च प्रमेयश्च संशयश्चेति यद्भवेत् ।
तत्सर्वं ब्रह्म चैकं स्यादिति यो वेद सोऽर्थवित् ॥
आत्मा प्रमाणभूतस्याज्जगत्सर्वं ससंशयम ।
तयोस्संबन्धरूपश्च प्रमेयस्तु निषिद्धवान् ॥
संशयस्तु विरोधस्स्यात्संसारेऽस्मिन्स दृश्यते ।
निवर्त्यं तन्तु विज्ञानाद्भोक्तव्यं परमं सुखम् ॥
यदेतत्तूयविज्ञानं ब्रह्मज्ञानप्रयोजनम् ।
प्रमाणञ्च प्रमेयश्च संशयश्च प्रयोजनम् ॥
इमान्येव मुमुक्षूणां चत्वारि साधनानि च ।
साध्यान्यपि भवन्तीति विज्ञेयानीति निश्चयः ॥
कार्यकारणकर्तृत्वाभावतोऽभेदतश्च हि ।
तस्मात्सर्वं परं ब्रह्म भवतीति मुनेर्मतम् ॥
अत्रैव जीवो मायेति ब्रह्मेति च निगद्यते ।
आत्मा जीव इति प्रोक्तः माया भेदस्य कारणम् ॥
तयोर्निषिद्धरूपश्च संबन्धो ब्रह्मसंज्ञकः ।
एवं तत्वविदां वादः निश्चितो गार्ग्यसूनुना ॥
योऽयं योगश्च कथितश्चित्तवृत्तिनिरोधकः ।
सोऽपि त्वैकभावस्स्यादित्युक्तोऽत्र महर्षिणा ॥
व्यापारश्चित्तवृत्तिस्स्याद्व्यापारो भेदमूलकः ।

तद्भेदनाशकोपायो योग इत्युच्यतेऽत्र हि ॥
सहि योगश्च सन्धिस्स्याद्भेदज्ञाननिवर्तकः ।
तस्मात्सर्वं ब्रह्ममयं ब्रह्म सर्वमयं भवेत् ॥
या हि संख्यात्र बुध्येत पृथग्रूपा न सा मता ।
किन्तु सास्यात्त्रितयत्वञ्चेति सांख्यं तदुच्यते ॥
संसारात्मप्रातिषिद्धरूपः स्यात्त्रिगुणो यतः ।
तत्तास्त्रित्वेन चैकैकं वस्तु भातीति निर्णयः ॥
यदुक्तं प्रकृतिश्चेति पुरुषो ब्रह्म तेन च ।
त्रिगुणात्मपरं ब्रह्म चेति सांख्यरहस्यधीः ॥
मीमांसकनये कर्म चैवं त्रितयमुच्यते ।
तत्कर्तव्यमकर्तव्यं तयोः संबन्ध इत्यपि ॥
स्वार्थादिभेदोप्यस्मिंश्च दृश्यते हि व्यवस्थया ।
आत्मीयं कर्म हि स्वार्थं परार्थञ्चान्यकर्तृकम् ॥
सर्वं विज्ञाय सर्वार्थं कार्यं स्यात्पारमार्थिकम् ।
अतस्स्वपरधीस्त्याज्या सर्वमावश्यकं हि तत् ॥
अकारात्कर्म हि स्वार्थमुकारात्तु परार्थकम् ।
परमार्थं मकारात्तु विज्ञेयं हि मनीषिभिः ॥
सति कर्मणि भेदेऽपि फले चैकत्वनिश्चयः ।
अतस्सर्वाणि कर्माणि चैकार्थानीति निश्चयः ॥

विषयाणां विशेषविज्ञानं वैशेषिकं भवेत् ।
पदार्थानां हि सर्वेषामत्रैकत्वं हि बुध्यते ॥
द्रव्यादीनां त्रयाणां हि समवायिस्वरूपतः ।
एकत्वं तत्र मन्येत सर्वस्यैकत्वदर्शनात् ॥
तत्सामान्यं विशेषो हि चैकमेवेति बुध्यते ।
सामान्यान्तर्गतत्वाच्च विशेषस्येति निर्णयः ॥
पदार्थत्वाभावतश्च सामान्यादेस्स्वभावतः ।
त्रयः पदार्थाश्चेत्येव निर्णीतं हि महर्षिणा ॥
त्रयाणाञ्च पदार्थानां यदैक्यं कथ्यते हि तत् ।
वैशेषिकमिति प्रोक्तं प्रणवार्थविचारतः ॥
तस्माच्च जिज्ञासया हि योगेन कर्मणा तथा ।
सांख्येन च विशेषेण निर्णयेन तथा पुनः ॥
एभिरङ्गैश्च षड्भिस्स्याद्ब्रह्मबोध्यं मनीषिभिः ।
सर्वस्य त्रितयत्वाच्च त्रितयात्मजगद्भवेत् ॥
तथा ब्रह्मेति चाख्यातुं व्याख्यातः प्रणवोऽत्र हि ।
सर्वस्य त्रितयत्वञ्च सदृष्टान्तमुदाहृतम् ॥
एवं प्रकरणे चास्मिन्प्रथमे गार्ग्यसूनुना ।
समष्टिव्यष्टिदृष्ट्या हि परा विद्या विचारिता ॥
तस्य व्याख्यातुरेवं हि मुनेर्यो भावितात्मनः ।

आशयः परमो ज्ञेयः स चैवं स्यान्मुमुक्षुभिः ॥
मुमुक्षवो भिन्नरूपा दृश्यन्ते भिन्नबुद्धयः ।
सर्वे चैते स्वधर्मेण प्राप्नुवन्ति परां गतिम् ॥
ये ह्यात्मनश्च विज्ञानादात्मभिन्नस्य वस्तुनः ।
तृतीयं ब्रह्म विन्दन्ति श्रेष्ठास्ते वै मुमुक्षवः ॥
येऽनात्मवस्तुविज्ञानान्निर्णयन्त्यात्मवस्तुनः ।
स्वभावं कर्मयोगेन मध्यमास्ते मुमुक्षवः ॥
येऽनात्मभूतीर्विज्ञाय विना चात्मधिया पुनः ।
कामात्मानश्च कर्माणि कुर्वन्त्येतेऽधमा मताः ॥
ये हि सङ्कुचितं ज्ञानं चाशुद्धन्देहमण्डलम् ।
त्यक्तुकामाः परं स्थानं गच्छन्तस्ते मुमुक्षवः ॥
लोकेऽस्माभिः पण्डितैश्च पामरैर्वस्तु सर्वदा ।
स्वस्वज्ञानानुरूपं हि सदसच्चेति बुध्यते ॥
असतश्च पदार्थस्य कारणं वस्तु सद्भवेत् ।
नानास्वभावयुक्तं स्यादसद्वास्त्विति निर्णयः ॥
असद्विभूतयस्सर्वास्सच्छक्तेर्योगसंभवाः ।
सतो विभूतयस्त्वत्र स्वतोनित्या विभान्ति च ॥
सर्वावस्थाश्शैशवाद्या जननं मरणन्तथा ।
सुखदुःखादिकञ्चैव भान्त्यसद्वस्तुनिस्वतः ॥

अस्तिनास्तीति च द्वाभ्यां पदाभ्यां ते च वस्तुनि ।
श्रूयेते च तथा चैव दृश्येते हि स्वभावतः ॥
परं सदसतोर्यत्स्यात्सदसद्रूपमेवहि ।
तच्च स्यात्परमं वस्तु ब्रह्मेति हि निगद्यते ॥
आत्मा भवति सद्वस्तु ह्यकारार्थो भवेदिह ।
असद्वस्तु च संसारश्चोकारार्थो निरूपितः ॥
उत्तमञ्च भवेद्वस्तु सर्वबीजं सनातनम् ।
मकारार्थश्च तत्सत्यं ब्रह्म सर्वविभूतिमत् ॥
त्रयाणामेकरूपञ्च यद्ब्रह्म पारमार्थिकम् ।
समाहारेण तद्वेद्यं समाहारस्वरूपवत् ॥
समाहारार्थकश्शब्दो त्रिषु वर्णेषु मध्यगः ।
इकारस्सच सर्वेषां भावानामेकधर्मकृत् ॥
प्रत्यक्षस्यैव संसारवस्तुनोऽस्य विचारतः ।
संसारभिन्नस्यार्थस्य भवेद्विज्ञानमुत्तमम् ॥
तस्मात्संसारविज्ञानं तदीयङ्कर्म चाखिलम् ।
आवश्यकमिति ज्ञेयं यावदात्मविदर्शनम् ॥
अस्मिन्प्रकरणे ह्यर्थास्सर्वे प्रोक्ता विवक्षिताः ।
महर्षिणा संग्रहेण व्याख्यास्यन्ते पुनश्चवे ॥

॥इति योगानन्दविरचितायां प्रणववादार्थदीपिकायां प्रथमोध्यायः॥

ॐ

## ॥ अथ द्वितीयोध्यायः

——o——

द्वितीयेऽस्मिन्प्रकरणे गार्ग्यायणमहर्षिणा ।
त्रयाणां हि फलं सन्धेस्सप्रकारन्निरूप्यते ॥
किञ्च त्रयस्य ज्ञानस्य मुख्यत्वन्तत्प्रयोजनम् ।
ज्ञानेच्छाकर्मणां रूपं सदृष्टान्तमुदाहृतम् ॥
त्रैविध्यमिच्छाक्रिययोस्त्रिविधानांसमन्वयः ।
त्याज्योपादेयविज्ञानं तथा साङ्गन्निरूपितम् ॥
ओंकारदृष्ट्याचैकत्वन्त्रयाणा सन्धितोभवेत् ।
कैवलानांत्रयेतु पृथक्त्वं परिकल्प्यते ॥
अयमेव हि संसारस्त्रितयो यश्च भासते ।
संसार एव ब्रह्मेतिचैकरूपन्तदुच्यते ॥
अतस्तपस्विनाश्चैव योगिनां ज्ञानिनामपि ।
संसारविज्ञानमेव स्वर्गतेस्साधनं भवेत् ॥
सर्वस्यैव हि सर्वत्र स्थितत्वाद्भासतश्च हि ।
विषयान्तरभेदो हि युक्तो नैवात्र विद्यते ॥

विषयस्यापि भेदस्य सिद्धान्तस्यापि वा पुनः ।
निरूपणं हि सर्वं स्याद्भ्रममूलकमेव च ॥
अतो हि समभावेन सर्वं ज्ञेयं मुमुक्षुभिः ।
स्यादेवं हि समो भावः सर्वश्चात्मा भवेत्तथा ॥
आत्मा भवति सर्वोऽपि चेति श्रुतिमुखोदितम् ।
दानोपदेशवचनादपि भेदो न सांप्रतम् ॥
तथैवावस्थितेस्तस्य भ्रमत्यागो हि तत्फलम् ।
तदुपकारकरणङ्केवलं भवहेतुकम् ॥
क्षमादिकर्तृभेदो हि संसारान्नैव चात्मनः ।
तथा निरूपणाद्भेदत्याग एव प्रदर्शितः ॥
तं सर्वं खल्विदं ब्रह्मेत्याह श्रुतिरपि स्वयम् ।
प्रकारस्सर्वशब्दार्थस्सच ब्रह्मेति निश्चयः ॥
त्यागग्रहणयोरेवमभेदो न च भेदधीः ।
त्याज्योप्यन्यस्य भवति ग्राह्य एवेति निश्चयात् ॥
स्वर्गादिलोकदृष्टेश्च पुण्यपापधियः पुनः ।
यो भेदः कल्प्यते सोऽयं नास्ति सर्वं हि कर्मजम् ॥
सर्वं हि सममेवस्यात्सर्वञ्चावश्यकं भवेत् ।
ब्रह्मादिलोकास्सर्वेऽपि संसाराख्या भवन्ति हि ॥
न हिंसया रक्षणेन भेदश्चैवं हि दृश्यते ।

उभे च प्राकृते वेद्ये दृश्यते सर्वथा भवः ॥
भिन्नस्वरूपव्यापारैस्संसारेऽस्मिश्च भान्ति हि ।
प्रशस्तान्यप्रशस्तानि कर्माणीति मुनेर्मतम् ॥
ततोऽज्ञानी न च ज्ञानी रोग्यरोगी भवेन्नच ।
मान्योऽमान्यस्सुखी दुःखी स्वर्गी न नरकी तथा ॥
दण्ड्योऽदण्ड्यस्स्वयं नैव ह्यभेदोऽत्र सुनिश्चितः ।
इदमेव फलं सन्धिविज्ञानस्येति निर्णयः ॥
संसारव्यवहारस्तु द्रष्टव्यश्चेत्थमेव हि ।
सहारंभावसानाभ्यां संसारः परिदृश्यते ॥
तस्यारंभस्त्वात्मनस्स्यादवसानं स्वतो भवेत् ।
संबन्धस्य निषेधस्तु तयोर्ब्रह्मधिया मतः ॥
कालभेदेन संसारव्यवहारो हि जायते ।
एकः कालो हि सर्वस्य कालभेदो न कश्चन ॥
केवलं कार्यभेदेन त्रिधा भूतस्सलक्ष्यते ।
आत्मानात्मनिषिद्धानां यथाऽभेदः प्रदर्शितः ॥
कालत्रयाणां भवति तथाऽभेदस्सनातनः ।
एवं हि संस्थितिस्तस्य कालस्य प्रणवेक्षणात् ॥
आत्मा स्याद्वर्तमानश्च सर्वस्थस्सर्वमूलकः ।
भविष्यस्स्याद्धि संसारः निषिद्धो भूतरूपवान् ॥

सति कालस्य चैकत्वे विभागस्तु लयार्थकः ।
त्रित्वन्तु संसृतेरेव चैकत्वं ब्रह्मणि स्थितम् ॥
त्रितयस्यावश्यकत्वाद्ब्रह्मणो हि स्वभावतः ।
उक्तः कालविभागोयमारंभाच्चावसानतः ॥
संसारस्य क्रमश्चायं कालो भवति नान्यथा ।
तस्मात्क्रमो हि त्रितयः सर्वत्र परिदृश्यते ॥
अकारोकारमकारैस्त्रिभिश्शब्दैरयं क्रमः ।
त्रितयो भासते दृष्ट्या संसारस्य न वस्तुतः ॥
संख्याशब्देष्वेवमेव भवेत्त्रितयधीरियम् ।
एकोऽस्यात्मा द्वितीयश्च संसारः परिदृश्यते ॥
तृतीयस्यान्निषिद्धश्च कारणन्त्रितयस्य हि ।
शून्यं भवति चाङ्कानां स्यातां वृद्धिक्षयौ ततः ॥
वृद्धिक्षयाभ्यां सर्वेषामङ्कानां कालभेदधीः ।
तस्माच्छून्यं परं ब्रह्म सर्वकारणमुच्यते ॥
परस्पराधिकरणे कालसंख्ये मते च ते ।
व्याख्यातस्तु मिळित्वा हि द्वन्द्वधर्माश्च संसृतेः ॥
क्रमस्संख्या च कालश्च व्यष्टिप्रणवबोधितः ।
समष्ट्योङ्कारतस्त्वेषामेकत्वं हि सुनिश्चितम् ॥
त्रित्वैकत्वे च सर्वेषामेवं वेद्ये मुमुक्षुभिः ।

तदेकत्वपरिज्ञानं त्रित्वविज्ञानमूलकम् ॥
एवङ्कालविभागेन ज्ञानन्त्रिविधमुच्यते ।
प्रत्यक्षमनुमानञ्च निर्णयश्चेति तद्भवेत् ॥
तद्वर्तमानो भूतश्च भविष्यंश्चेति तत्र हि ।
आत्मानात्मनिषेधानामन्वयश्चेत्थमेव हि ॥
आत्मदृष्टया ह्यात्मनश्च प्रत्यक्षमुपजायते ।
निषिद्धस्यानुमानं स्यात्संसारस्य हि निर्णयः ॥
संसारस्य स्वदृष्टया तु प्रत्यक्षं नियतं भवेत् ।
निषिद्धस्यानुमानं स्यान्निर्णयश्चात्मनो मतः ॥
वस्तुतस्तु भवेत्सर्वमेकं प्रत्यक्षमुच्यते ।
प्रत्यक्षन्तु भवेद्ब्रह्म तद्विज्ञेयं मुमुक्षुभिः ॥
तस्मात्त्रयात्मकं ज्ञानं यच्च सर्वसमाश्रितम् ।
तन्निश्चयज्ञानरूपमेकमोमिति बुध्यते ॥
एवं स्यात्कामनाकाङ्क्षेच्छानां योगः परस्परम् ।
नियमेन स विज्ञेयो भूतस्य च भविष्यतः ॥
तथा च वर्तमानस्य क्रमेणैवैभ्य एव हि ।
कामादयः प्रजायन्ते चेयमेव हि संसृतिः ॥
स्यात्सङ्कल्पो विकल्पश्च सोऽनुकल्पस्तथापरः ।
ओमित्येतद्धि सङ्कल्पो विकल्पः प्रणवाभिधः ॥

अनुकल्पस्तथा नित्यं सर्वाद्यो मध्यमोन्तिमः ।
विचारानतिरिक्ताश्च सङ्कल्पाद्या भवन्ति हि ॥
यया निश्चीयते सर्वं सा शक्तिर्बुद्धिरुच्यते ।
बुद्धिकार्यो विचारस्स्याद्विचारो निश्चयार्थकः ॥
शक्तिर्बुद्धिरबुद्धीति सुधीश्चेति त्रिधा मता ।
सर्वासामेकरूपत्वं कार्यकारणतो भवेत् ॥
शक्तिमूलाश्च सर्वेऽपि व्यवहारा भवन्ति च ।
व्यवहार्यास्त्रयः प्रोक्ताश्चैकस्यात्परमार्थतः ॥
एवं हि त्रिविधा धर्माः प्रोक्ताश्चात्र महर्षिणा ।
अनेके तत्र च मया दिङ्मात्रमिह दर्शिताः ॥
ब्रह्मणो हि स्वभावास्स्युः प्रकारास्त्रितयात्मकाः ।
ते चानन्तक्रमास्सन्ति तेषां योगो हि शाश्वतः ॥
द्वाभ्यां प्रणवरूपाभ्यामुक्तस्साङ्गो महर्षिणा ।
मुमुक्षुभिश्च विज्ञेयो धर्मोऽयं हि सनातनः ॥

॥ इति योगानन्दविरचितायाम् ॥
॥ प्रणववादार्थदीपिकायाम् ॥
॥ द्वितीयोऽध्यायः ॥

ॐ



ॐ

## ॥ अथ तृतीयोऽध्यायः ॥



तृतीयेऽस्मिन्प्रकरणे गार्ग्यायणमहर्षिणा ।
प्रकारयोगविज्ञानफलं साङ्गं निरूप्यते ॥
स च प्रकारयोगस्तु ज्ञानेच्छाख्यानरूपकः ।
क्रिया प्रकारयोगस्य फलं साऽतोऽत्र चोच्यते ॥
अकारोकारमकारैः प्रणवस्थैस्त्रिभिः पुनः ।
तज्ज्ञानेच्छाक्रियाश्चैवं प्रोक्तास्सन्ति क्रमेण हि ॥
क्रिया तु कारणीभूतव्यापार इति निश्चयः ।
तस्य कर्तुः क्रियायोगेनैव सर्वं प्रभासते ॥
स्याज्ज्ञानेच्छाक्रियाणाञ्च प्रत्येकं त्रितयक्रमः ।
ज्ञाने हि स्मरणादिश्च व्यापारः परिकथ्यते ॥
व्यापारः कामनादिः स्यादिच्छायां परिकथ्यते ।
क्रियानिष्ठः कर्तृकरणव्यापारस्तथाभवेत् ॥

आत्मानात्मनिषिद्धानामवस्थाभेदतश्च हि ।
कथ्यते नामभेदोऽपि वृत्तिस्स्यान्नयथा ततः ॥
अस्मिंश्च प्रथमे चोक्तन्तरङ्गे गार्ग्यसूनुना ।
साङ्गोपाङ्गस्य वेदस्य लक्षणञ्च तथा पुनः ॥
तदध्येतृस्वरूपञ्च तदध्ययनमुख्यता ।
तद्वेदाध्ययनफलं तद्विज्ञानक्रमस्तथा ॥
ऋग्वेदोऽथ यजुर्वेदस्सामवेदस्तथापरः ।
अथर्वोचचतुर्थस्स्यादिति वेदा भवन्ति हि ॥
ऋग्यजुस्सामाथर्वणो ज्ञात्वा ब्रह्म सनातनम् ।
आत्मानात्मनिषिद्धञ्च पृथक्त्वं त्रितयक्रमम् ॥
चतुर्भिर्वेदनीयन्तद्ब्रह्मतत्वमनन्तरम् ।
अनाद्यनन्तं संपन्नं सर्वाद्यन्तविवर्जितम् ॥
अतीतं वानतीतं वा तत्त्वयं वेदविद्भवेत् । •
ऋग्वेदश्च ज्ञाननिष्ठः यजुर्वेदः क्रियापरः ॥
इच्छापरस्सामवेदस्सिद्धान्तोऽथर्वसंज्ञकः ।
चतुर्णां च समाहारः ब्रह्मसंज्ञा परावरा ॥
प्रत्यकं तत्र विज्ञेयं भ्रमदोषयुतान्तरम् ।
ऋग्वेदैर्वा यजुर्वेदस्तत्सामाथर्वभिस्तथा ॥
प्रत्येकं तान्निरर्थं स्याच्चतुर्भिर्ब्रह्म बुध्यते ।

ज्ञानेन कर्मणा सिद्धं ब्रह्मतत्वं तदिच्छया ॥
त्रयात्मकमिदं सर्वं तद्धि च ब्रह्म तद्भवेत् ।
ऋग्यजुस्सामाथर्वभिरेवं ज्ञानं निरूपितम् ॥
ज्ञात्वा वेदान्तसिद्धान्तं ब्रह्मरूपा भवन्तिते ।
वेदाधिकारिणस्सर्वे सर्वाश्रमनिवासिनः ॥
प्रथमं ब्रह्मचर्ये हि ब्रह्मतत्वनिरीक्षणम् ।
साङ्गोपाङ्गस्तथा ध्येयो ब्रह्मवेदश्चतुर्विधः ॥
त्यागार्थं ब्रह्मसिध्यर्थं गृहस्थाश्रमधारणम् ।
सर्ववेदफलञ्चैव स्वार्थं संत्यज्य मानसम् ॥
एवं परार्थं संत्यज्य परमार्थन्तु चिन्तयेत् ।
यत्स्वार्थं यत्परार्थञ्च ते स्याता बन्धनार्थके ॥
तस्मात्सर्वमुमुक्षूणां परमार्थः परायणः ।
इच्छारूपञ्च सर्वं हि वानप्रस्थाश्रमोचितम् ॥
समाहारज्ञानमेव धर्मस्सन्यासिनां परः ।
इदं साक्षाद्ब्रह्मरूपं सच्चिदानन्दविग्रहम् ॥
प्रणवेनहिविख्यात वेदितव्यं जगन्मयम् ।
त्यक्त्वा सर्वाणि कर्माणि नानाज्ञानावृतानिच ॥
इच्छारूपाणि संत्यज्य धार्यतां परमं पदम् ।
प्रमेयं ब्रह्म तत्तेजः कालातीतं जगन्मयम् ॥

द्वितीयेऽस्मिन्तरङ्गे तु वेदकर्तार एव च ।
ये संसाराधिपतयः लोकानाञ्च क्रमस्तथा ॥
साङ्गास्सर्वे च संप्रोक्ता गार्ग्यायणमहर्षिणा ।
महाविष्णुर्भवेत्सर्वकल्पादीना परः प्रभुः ॥
तस्माद्विष्णुस्सच ब्रह्मा शिवश्चैतेऽभवन्क्रमात् ।
एतैरेव त्रयो वेदास्समाख्यातास्स्वभावतः ॥
अथर्वणश्च वेदस्य महाविष्णुर्भवेत्पतिः ।
त्रयस्संसारपतयश्चैतेभ्यो विश्वसंस्थितिः ॥
लोकक्रमो ह्येवमेव बोध्यो कालविभागतः ।
यथाकालं हि लोकानां कर्मबुद्धिसमुद्भवः ॥
कृतत्रेता द्वापरश्च कलिश्चेति चतुयुगम् ।
कृतं युगं ज्ञाननिष्ठं त्रेता स्याच्च क्रियापरा ॥
द्वापरं कामनारूपं समाहारः कलिर्भवेत् ।
एवं कल्पो महाकल्पः त्रियुगोऽथ महायुगः ॥
एवञ्च क्रमनिष्ठञ्च तथा मन्वन्तरं पुनः ।
महामन्वन्तरञ्चेति कालभेदश्च कथ्यते ॥
तृतीयेऽस्मिन्तरङ्गे च गार्ग्यायणमहर्षिणा ।
महाविष्णुस्वभावश्च त्रिमूर्तीनाञ्च लक्षणम् ॥
सूर्यस्य तद्गतेश्चैव लोकमानं तथा पुनः ।

सप्तसप्त क्रमश्चैव तथा सर्वेश्वरक्रमः ॥
गायत्रीरूपविज्ञानं तपश्च परमन्तथा ।
निरूपितं यथातत्वं सर्वमेतदशेषतः ॥
स च प्रणवरूपस्स्यान्महाविष्णुर्जगन्मयः ।
तस्मादेव भवेत्सर्वं स वेदात्मापरः प्रभुः ॥
स्रष्टा च जगतां ब्रह्मा पाता स्याद्विष्णुरव्ययः ।
शिवस्संहारकर्ता च प्रतिष्ठा त्रिगुणात्मिका ॥
ओमित्यनेन शब्देन सर्वः कालोऽपि वेष्टितः ।
सर्वत्र भासते ब्रह्म पावनं भुवनत्रयम् ॥
गायत्री वेदमाता स्यान्महावाक्यं पिता भवेत् ।
अध्यापनञ्चाध्ययनमेषां स्यात्परमन्तपः ॥
सूर्यश्चन्द्रस्तथा भौमो बुधश्च धिषणो भृगुः ।
शनैश्चरश्च सप्तैते तत्सर्वं सौरमन्तरम् ॥
प्रत्येकमपि चैतेषा सप्तसप्तक्रमस्तथा ।
अनन्तश्चेति विज्ञेयस्तथा ब्रह्माण्डमुच्यते ॥
यथा सूर्यगतिर्हि स्यात्तथैव कालसंग्रहः ।
चतुर्थेऽस्मिन्तरङ्गे च मुनिना गार्ग्यसूनुना ॥
सव्याहृतिश्च गायत्री महावाक्यानि सर्वशः ।
वर्णाश्रमाणान्धर्मश्च महावाक्यभवस्तथा ॥

यथातत्वं यथान्यायं समस्तञ्च विचारितम् ।
स्याज्ज्ञानेच्छाक्रियाणाञ्च समाहारस्य वा पुनः ॥
व्याहृतिर्ज्ञापिका सा हि त्रिविधा सप्तधा भवेत् ।
ज्ञानमिच्छांक्रियाश्चैव समाहारश्च वा पुनः ॥
एकीकृत्य यतस्त्राति गायत्रीति तत श्श्रुता ।
समाहारपरा देवी गायत्री वेदवासिनी ॥
व्याहृतित्रययुक्ता च सर्वोपास्या भवेत्ततः ।
सप्तव्याहृतिभिर्युक्ता सा देवी प्रणवोद्भवा ॥
उपास्या योगिभिर्नित्यं प्राणायामविधानतः ।
ज्ञानादीनाञ्चतुर्णां हि षड्भिश्च गुणनेन तु ॥
चतुर्विंशत्यक्षरा स्याद्गायत्री त्रिपदा भवेत् ।
तदक्षरमितानिस्युर्महावाक्यानि तानि हि ॥
एतेषाञ्च परिज्ञानं ब्रह्माण्डव्यवसायदम् ।
महावाक्यस्य संख्या हि चानन्ता परिकथ्यते ॥
अहमेतन्नेति रूपं महावाक्यं सनातनम् ।
ओङ्कारविहितश्चैतत्सर्वेषामुत्तमं स्मृतम् ॥
वर्णाश्रमाणान्धर्मश्च ह्येवं योगेन बुध्यते ।
अहञ्च ब्रह्मचर्यं स्याद्गार्हस्थ्यञ्चाहमेतदा ॥
एतन्नेति वनस्थस्स्यात्सर्वतः पर एव सः ।

एतन्नाहं त्रिभिर्युक्तस्सन्यासश्चेति कथ्यते ॥
अहमेतन्नेति ज्ञानं ब्राह्मण्यं परिकीर्त्यते ।
अहमेतत्परिज्ञानात्क्षात्रियत्वञ्च लभ्यते ॥
एतन्नैवेति विज्ञानं स्याद्वैश्यस्याहि लक्षणम् ।
एतच्चैवमहं युक्तं भूतानाञ्चाभिषेवणम् ॥
एतदेवहि शूद्रत्वमेवं वर्णा विभान्ति हि ।
ऋचो यजूंषि सामानि तथैवाथर्वणानिच ॥
सर्वं स्यादहमेतन्नमहावाक्यगतं भवेत् ।
पञ्चमेऽस्मिन्तरङ्गे च गार्ग्यायणमहर्षिणा ॥
त्रिगुणात्मकसंसाररूपव्याख्यानपूर्वकम् ।
ऋग्वेदस्य स्वरूपं हि साङ्गं स्यादभिवर्णितम् ॥
त्रिविधञ्च जगत्सर्वं प्रकारैस्त्रिभिरन्वितम् ।
सात्विकं राजसञ्चैव तामसञ्च तथापरम् ॥
त्रयाणाञ्च समाहाराच्चतुर्थस्तादृशः क्रमः ।
अहमेतन्नेति योगाज्ज्ञानमिच्छा क्रिया तथा ॥
वेदितव्यं हि सर्वं स्यादृग्यजुस्सामसंज्ञकम् ।
अथर्वा तत्परो वेद्यः प्रकाराश्च तदन्वयाः ॥
वेद्यं स्यात्सात्विकैर्यच्च तदृग्वेदः प्रभाषते ।
राजसैर्यच्च वेद्यन्तद्यजुर्वेदेन कथ्यते ॥

तामसैश्चापि यद्वेद्यं तत्साम श्रुतिभाषितम् ।
त्रयाणां यस्समाहारस्संयोगाद्युपपत्तिता ॥
अथर्ववेदनिष्ठैवं सर्वसंघातनिश्चयात ।
ज्ञानविद्याञ्च ऋग्वेदाद्ब्रह्मचर्यविभाविताम् ॥
यजुर्वेदेन गार्हस्थ्यं वानप्रस्थन्तु सामतः ।
सन्यासोऽथर्ववेदेन ब्रह्मतत्वमिदं भवेत् ॥
द्विधा विद्या समाख्याता ज्ञाननिष्ठा क्रियापरा ।
ताभ्यां भिन्ना महाविद्याऽहमेतन्नेति संज्ञिका ॥
एषा प्रणवमात्रेण ऋग्वेदस्था विधीयते ।
स्वयं हि विष्णुना दत्तो ऋग्वेदो ज्ञानगोचरः ॥
अथर्वज्येष्ठपुत्राय ददौ ब्रह्मा क्रियापरः ।
तस्माज्ज्ञानस्वरूपश्च ऋग्वेदो ब्रह्मसंमितः ॥
विज्ञेयश्च सदा युक्तश्चतुर्विंशतिमण्डलैः ।
षष्ठे चास्मिन्तरङ्गे च यजुर्वेदः क्रियापरः ॥
वर्ण्यते ब्रह्मणा प्रोक्तः सरहस्यं महर्षिणा ।
सृष्टिस्थितिलयानाञ्च त्रयाणां हि परस्परम् ॥
कार्यकारणभावश्च बोध्यो विज्ञानिभिस्सदा ।
प्रत्येकमप्यणूनां हि क्रिया चास्ति स्वभावतः ॥
तेषां हिरण्यगर्भेण संसारः क्रियतेऽनिशम् ।

न मोक्षः कश्चिदर्थश्च परिशिष्टस्वभाववान् ॥
सर्वत्र सर्वथा नित्यस्संसारः परिदृश्यते ।
आनन्दश्च तदन्तस्थस्तथा ब्रह्मस्वरूपधीः ॥
सर्वैश्च सर्वं भाव्यस्स्यात्क्रमेण नियमेन च ।
तस्माज्ज्ञानाक्रियेच्छानां तिसृणां संग्रहो मतः ॥
चतुर्थोपासको भूत्वा प्राप्नुयात्परमं पदम् ।
ऋते ज्ञानान्नमुक्तिस्स्याज्ज्ञानञ्च त्रितयात्मकम् ॥
अतो मोक्षस्य साध्यस्य ज्ञानं सत्साधनं परम् ।
सर्वार्थः क्रियतां यत्नः सर्वप्राप्तौ हि तुष्यतु ॥
इदमेव हि वैकुण्ठमेतदेव सुखास्पदम् ।
परितोषः परन्धाम पवित्रं प्रणवामृतम् ॥
अश्वमेधादियज्ञाश्च ज्ञानमूला भवन्ति हि ।
तथा च सर्वसंस्काराष्षोडश प्रणवोदिताः ॥
संस्कारेण विशुद्धानां ब्रह्मभावः प्रजायते ।
सप्तमेऽस्मिन्तरङ्गे च सामवेदो महर्षिणा ॥
इच्छानिष्ठश्शिवेनोक्तस्सप्रकारो निरूपितः ।
आत्मानात्मनोस्संबन्धस्वरूपेच्छा भवेदसौ ॥
ब्राह्मी शक्तिर्भवेदिच्छा स्यात्संबन्धस्तया कृतः ।
अनेकनामरूपा च प्रणवस्था पराऽपरा ॥

जगज्जन्मादिकर्त्री सा पुरुषार्थप्रदा भवेत् ।
सामवेदपरो ब्रह्म चोपास्ते हि सशक्तिकम् ॥
भक्त्या परमया नित्यं स्तोत्रप्रपदनादिभिः ।
तरङ्गे चाष्टमे चास्मिन्नथर्वा च महर्षिणा ॥
समाहारार्थकस्सम्यक्सतत्वश्च विचारितः ।
योऽथर्ववेदविद्यावान्परित्यज्याऽपरां मतिम् ॥
भिन्नां स च ब्रह्मरूपमुपास्ते निरुपाधिकम् ।
ज्ञानेच्छाकर्मणां चैव कृत्वा संहारमुत्तमम् ॥
सनातनं सर्वमूलमात्मानं ब्रह्मरूपिणम् ।
उपासमानस्तद्ब्रह्म चातीतमिति निर्णयेत् ॥
अथर्ववेदसंसिद्धः प्राप्नोति परमं पदम् ।
नवमेऽस्मिन्तरङ्गे च गार्ग्यायणमहर्षिणा ॥
निरूप्यन्ते चतुर्णां हि वेदानां ब्राह्मणानि च ।
जगत्कर्तुर्महाविष्णोस्स्वरूपन्तत्पदस्य च ॥
चत्वारि च ब्राह्मणानि प्रतिवेदं भवन्ति हि ।
ऋग्वेदस्य च चत्वारि ब्राह्मणानि तथा पुनः ॥
यजुर्वेदस्य च तथा साम्नश्चाथर्वणश्च हि ।
ज्ञानादीनां चतुर्णां हि स्वरूपं ब्राह्मणानि च ॥
व्याचक्षते यथा तत्वं बोध्यान्येतानि मानुषैः ।

महावेदाध्ययनतो महाविष्णुर्जगत्प्रभुः ॥
संप्राप्य ब्रह्मभावं हि संसारं सृजति स्वयम् ।
प्रपन्नो निर्मलावस्थां शयानश्शेषसत्पदे ॥
स्वेच्छया च महालक्ष्म्या सहितस्सपरः पुमान् ।
तस्मात्त्रिमूर्तयस्सर्वे स्वस्वकार्यप्रवर्त्तकाः ॥
संभवन्ति ततस्तैश्च लोकास्सर्वेऽपि तादृशाः ।
अन्विताास्तत्कर्मभिश्च तस्मादेवं मुमुक्षुभिः ॥
अधिकारपुरुषाणां रूपन्तत्कर्मणामपि ।
विज्ञाय स्वानुरूपाणि कर्मकार्यमिति स्थितिः ॥
एवं प्रणववादेऽस्मिन्भागस्य प्रथमस्य हि ।
संक्षेपेण मया ह्यर्थः कारिकाभिः प्रकाशितः ॥

॥ इति स्वामि योगानन्दविरचितायां ॥
॥ प्रणववादार्थदीपिकायां ॥
॥ तृतीयोऽध्यायः ॥





॥ महर्षि गार्ग्यायण प्रणीतः ॥

# प्रणव वादः

॥ तत्र ॥

## ॥ प्रथमम् ॥

प्रकृतिसन्धिं प्रकरणम् ॥



परमेष्ठिने परेशो समस्तावासभूमये ।
सर्वातीतस्वरूपाय सर्वाधिष्ठितमूर्तये ॥
सर्वकर्त्रे च जगतां सर्वेषामन्तरात्मने ।
सर्ववाचक वाच्याय परस्मै ब्रह्मणे नमः ॥

अत्र हि—सर्वमिदं जगन्मायया विरचितम्, येन येन नियमेन क्रमेण कालदेशक्रियापरस्परसंबन्धः, संयोगवियोगौ, व्यवसायात्मधारणक्षमाधृतिशान्तिभक्तिकर्मोपासनाज्ञानविधिः, कर्म,

तत्प्राप्यफलस्वरूपम्, तत्तत्स्थाननियोजितपदार्थयाथार्थ्यम्, कार्यकारणकर्तृप्रयोजनसंबन्धः, शक्तिसामर्थ्यम्, साध्यासाध्ये, उत्पत्तिस्थितिलयकारणम्, प्रकृतिविकृत्यादितत्त्वम्, पञ्चभूतानि, जीवात्मस्वभावः, परमात्माभिदेशः, व्याप्यव्याप्तिव्यापकाव्यापकम्, आवश्यकानावश्यकम्, ध्येयध्यानपदार्थः, सद्गतिदुर्गतिविशेषः, इन्द्रियगोचरम्, विज्ञानगम्यञ्च भवति; एतत्सर्वार्थप्रतिपादकं परं सर्वाश्रयं समष्टिव्यष्टिस्वरूपं प्रणवसंज्ञमोमित्यनादिशब्दस्वरूपम्, सर्वसिद्धान्तसमन्वयपूर्वकम्, संक्षिप्तं विस्तृतञ्च व्याख्यास्यामः ।

तत्र तावत्प्रथममनुक्रमणिका निरूप्यते, ग्रन्थान्तर्गतविषयाणां परस्परसंबन्धबोधार्थम्। नैव हि युज्यतेऽस्य प्रणवशास्त्रस्य ग्रन्थानामादौ निरूपणीया भूमिका, अनाद्यनन्तत्वात्सार्वत्रिकत्वाच्च तस्य। अथ सूचनीयः किल ग्रन्थादौ विषयसंग्रहेण, तथैव हि ग्रन्थकाराः; मैवम्, ओमित्येतस्य प्रणवस्यानाद्यनन्तत्वसर्वशास्त्रमूलभूतत्वसर्वबीजत्वसर्ववाचकत्वसर्वविषयकत्वानां प्रतीतेः सर्वशास्त्रस्वरूपत्वाच्च ।

तत्रादौ योगविभागो निरूपितो भवति। अकारश्च तावदात्मबोधको भवति। अतस्तदाख्यानं प्रथमम्, तदैक्यविरोधेन तस्मादेव सर्वेषां संजायमानत्वात्। अथ चैवं हि प्रथमं महावा-

ऋयम्—"अहमेतन्न" इति प्रतिपादनीयमस्तीति चेत्, मैवं, प्रणवा-न्तर्गतत्वात्तस्य। प्रणवाख्यानान्तर्गतं तदाख्यानं बोध्यं भवति। अहमेतन्नेत्यस्य तु प्रणवसान्निधाने परिमितत्वं विज्ञायते। तस्मा-दपरिमितस्वरूपप्रणव एवात्रपूर्वमाख्येयः। सति च तस्मिन्नेव परिमितस्य अहमेतन्नेत्यस्य व्याख्यानमुचितम्। यद्यपि परिमितेनैव व्याख्यानमुचितम्, तथापि परिमितस्यापरिमितैक्यविरोधात्, सादृश्यादपरिमिताख्यानेन महावाक्यस्य व्याख्येयत्वाच्च नदोषः। अत एव तस्मिन्महावाक्येऽपि अकारसाधर्म्यादहमः पूर्वत्वं विज्ञा-यते। तस्मादोमित्यन्तर्गतं महावाक्यं भवति। न चैव योगे पूर्वापर-नियमस्त्याज्यः सर्वस्य सर्वान्तर्यमप्यस्तीति वाच्यम्, क्रमिकान्वा-ख्यानेन पूर्वापरनियमकल्पनौचित्यसंभवात्। अतोऽत्र पूर्वमात्मा-र्थकोऽकारः ततोऽनात्मार्थक उकारः ततस्तयोरैक्यार्थको मकारश्च व्याख्येयः। परस्परसापेक्षत्वेऽपि प्रथमं पृथक्सिद्धेनानुभवेन तथोपादानं भवति।

तथा पृथगनुभूतानामन्योन्यसापेक्षतया परस्परसंबन्ध नैयत्येन पृथग्भावलयस्यावश्यकत्वात्तद्वाचकम्, इ इति पदं संश्लि-ष्टमत्र भवतीति बुध्यते। अत एव हि लोके ज्ञानेच्छाक्रिया-त्रितयं संश्लिष्टं समाहारेणैवाव्यवहितं भवति। अतोऽत्र समाहा-रेऽपि च प्रणववाच्यो भवति। अत एव "बीजाज्ञानञ्च तत्कर्म

तदिच्छा मोक्षसाधनम्''इत्याद्युक्तम्। तद्व्याख्याने च त्रयाणां समाहारेणैव तद्भवनमित्यादि स्पष्टमुक्तं भवति। तदेतत्त्रितयस्य संसारेऽस्तित्व प्रदर्शनाय तदुचितयावद्ग्रन्थेन, कालनियमेन चैतद्ग्रन्थनिरूपणमिति बोध्यम्। एतदात्मानात्मनिषेधप्रवचनान्तर्गता हि ज्ञानेच्छाक्रियासमाहारः। तस्मादेतदनुक्रमणिका अकारोकारमकारप्रकृतिसन्धिप्रकरणान्तर्गतैवेति बोध्यम्।

तदोमित्येकाक्षरं प्रथमं भवति। यस्य च नार्थः, न प्रवचनम्, न प्रतिवचनम्, न निर्धारणम्, नाद्यन्तम्, यच्च नानाद्यनन्तम्, नोत्तरं पूर्वम्, न च परोत्तरम्, नोर्ध्वम्, न चाधः, न बाह्यमध्यम्, न चान्तर्गतम्, न स्वतस्सिद्धम्, न कारणप्रसिद्धम्, न चाप्रसिद्धम्, न सामान्यविशेषञ्च, न साधारणम्, न चासाधारणम्, तत्सर्वदा निश्शब्दम्, ब्रह्मस्वरूपम्, तज्जगदनन्तर्मिवातीत्यैव भवति।

अथ जगदुदाहरणत्वमप्यनुपपन्नम्। देशकालक्रियाविशिष्टं हि जगद्भवति। तदर्थकाश्शब्दाश्च वर्तन्त इति चेत्, मैवम्; यावद्वाक्परिणामः, बुद्धिपरिणामः, सर्वपरिणामश्च, तावदपरिमितानुभवे शब्दाशब्दसंघाते, तदुदाहरणस्य योग्यत्वात्। तथा च ब्रह्मस्वरूपम्, सर्वानुभूतपरिमितजगत्स्वरूपम्, तदतीतञ्च भवतीति ज्ञायते। तदित्थमोमित्येकाक्षरं विभाती-

तिबोध्यम्। तच्च परावरेभ्यः महाविष्ण्वादिभ्यः ततः परोत्तरेभ्यः महद्भ्यः महत्तमेभ्यश्च सर्वेभ्योऽतीतत्वादविज्ञेयम् ।

तद्धि सर्वेऽप्येवं विचारयन्ति विचरन्ति च किमिदम्, इत्थम्, कथंवा, किमस्य पूर्वं परं वा इत्यादिविभावनयैव । न चान्यथा, सर्वातीततया तद्विचारस्यायुक्तत्वात् । न चात्र संसारे परादपरे परावरे चातीते सत्यपि, क्रमस्य विद्यमानत्वेन विज्ञेयं हि भवति पौर्वापर्यमित्यवधार्य, सर्वविचारेण एतदतीतस्यैव च पूर्वापराभिभिन्नस्य लाभो भवतीति वाच्यम्, तत्र पूर्वापरानुसन्धानकरणस्य क्रमस्य स्वप्राधान्यपरत्वादिति बोध्यम्। यत्र यस्य वाग्विरामः, बुद्धिविरामः पूर्वस्मिन्परस्मिन्नपि, तस्य तत्र स्वकृतपौर्वापर्यं नियतमस्ति । तादृशनियमेन स्वकार्यमनुसन्धयति । एवमेव सर्वत्र । अत्र सर्वत्रेदं बोध्यम् । योऽयमात्मा स तादृशस्वभावातीतः, तदैक्यविरोधात् । नानात्वमपि तादृशम् । तस्मात्परिमितापरिमितं सर्वत्र निरर्थकं भवति । सामान्यमुद्भवनं तु तादृशं स्वानुभूतमभेदपरञ्चेति विज्ञायते । तस्मात्सर्वस्याप्यणोः अहमेतदित्यंशाभ्यामकारोकारवाच्याभ्यामात्मानात्मभ्याञ्चैक्यविरोधिभ्यां सर्वातीतत्वं भवति । तस्मात्सर्वत्रान्तर्यं सिद्धं भवति । अथैवमप्यभिधानेऽपि क्रमस्य सत्त्वेन अस्मादेवारम्भः, अत्रैवावसानमिति वक्तुं शक्येत, नैवम्, अस्मादप्यारम्भः अत्राप्यव-

सानमिति प्रतिवचनस्यापि सत्त्वात् आरम्भावसानयोर्लोकासि-
द्धत्वाच्च । इदं हि शास्त्रम्, एतद्व्यवहिताव्यवहितम्, परम्,
अतीतं प्रधानाप्रधानरूपम्, जगदशेषमेव ब्रह्मेतीत्थं प्रतिपाद-
यति । तस्मादोमित्यस्य विज्ञाने ह्यणुमात्राणामपि सर्वेषामधि-
कारः सिद्धो भवति । स्वस्वसामर्थ्येनैवात्र तु क्रमनियमः कर्तव्यः।
परं त्वेतत्त्रितयक्रमः अकारोकारमकाराख्यानरूपः । पूर्वं शिष्टप-
रंपरोपदिष्ट एवायं क्रमः सनातनः। यद्यप्यस्माकमधिकारो नास्ति
एतदित्थमेवेति वक्तव्ये, तथापि शिष्टपरंपरासमुपलब्धेन सर्वा-
भिमतसंग्रहेण चायं ज्ञातव्यः । महाविष्णोरपि परादपरेण सा-
मान्यपरंपरया पूर्वमकारः, ततो वर्णाः, ततश्शब्दाः, तत्र च
पूर्वमोमिति चावगतं भवति । अत एवात्र शास्त्राणामप्यादौ
ओकाराभिधानम् । अत एव च सर्वस्मात्प्रणवशास्त्रं पूर्वमध्ये-
यमिति सर्वैरभिहितं भवति । तस्मान्नयुज्यते ग्रन्थारम्भः ओमित्ये-
तद्विना । तस्मादोमितीदमेतादृशक्रमं पृथगनुभूतम्, तत्संबन्धि,
संबन्धश्चाध्येयं भवति । अतः प्रथम प्रकृतिसन्धिप्रकरणं भवति ।
अथ युज्यते ह्युपलब्धस्यैव व्याख्यानम्, नानुपलब्धस्य, अनु-
पलब्धश्च प्रकृतिक्रमः, कथमेतद्युज्यत इति चेत्, उच्यते,
सन्धये पृथगुपस्थितिर्हि हेतुर्भवति । अतोऽत्र प्रकृतिसन्धिप्रक-
रणे प्रथमं प्रकृतिक्रमनिरूपणम्, ततस्सन्धिरिति विषय क्रमविधिः।

अनन्तरं प्रकारयोगप्रकरणम्। तत्र च येन येन कारणेन, स्वभावेन च, सर्वपदार्थेषु परस्परसापेक्षता भवति, तदाख्यानम्। सर्वमेतत्संसार एव योगेनैव भवति। योगे च क्रमस्यावश्यकत्वात्, क्रमे च प्रकाराभिधानस्यावश्यकत्वाच्च, प्रकृतिसन्धि प्रकरणस्यप्राथमिकत्वेनावश्यकत्वम्। तस्मादनंतरं प्रकारयोगप्रकरणं द्वितीयमाख्यातम्। एतेन प्रकरणद्वये च ज्ञानमात्रम्, इच्छामात्रञ्च सामान्येनोक्तं भवति।

अनन्तरं क्रियानुषिद्धं प्रकरणं तृतीयम्। अत्र च सर्वेषां ज्ञानादीनां समाहारः। ज्ञानेच्छे च विना क्रियाया असंभवस्य न्यायसिद्धतया क्रियाप्रकरणे सर्वेषां यथावन्निरूपणम्। अत्रैव चात्मानात्मनिषेधाभिधाने, प्रथमं ज्ञानम्, आत्मसमवेतत्वात्। ततश्चेच्छा, निषेधाभ्युपहितत्वात्, तस्य संबन्धरूपत्वाद्वा। ततः क्रिया, तस्यास्तत्फलत्वात्। अत एव ताभ्यां तस्याः परत्वेन निरूपणम्। तस्मादत्र क्रियाप्रकरणे सर्वसाधारणं क्रियान्तरम्, ज्ञानादिकम्, शास्त्रावश्यकत्वम्, तदुद्भवनक्रमः, तदुत्पत्तिकर्ता, तदिच्छाविषयकं च सर्वं यथायथमाख्यातम्। तत्रैव परिमितत्वापरिमितत्वविभावनायास्सर्वेषां बीजभूतत्वं प्रदर्शितं भवति। एतदन्तरेहि क्रियाप्रतिक्रियाव्यवहारः, कर्तृकरणकर्मप्रयोजनं चाख्यातं भवति। तत्र पूर्वं ज्ञानमात्रबोधकोमित्यारभ्य गायत्री-

स्वरूपम्, महावाक्यम्, चातुर्वेद्यम्, तदङ्गानि, तदुपाङ्गानि, तद्विभागश्च यथायथं प्रदर्शितं भवति । एवमभिधाय च तत्रैव या वा क्रियान्तर्वर्तिनी क्रिया,संबन्धानुभाविनी भाव्यपरा, सा प्रदर्शिता भवति। तदनुसारेणैव सर्वसंख्यामात्रस्य यथायथमाख्यानम्। अनेनैव हेतुना तत्त्वसप्तकस्य, तद्गुणानाम्, तत्कर्मणाञ्च,निवर्तन-परिवर्तनानुवर्तनसंपरिवर्तनानि च यथायथमाख्यातानि । ततः परं क्रियामात्रस्य प्रलयोऽपि चाख्यातो भवति। अत्रैव च निष्क्रिये क्रियोद्भवनम्, पुनर्निष्क्रियात्वञ्च यथायथमुक्तम् । इदञ्च सर्वं क्रियाप्रकरणान्तर्गतं वेदितव्यम् । तदित्थं प्रकरणत्रयं अकारोकारमकारानुभूतम्, "अहमेतन्न" इति महावाक्यार्थबोधकंप्रसिद्धमुक्तं भवति। यद्यप्यत्र क्रियाप्रकरणे पूर्वस्मिन्प्रकरणद्वये चावान्तरप्रकरणमनेकम्, अलं सिद्धान्तेत्यादिशब्दमण्डितमास्ति; तथापि सर्वसमाहारस्य संसाररूपत्वेन तस्यैव मुख्यतया, तदङ्गत्वेन तथा प्रपचनपरमवान्तरप्रकरणं भवति। तदपि संसारबोधकं भवतीति बोध्यम्। अवान्तरसंज्ञापि समाहारस्यैवेति सर्वत्र विज्ञायते, यथा—आकाशस्यावान्तरो वायुरिति वचनम् । एवमेव सर्वसमाहारे सर्वस्यापि पृथगनुभूतस्य, अलंसिद्धान्त इति शब्दाभ्यामवान्तरं प्रकरणं सूचितं भवति । क्रियाप्रकरणे हि चैतस्मिन्सृष्टचैकदेशिकम्, मन्तव्यामन्तव्यम्, मुक्तिसाधनश्चेति प्रकरणत्रयमास्ति।

सृष्टयैकदेशिकञ्च, ब्रह्माण्डस्थविषयाणाम्, धातुवृक्षपशू-नाम्, तच्चित्राणाम्, तद्योगसामान्योपजातानाम्, चन्द्रात्मादीनाम्, ततो मानवानाम्, तच्छरीराद्युपकल्पनसाधारणानाम्, तच्चित्राद्युप-हितानाञ्च, यथायथमाख्यानमत्र भवति। धात्वादेः पूर्वमपि सूक्ष्मसर्जनमस्ति। तदाख्यानन्तु निर्देशमात्रम्, तच्च मन्दप्रयो-जनतया नेहोपन्यस्तम्। यद्यप्यत्र धात्वादीनां सत्तानामपि सवि-स्तरमाख्यानमनुपन्यस्तम्, तथापि साक्षादनुभवेन सामान्यबोध-नाय सर्वपरिचितत्वादेवमुक्तम्।

एवमेव च मन्तव्यामन्तव्यप्रकरणे, अस्तित्वनास्तित्वयोः सर्वातीतानतीतत्वयोश्च सर्वावश्यकत्वेन निर्धारणाय, यथायथमा-ख्यानं दृश्यते। मन्तव्यञ्च इदमित्थं कर्तव्यमिति, अमन्तव्यन्त्वनाव-श्यकम् "नेह किञ्चन" इत्यादिकं सूचितमत्र भवति। कार्यनियतपू-र्ववृत्तीनां सर्वेषामपि कारणानां, कार्याणाञ्च भेदोऽभेदोऽत्र च निरू-पितो भवति। एवमेव सर्वस्य स्वभावपरत्वम्, स्वभावे चैव सर्वे-षामन्तर्भाव इति च, सर्वस्य ब्रह्मबीजोपश्लिष्टत्वञ्च प्रदर्शितम्।

ततः परं मुक्तिसाधनप्रकरणम्। तत्र च सर्वेषामैक्यं यथायथमाख्यातमस्ति। यच्च किञ्चिदत्र विभाति, भाति, प्रति-भाति च; तेषां सामानाधिकरण्यम्, सर्वकर्मणामैकाधिकरण्यञ्च यथायथमुपन्यस्तम्। किञ्चात्र एतदो नत्वम्, अहमस्सार्वत्रिक-

त्वम्, सर्वस्य अहंत्वम्, अहमोऽप्यवाच्यत्वञ्च यथायथमुक्तम्। यद्यप्येतदः सर्वभेदोद्भवनं क्रियाप्रकरणादावाख्यातम्, तथापि सर्वस्य नकारपरत्वात् नकारेणैव मोक्षो वक्तुमुचितः। तस्मात्सर्वं 'नेति नेति' मोक्षस्वरूपमुक्तं भवति। यद्यपि सर्वस्य निषिद्धत्वेऽपि भवनप्रबन्धेन भाव्यतया सर्वं भवत्येव, कथं तर्हि सर्वस्य नत्वमिति शङ्क्यम्, तथापि निषेधस्त्वत्र सामानाधिकरण्यपरो बोध्यः। भाव्यपक्षेतु एतदो नत्वम्, नस्यापि नत्वं अहमेतदोरपि नत्वं एतदहमोरपि नत्वमित्येव भाव्यमित्याख्यातम्। तस्मान्नास्ति ब्रह्म, न च नास्ति, नास्त्यस्तीह न किञ्चिदित्यादिः मुक्तानामनुभवः। यद्यपि वास्तवपक्षे मुक्तो बद्धश्च न कश्चिदिति स्पष्टम्, तथापि क्रमान्तर्येण सत्यप्यतीतानन्तत्वे तदुद्भवनम्। तस्माच्च सर्वमेतत्, सर्वमहम्, नेति नेति प्रसिद्धो मोक्षः, परावरपरब्रह्मानुभवश्च अकारोकारमकारान्तरः, अकारोकारयोर्मत्वञ्चोपन्यस्तम्। इतीत्थञ्चषट्प्रकरणाभिहितः, परिवर्तनादिनियमाभ्युपहितः, समग्रसमाहाररूपश्च प्रणववादः प्रशस्तो भवति। अत्र हि प्रणवस्य नाम सर्वबुद्ध्यवगतपदार्थबीजत्वमाख्यातम्। तस्माद्विशेषणानां नकारेण प्रवचनम्। अत एव सर्वं मकारपरं वेदितव्यम्। तदित्थं श्लोकाः।

''प्रसिद्धं न किञ्चिन्नचैवाप्रसिद्धं नवा सर्वं सिद्धं न वाऽसर्वसिद्धम्।

समानं समानं न चैतत्प्रशस्तं नमोहं ह्यमोहं नमोहं स्वरूपम् ॥
नकारानकारं मकारस्वरूपं न चोङ्कारमोङ्कारमोङ्काररूपम् ।
स्वयं ब्रह्म सिद्धं न तन्नेत्यतीतं न चैवाहमेतत्स्वरूपं स्वरूपम् ॥
समात्मापि नैवं नचात्मापि नैवं ह्यनात्मापि नैवं निषेधश्च नैवन्।
न चैकं तथानेकसिद्धं स्वरूपं स्वयं ब्रह्मरूपं स्वयं ब्रह्मरूपम् ॥
विभिन्नं न भिन्नं न भिन्नप्रभिन्नं परब्रह्मरूपान्तरं रूपरूपम् ।
समानन्दमूलं समं सद्विभिन्नं परं ब्रह्मरूपान्तरंभावनीयम् ॥ "

तदित्थं मोक्षान्तरमप्यनुभवसिद्धं वादप्रतिवादरूपं साधारणं ओमित्यन्तर्गतं वेदितव्यमित्युपदेशफलम् । तदित्थं नकारात्मकं सर्वान्तराभिसिद्धं व्यवसायात्मकं तद्विभिन्नञ्च परं ब्रह्मेत्यनुक्रमणिका भवति ।

अथैतदावश्यकत्वञ्चेत्थम्—दृश्यतामिह सर्वं कार्यजातं सत्या ह्यावश्यकतायां तत्तत्कालनियतायां भवति, तदनुरोधेन चैतद्ग्रन्थनिर्माणावश्यकत्वं संभवतीति । इदञ्च ओमित्येकाक्षरं समस्तवाङ्मयबीजभूतं सर्वव्यापकम्, सर्वस्मादपि प्रथमम्, सर्वेषामपिशास्त्राणामाद्यमन्त्यम्, अनाद्यनन्तञ्च भवति । अतश्चैतन्माङ्गलिकं परमतत्त्वावबोधकम् प्रशस्तम् । अत एव चैतत् विद्यापारायणाद्विद्याभ्यासात्सर्वशास्त्रारम्भाच्च पूर्वमनुसन्धेयं भवति। अतश्चाध्येयमोमित्येकाक्षरं सार्थकं सर्वशास्त्राभ्यासात्पूर्वं भवति ।

शिष्टपरंपरागतोऽयं क्रमः । तन्नियमेन चैतदाख्यानमणोरणीयो महतो महीयश्चार्षमार्चितप्रणीतमभिवर्तते ।

प्रथमं प्रणवविवेचिनी शिक्षारूपा त्रिसहस्री पाठयितव्या । ततो यथाधिकारं विहितं शास्त्रं पाठयितव्यम् । ततो बालानां ज्ञानानुरोधेन प्रणवशास्त्रम्, तत्तत्कालिकाध्ययनविषयशास्त्रार्थसमन्वयेन पाठयितव्यमिति सर्वाभिमतं भवति। एवमेव हिसर्वहितैषिणो महात्मानो महर्षयश्च शास्त्रप्रवचनपराः प्रणवं व्याख्यान्ति । एतेन प्रणवशास्त्रस्य चैतादृशमनन्तत्वं सर्वशास्त्रार्थसमन्वयेन शास्त्राणा प्रणवस्य चैकग्रन्थत्वकल्पनम्, सर्वभेदैक्याय शिष्टानुमतं भवति । एवमेतद्ग्रन्थाध्ययनेन सर्वशास्त्रार्थसमन्वयेन चैक्ये सति, सर्वशास्त्रार्थनां परस्परार्थविरोधः कदापि न संभवतीत्यनुशिक्षितं भवति। विना चैतादृशं प्रणवशास्त्राध्ययनम्, सर्वस्मिन्विरोधसंभावनमपरिहार्यं भवेत् । तस्मात्सर्वशास्त्रैककण्ठ्येन प्रणवशास्त्रमध्येयम्, अध्यापयितव्यञ्च भवति। इदञ्चाध्ययनमध्यापनस्वरूपम्, विधिरत्नाकरे वेदार्थोपन्यासभूते प्रपञ्चितं भवति। यद्यपि तत्रार्चितग्रन्थानां तत्तत्क्रमोपन्यस्तानामेव सामानाधिकरण्यमव्यवहितत्वरूपं प्रपञ्चितम्; तथापि आर्चितग्रन्थानुरोधेनैवार्षग्रन्था भवन्तीत्यत आर्षग्रन्था अपि तत्परास्तादृशा एव, महतामृषीणां तत्तत्कालावश्यकज्ञानविशेषस्य सत्त्वात् तेषां सर्वाधिकाराच्चेति

ज्ञेयम् । तस्मात्प्रणवविवेचिनी प्रणवप्रभा प्रणवप्रदीपिकादयो ग्रन्थाः लघोरपि लघुतमाश्च कृता भवन्ति ।
ते च सर्वेषां पञ्चवर्षारम्भकालाद्यावदन्तं तत्तत्कालज्ञानानुगुणमुपन्यस्ता भवन्ति। एवं जन्मान्तरीय वृत्त्यापि ग्रन्थानाम्,ज्ञानानुरोधेन चोत्पत्तिर्भवति। किञ्चैवं ते च ग्रन्थाः कल्पस्य, युगस्य महामन्वन्तरस्यावान्तरमन्वन्तरस्य चानुगुणं विभागेन कल्पिता भवन्ति। तदेवं कालचक्रपरिभ्रमणव्यवस्थया प्रणवार्णवादयो ग्रन्थाश्च निर्मिता भवन्ति । इदञ्च प्रणवशास्त्रं षोडशसहस्रैर्ग्रन्थैः तत्तद्देशकालज्ञानानुगुणं महावाक्यविशिष्टं यावदावश्यकमाख्यातम् । यद्यपि मयि नैतादृशी प्रज्ञा , यथा प्रणवार्णवादिषु ग्रन्थेषु यथावत्सारपरिज्ञानं भवति; तथापि स्वानुभवेन चैतादृशसर्वशास्त्राध्ययनेन च यावदुपलब्धम्, प्राधान्यम्, परब्रह्मतत्वम्, वेदान्ताद्युपयुक्तम्, तावत्तदत्र प्रदर्शितमस्ति। इदमपि बालानां सामान्यज्ञानार्थं साधारणं वेदितव्यम् । एतदभावेऽन्यत्र महावाक्यविशिष्टस्य प्रणवशास्त्रस्यादर्शनेन चेदं शास्त्रं समारब्धम् । यद्यपि तादृशे बृहत्तमे ग्रन्थे तयोर्विशिष्टत्वम्, परस्पर संबन्धित्वञ्च प्रदर्शितमस्ति, तथापि बालानां तद्विशिष्टज्ञानस्य प्राधान्येन सुखबोधायास्यावश्यकत्वं भवति।

इदं प्रणवशास्त्रं सार्वत्रिकम्, न केवलं वेदान्तपरम्, न

मैमांसिकम् , न नैयायिकम् . न च वैशेषिकम्, न यौगिकम्, न सांख्यमिति ज्ञेयम् , सर्वस्यैतदन्तर्गतत्वात् । इदञ्च सर्वेषां वेदानाम्, तदङ्गोपाङ्गानां शास्त्राणाञ्च मूलं भवति । तस्मात्सर्वस्येदं मूलभूतमिति व्याख्यातम् । अत एवास्य सर्वशास्त्रबीजभूतत्वम् , सर्वस्वरूपत्वमनाद्यनन्तत्वञ्च सूचितं भवति। एतत्सर्वमपि विस्तरतः प्रणवार्णवे व्याख्यातमस्ति । अस्मिंश्च प्रणववादे सर्वप्रणव शास्त्रार्थस्य सत्त्वात् अन्येषामतिविस्तृतत्वाच्च, इदमेव प्रणववाद शास्त्रम् , सर्वप्रणवशास्त्रार्थसंग्राहकं महर्षिसम्मतं देवसम्मतञ्च भवतीति बालाना सुखबोधायोपन्यस्तम् । इदञ्च यथा बुद्धिविभवम् , यथानुभवम् , यथातत्त्वम् , अध्ययनाध्यापनविधया त्याज्योपादेयविवेकेन स्वीकार्यं भवति । इदञ्च प्रकरणम् एतद्ग्रन्थसर्वार्थसंग्राहकम्, सर्वप्रवेशायाख्यातम् । परब्रह्मस्वरूपविज्ञानायचेदं सर्वैरध्येयमित्यभ्यर्थये । वस्तुतस्तु तद्ब्रह्मस्वरूपमिदमित्थमिति न वक्तुं शक्यते । किन्तु स्वानुभवैकवेद्यं सर्वातीतं भवति ।

तद्यथा

' न सर्वं मकारं मकारानुभूतं न वेदान्तसिद्धं न मैमांसिकं स्यात् ।
न वै तद्विरुद्धं न च न्यायसिद्ध न वैशेषिकं तन्न योगप्रसिद्धम् ॥
न सांख्यावधेयं नचैवात्र संख्या सदा सर्वगं सत्यमोङ्कारूपम् ।
स्वयं ब्रह्म पूर्णं परं सत्यरूपं न मोहं. समं सर्वसर्वस्वरूपम् ॥

तदित्थं सर्वानुभवसम्मतम्, सर्वसमम्, सनातनम्, सिद्धान्ताभ्युपहितमिदं प्रणववादशास्त्रमेवं सर्वशिष्टपरंपरागतम्, परमावश्यकत्वेन वेदितव्यं भवति। यदन्यदपि शास्त्रमेतादृशं शिष्टपरंपरागतम्, तत्सर्वमप्यध्येयं भवतीति ब्रह्मसिद्धान्तः। सर्वम्, सर्वार्थम्, संपूर्णं, सर्वान्तम्, समानजं, समं ब्रह्मेति सर्वमन्यन्नकारात्मकं बोध्यम्।

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे प्रकृतिसन्धिप्रकरणे
॥ अनुक्रमणिकानिरूपणं नाम प्रथमस्तरङ्गः ॥

---

ॐ

## ॥ अथ द्वितीयस्तरङ्गः ॥

अथ जगदिदमशेषंभावाभावतद्वयात्मिभिस्त्रिधाभूतं परिदृश्यते। तच्च गुणकालक्रियादिभिरभियुक्तं भवति। गुणश्च सत्त्वं रजस्तम इति, कालश्च भूतो भविष्यो वर्तमान इति, मुख्यावधेयो विषयश्च प्रकृतिर्जीवात्मा परमात्माचेति, क्रिया च सृष्टिः स्थितिः प्रळय इत्यादि सर्वमेतत्त्रिविधं भवति। एतच्च श्रुतियुक्त्यनुभवसिद्धं प्रणवशरीरावयवभूतैस्त्रिभिरकारोकारमकारैरभिहितं भवति।

ओमित्येष ब्रह्मवाचकश्शब्दः न तस्य कश्चिद्विशेषोऽर्थः प्रतीयते, अस्य सर्वार्थवाचकत्वात् । ओमित्येतच्च लिङ्गसंख्याकारकविभक्त्यादिरहितमव्ययम्, ब्रह्मप्रतिमाभूतम्, शब्दस्वरूपं भवति । जगद्दृष्ट्या चैतदेकं समष्टिरूपमोकारस्वरूपम्, अकारोकारमकारस्वरूपैस्त्रिधा भिन्नं विज्ञायते । इदमेव चास्य प्रणवस्य व्यष्टिस्वरूपं नाम । पृथक्परिदृष्टानामकारोकारमकाराणां तदेकत्वस्वरूपविज्ञानायैव हि तत्तत्स्वरूपार्थविज्ञानपूर्वकं तत्सन्धिर्ज्ञातव्यो भवति । अतोऽत्र प्रथममकारो व्याख्येयः ।

अकारोऽयमीश्वरः, यश्चात्मत्वेनात्रावबुद्धः । नास्य विकारित्वं, एतदाश्रयं सर्वम्, सर्वाश्रयोऽयमपीति सिद्धम् ।

कारणभूतश्चायमकारस्सर्वशब्दानाम् । अकाराद्धि वर्णा विजायन्ते । वर्णाश्च किल शब्दा भवन्ति, क्रमिकसंबन्धनैयत्याद्वर्णानाम् । अनन्ता एव हि ते भवन्ति । अतोऽयमकारस्स्वयं निरपेक्षः सापेक्षोऽपि केवलप्राधान्यात्स्वयंभूर्भवतीति सिद्धम् ।

अविज्ञेयं हीदमकारस्वरूपम् । उकारमकारयोर्हि योगेन तत्स्वरूपविज्ञानं भवति । स्वच्छश्चायं स्वनस्सर्वव्यापिकः, स स्वयं विशेष्यमन्यत्सर्वं विशेषणं भवति । अकारवाच्यश्चायमात्मा सर्वत्र संबद्धः स्वयमेव रूपभेदेन स्थानस्थातृस्थापकादिभेदेन च भासते । सर्वत्र विद्यमानत्वात्तस्य तथा प्राबल्यं सम्यग्विज्ञायते ।

अकारस्वरूपं हि सर्वोपाधिकम्, नित्यमनाद्यनन्तम्, सत्यम्, सत्यभूतञ्च भवति। यद्धि किल नित्यम्, तदेव संख्या कालरहितं भवति, तस्मादनाद्यन्तत्वमस्य भवति। नारंभो नावसानं यस्य तदनाद्यन्तं भवति। अनारम्भावसाने च कालसंख्याभ्यां भवतः। कालसंख्यारहितानां प्रतिवचनं कालसंख्ययैव भवति। केवलकालसंख्यानियमो नास्ति। अचरितार्थोऽयं कालसंख्याशब्दः नियममात्रे। अस्मादेतत्पर्यन्त इति नियमोऽत्र न भवति। किञ्च एतावन्ति वस्तूनि चेत्यादिपरिगणनमपि न भवति। कस्मादारम्भः, कुत्र समाप्तिः, कति वस्तूनि चेत्यादि न दृश्यते। केवलं भवनमेवात्र निश्चितं भवति। अकारस्तु भवनमात्रशक्तः। यदकारस्वरूपं सर्वोद्भवयुक्तम्, तद्ब्रह्मेत्यनुमेयम्। तद्धियत्तच्छब्देनैव वाच्यम्, न तत्रान्यशब्दावगतिः। अत ओमित्यस्य तद्वाचकत्वमव्ययत्वञ्च भवति। सर्वाधारत्वाच्च तत्र मुख्योऽयमकारः। स च तादृशानाद्यनन्तवानिति ज्ञेयम्। अनाद्यनन्तश्च, कालसंख्याभ्यामनन्वितं भवति। उकारे ह्ययं चरितार्थः कालसंख्याक्रमयोगः। वास्तवप्रतीतश्चायमकार इति, तन्निर्देशशक्तः। अकारश्चायं निस्सन्धिकः, न च शब्दः, न प्रातिपदिकत्वादिधर्मवांश्चभवति, संख्याद्यभावात्तस्य। किञ्चायमकारोऽनारम्भावसानः; आरंभावसाने च कालसंख्यादियुक्ते

इत्युक्तम् । अतो नित्यमकारस्वरूपं बोध्यम् । ततश्च जातं नर्वमनित्यम् । अवस्थयातदुद्धारः । सर्वत्र कर्त्रादिविशेषणवर्जितत्वान्न जगन्मध्ये तत्प्रतीतिः । यद्यप्ययमकारस्सर्वाधिगतः, नथापि सर्वाश्रयणात्तस्य बन्धो भवति । तस्माद्देशकालवस्तुतोऽपरिच्छिन्नस्वस्वरूपोपस्थितिकस्स भवति ।

अकारोऽयमात्मा, वर्णसंख्याक्रमकालरहितश्शुद्धस्सर्वत्रोपस्थितोऽनुपस्थितः, प्रस्तरितश्च भवति । तद्गणनानियमस्यानावश्यकत्वात्संसारविहितः, तद्विरहितश्च प्रतीयते । अस्य च, सत्यानन्तनित्यादिविशेषणमप्यनर्थम् । सति रूपे, तद्भवने च, जगता सह संबन्धस्य प्रतीतत्वात् । तदारंभावसाने च तयोर्नेत्यन्यदेव जिज्ञास्यम् । "सर्वत्र मन्तव्योऽमन्तव्यः प्रकाशोऽप्रकाशः ज्ञानाज्ञानरूपश्चेत्यादिलक्षणतयास्ति कश्चिदन्यो जिज्ञास्यः, येनैतद्वयप्रदर्शनम्" इत्यभियुक्तनियमात् ।

तदकारस्य क्रियया सह योगो दृश्यते । क्रियामात्रस्य स्थितिर्न कदाचन, विना च कर्तारं क्रियाया अनिष्पत्तेः, कर्तृकरणकार्यप्रयोजनानां चतुर्णां परस्परसंबन्धनैयत्याच्च । अस्ति च संबन्धोऽप्येकरूप एव । यथाफलं संबन्धकारणञ्चान्यत् , तत्र यत्किञ्चिदकारेणैव बोध्यं भवति । अ इत्यस्य निर्देशको न कश्चिद्भवति, सर्वनिर्देशकत्वात्तस्य । न तत्र जन्यत्वं विशि-

ध्यते, फलानां तदुपफलानाञ्च संभावितासंभावितानां सर्वेषां मूल-भूतत्वात् ।

अकारस्सर्वशब्दानां मूलं भवति । अतश्चोच्यतेऽयं शब्द-ब्रह्मेति । नायं ह्यकारश्शून्यस्वरूपः, भावस्वरूपावभासात् । स च न यावद्रूपेण प्रशस्तः । अतश्चास्य न संज्ञाबोध्यत्वं भवति । स्वरू-पेणावस्थितस्यैव हि संज्ञा । अरूपाणाञ्च संज्ञा निरर्था भवति । रूपप्रयुक्ता च संज्ञा, केवलमिन्द्रियग्राह्याणामेवेति न, किन्तु ज्ञानग-म्यानामपि, तद्वैज्ञानिकानामपि चेति बोध्यम् । यद्यपि वाच्यवा-चकवचनमध्ये वाचक एव प्रशस्तः, तथापि विशेष्यत्वस्य भ्रम-त्वेन बोधो न संभवति । एवमेवाकारस्य सर्ववर्णाभिनियमेन दुर्बोधस्य संभवः । आत्मा यद्यपि संसारबद्धः, तथापि पङ्कजमिव पङ्कजंनिर्मलः प्रसन्नश्च भवति । यथा च—जलबिन्दुसंघातस्य समुद्राभिधेयत्वं भवति, तथा समुद्रेण च जलबिन्दोरवगतिः। सति च समुद्रे बिन्दुरित्येके, सति च बिन्दौ समुद्रइत्येके । परिभा-वनया चोभयोस्सत्तात्वेकैव भवति । यया चैतद्द्वयोरुपस्थितिस्सा सत्ता । सैवात्मा, न समुद्रो न च बिन्दुः । अनेन च महतो-ऽल्पत्वम्, अल्पस्यापि महत्वञ्च विज्ञायते । वास्तवसत्तायान्नभेदः, परिणामभेदेन हि भेदस्य दृष्टत्वात् । तथा चैवमकारस्य सर्वाश्रयत्वं सिद्धम् ।

आत्मवाचकोऽयमकारस्सर्वात्मबोधकत्वेन संसृतिसंबद्धानामपि तेषां सर्वेषामात्मनां बोधको भवति। आत्मावश्यकोऽयं संसार.; अकारवाच्योऽयमात्मैवाणोरणीयान्महतो महीयांश्च भवति । अणुत्वमहत्वादिकञ्चास्यावस्थाकृतं वेदितव्यम्। अवस्था च कालक्रमागता भवति । अतो ह्यस्याकारस्य परिवाचके प्रणवे, प्राधान्यबोधाय प्रथमोपदेशः कृतो भवति; यतः संज्ञापि तस्य सत्ताभवनत्वाद्भवति। आवश्यकानावश्यकयोर्यद्विधानम्, तदेवास्मिन्सम्यग्भासते । सिद्धान्ते च "सर्वस्य हेतुर्जनकश्चाकारो विधीयते" इति तत्प्रसक्तबलेन प्रत्यक्षेण बोध्यः।अवधानान्तरेऽपि तदकारस्यैव प्राथम्यं प्राधान्याद्विशेष्यत्वाच्च । यद्यपि वाच्यवाचकयो र्भेदः,तथापि वचनद्वारा संबन्धसाहचर्यादावश्यकत्वाद्वा वाच्यवाचकयोस्सत्ता चैकैव भवति। वस्तुतः जगदिदम्, महत्त्वाणुत्वविशिष्टं परिदृश्यते। एकस्मादेकोऽणुः, सोऽपि केनचित्प्रकारेण कुतस्स्वयं महान्भवति । एवं महानप्यणुर्भवति । अतस्सर्वो महान्सर्वश्चाणुर्भवति । एकरूपगतिस्थितिरूपादिकं न सर्वस्थं मन्येत । तदिदमकारस्वरूपं वाचकत्वेन, वाच्यत्वेन, वचनत्वेन चैकावधानेन प्रसिद्धं भवति ।

यद्यपि "नायमात्मा प्रवचनेनलभ्यः" इति श्रुतिः, तथापि जगद्दृष्ट्यास्य प्रवचनलभ्यत्वं बोध्यम्, वास्तवस्यैवानुकरणमिति

नियमात् । वास्तवस्य सर्वस्थानान्तरस्य च तस्य सविषयकत्वम्, विषयानुगतत्वञ्च ज्ञेयम् । संसर्गेणैव तदभिजन्यसंस्कारानियमो-प्यारोप्यते । आरोपणं हि सर्वधान्यस्य भवतीति फलितम्। "ते-नायमात्माऽसहायवानदेशवानवस्तुमांश्च" इति श्रुतिः । तेन चा-कारस्य प्रसक्तं परिगणनं न युक्तम् , आश्रयतासंबन्धाभावात् । तदुपस्थानम्, तदनुष्ठानञ्चावश्यकानावश्यकविधेरेव भवति। एत-दवस्थाप्यवधानगतत्वात्सत्त्वैवेति निष्कर्षः ।

व्याकृतिश्चात्मनस्संसर्गेणैव भवति । यद्यप्ययमात्मा स्वयं न किञ्चित्, तथापि सर्वस्य तदर्थत्वात्तत्प्राबल्येन तस्यापि विका-रोऽवधेयः । तत्र च ज्ञानाज्ञानशक्तेर्हि व्यवस्था, संभवासंभव-नियमेन भवति । न तत्र संस्काराद्युपयोगः । संसारक्रमस्य हि निष्काम्यत्वान्निष्प्रयोजनत्वमेव। अतस्संस्कारोऽपि विचार्यो भवति। प्रत्यक्षोऽयं संसारः, तन्नियन्ता चानुमेयश्च भवति । अतोऽनु-गतक्रियास्थानेन संस्कारादीनान्नियन्तृरूपः, मूलभूतोऽयमात्मा भवति । तद्वाचकोऽयमकारो भवति । तस्यापि तादृशानुगति-कत्वादविशेषेण सन्धिराभिव्याप्तिश्च भवति । तत्सन्धेश्च संज्ञासं-स्कारयोर्भानम् । संस्कारशब्दस्यच, सम्यक्क्रियत इति व्युत्पत्त्या कालक्रमादि योगेनैव प्रयोजनम् । तदर्थबलादकारस्य निर्मान-त्वम्, भावाभावराहितत्वमनाद्यनन्तत्वञ्च सूचितं भवति । तत्रैव

संक्षपविस्तरमहत्त्वाल्पत्वादिसामर्थ्यञ्च भवति । तत्सामर्थ्यबलेनैव हि वर्णत्रयाणां सन्धिः । ततः ओमित्येकश्शब्दो भवति ।

अकारस्य सर्वत्रानुगतावधेयत्वात्परिव्याप्तिर्न दृश्यते, किन्तु विशेषव्याप्तिः । तस्या अपि निरवयवत्वम्, निर्विषयकत्वञ्च नोपकल्प्यते, पूर्णे हीच्छाया असंभवात् । इच्छा त्वपूर्णविषयेति पूर्णं न प्रसह्येत । अवधिभूतेनापि तत्तद्देशबलेन पूर्णापूर्णयोरुपस्थितिः, जगदिदमपूर्णम्, पूर्णञ्च किञ्चिदन्यादिति सिद्धान्तितत्वात् । निश्चितस्संदिग्धश्च साध्यो दृश्यते । निश्चितस्तु पूर्णं भवति । तस्यैव नैश्चल्यनिरवयवत्वादिप्रवचनम् । संदिग्धो ह्यपूर्ण इति निश्चितो भवति । तच्चरित्वादिभानन्तु सावयवत्वाद्विज्ञेयं भवति । संदेहनिश्चितस्य तु सत्ता परित्याज्येत्यन्यदेतत् । तदेव नैष्काम्यान्निश्चितं भवति । प्रयोजनशक्त्यात्वाधाराधेयभावः, गुण, दोषौ, कर्माणीत्यादिसंबन्धफलं भवति । तत्राधिकरणं सत्ता । तस्या आत्मत्वेन न विवक्षा, किन्तु फलप्राधान्यादपूर्णत्वेन विवक्षा, इत्येतद्रूपस्यनिर्धारणाय विज्ञानाद्यावश्यकत्वम् । सर्वत्र प्रस्थितेन तज्जन्येन, तद्धर्मेण, तत्प्रवर्तननिवर्तनाभ्याञ्च, फलन्निश्चितं भवति । ज्ञापकाज्ञापकत्वादिसत्ताज्ञानवान्, सर्वेतिकर्तव्यतानिष्ठानुष्ठाता च ह्यात्मा भवति, तत्प्रवचनमकारेणेति नियमात् । तदकारस्य पृथग्रूपेण सन्धिरूपेण च लक्ष्यत्वम् । तस्माद-

कारस्वरूपम् , निरवधानान्तर्गतावधानसहितं बोध्यमित्य-लम् । तस्मादात्माधिकरणभूतस्संसारः, संसाराधिकरणश्चायमात्मा भवति । तत्प्रवचनार्थकोऽयमकार इत्यपि सिद्धम् ।

आत्मनो ब्रह्मणश्चाकारेण प्रवचनं भवति, आत्मैव ब्रह्मणो बोधकारणमिति नियमात् । अन्यथा तु तद्ब्रह्म सर्वैरप-रिच्छिन्नमित्यभिधानं स्यात् । अकारेण द्वयोः कथनमप्यध्याहार-मात्रम् । वस्तुतस्त्वात्मीय एव शब्दः । अकारो हि सन्धिप्राति-पदिकत्वादिराहित्येन , न विभक्तिमान्भवति । विभक्तिस्तु विभा-गाय हि भवति । न चात्मनो विभागस्संभवति । न च तस्य वैयाकरणकार्यारोपणञ्च भवति । अत एव वर्णसमाम्नाये सन्धिर्न दृश्यते । पृथग्रूपेणैव सर्वे च वर्णाः प्रयुक्ता भासन्ते । स्वात्म-नश्शक्त्या च शब्दनिर्धारणं कुर्वन्ति । स्पष्टञ्चेदम् "न वर्णानां प्रातिपदिकत्वादिसंज्ञास्ति" इति । अत एवाकारादेरक्षरत्वमप्यु-क्तम् । यस्य च नाशोत्पत्तिस्थितयो न भवन्ति, तदक्षरं भवति । तस्मादकारः, आत्मवाचक इति सिद्धं भवति ।

संसारे चात्मनः संस्कारः, अपूर्णत्वञ्च विज्ञेयम् । आत्म-नश्च पुन स्सति योगे संसारेण संस्कारः । तेन च तस्यापूर्ण-त्वञ्च दृश्यते, बीजमिव तत्कृतं भवतीति निश्चयात् । तत्रैवेच्छा-द्यारोपणम्, अणुत्वमहत्त्वव्यापकत्वादि च मन्यते । सर्वस्य का-

रणमात्मा। तद्वद्वर्णानां कारणमकार इति फलितं भवति। तस्मादकारस्य केवलत्वम्, तदुकारादियोगेन संसर्गोऽपिच भासते। कर्ता च यस्य यादृशः, तादृशं तत्कार्यं च भवतीति न्यायः। कर्ता ह्यवश्यं कार्येतिष्ठति, विना च कर्तारं कार्योत्पत्तेरदर्शनात्। सति च कर्तुरपूर्णत्वेऽनित्यत्वे च कार्यस्याप्यानित्यत्वमपूर्णत्वञ्च भवेदिति निश्चितं भवति। तस्मादात्मनस्संसारेऽपूर्णत्वं निश्चितं भवति। अत एव संसारो मिथ्यात्वेन भासते। नहि चास्यैकरूपेणावस्थितिः। जननं मरणञ्चेति क्रमेण त्रितयत्वम्, महत्त्वाल्पत्वे च, तथा पूर्णत्वानित्यत्वेचात्मन्येव कल्प्येते। अस्यैवात्मनस्सर्वे विशेषणं भवितुमर्हति। आत्मैव हि विशेष्यं भवति। तयोर्भिन्नमन्यत्। न तस्य नामरूपे। न चायं बुद्धेरन्यस्य वा विषयो भवितुमर्हति। आत्मविषयेष्वेव शब्दसंख्याकालादिप्रवचनम्, अन्यदप्यात्मनो वर्तत इत्यपि, आत्मसंभावनयैवानुमीयते। ज्ञाता च पदार्थः, न कदापि ज्ञेयः पदार्थो भवितुमर्हति, ज्ञानस्याविषयत्वात्। "ज्ञानं ब्रह्म" इत्यभिधानात् ज्ञातृज्ञानज्ञेयस्वरूपमिति तत्प्रशस्यते, ज्ञातृज्ञेयज्ञानभेदस्य तत्राभावात्। तस्मात्सर्वज्ञोऽयमात्मा, न तस्य ज्ञाताकश्चिदन्यो भवितुमर्हति। अतो हि ब्रह्मज्ञानं न संभवति। यद्यपि लोके ब्रह्मज्ञानीत्यादि विशेषणं दृश्यते, तथापि तद्भवनानुकूला योग्यतैव संसूच्यते। अत एव

"ब्रह्मज्ञानाद्ब्रह्मैव" इति सिद्धान्तः, ब्रह्मणश्चाभेदान्वयात्, ब्रह्मज्ञान्यादिप्रवचनन्तु, पृथग्दृष्ट्या चान्यथाभवने सत्येव भवति। यस्य च न पृथग्भावो भासते, अभेदान्वयेऽभेदेनैव प्रतीतिः स्वयमभिन्नरूपश्च न स ब्रह्म, न तज्ज्ञानी, न च तद्वाचकवाच्यवचनञ्च भवति। अतोऽस्मिन्संसारे ब्रह्मविषयकश्शब्दोऽपि न भवति, तस्य पूर्णत्वेन निरूपणात्। यद्यपि ब्रह्मविषया जिज्ञासा, तदावश्यको वेदशास्त्रसिद्धान्तश्च भवति, तथापि तस्यासंभवत्वं भवति। केवलेनात्माधिष्ठितेन भ्रमरूपेण ज्ञानेन ब्रह्मज्ञानं प्रकल्प्यते। वस्तुतस्तु "त्वं ब्रह्मैवासि" इति वेदैरुपदिश्यते यदेतद्भ्रमरूपं व्यावर्तनम्, तव तन्न किञ्चिदिति उपदेशफलम्। भ्रान्तबुद्धेः परिशोधनाय वेदाद्युपदेशः। यो हि वास्तवः, स एव वेदशास्त्रसिद्धान्तेऽपि। संस्कारेण, संसर्गेण चात्मनि यस्य कस्यचिद्धर्मस्यारोपणम्, आत्मना तद्वहनञ्च, तद्धर्मो भवत्येव। नातो भिन्नस्त्वम्, न त्वत्तो भिन्नमिदमिति फलितोऽर्थः। यो ह्येवंबुध्यते, यस्य पृथक्त्वं न भासते, स स्वयं ब्रह्मेति निश्चयः। एवंभूतं ब्रह्म। तस्मात्तदर्थं न शब्दादिकं प्रतीयते शब्दादिकन्तु स्वात्मन्येव। अतोह्यकार आत्मवाचक एवेति सिद्धान्तः।

॥ इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे प्रथमप्रकरणे

॥ अकारार्थनिरूपणन्नाम द्वितीयस्तरङ्गः ॥

ॐ

## ॥ अथ तृतीयस्तरङ्गः ॥

ओमित्यत्र द्वितीयेनोकारेण संसारोऽभिधीयते । तस्याप्यनाद्यनन्तत्वविशेषणं भवति, तदधिष्ठितस्य कर्तुरात्मनस्तथाहि दर्शनात् । संसारपदेन च सर्वोपाधिस्वरूपम्, स्थूलसूक्ष्मप्रकृति विकृत्यादिकं च बुध्यते । अतस्संसारप्रवचनार्थोऽयमुकारो भवति संसारे हि क्रमश्चायमात्मशक्त्या गृह्यते । लुप्यते चायमकार उकारे, लुप्तश्च बद्धस्तत्स्वरूपे तत्स्वरूपेणैव भासते; यथाह्यात्मा जगद्रूपे संसारे लुप्यमानस्तद्बद्धः तत्स्वरूपेणैव भासते । यद्यपि यस्य शक्त्या यत्तिष्ठति न स ततोऽन्य इति न्यायः, तथापि तद्गोपनाय स भवतीति बोध्यम् । यतो यो भवति, यस्माद्यत्स्थूलमुत्पन्नं स च तच्च तत्रैव स्वयं लुप्येदिति हि न्यायः। गोपनकार्यार्थमिदं भवति । अन्यथा तु सर्वं प्रसिद्धं भवेत्, गुप्तो गोप्यो गोपनं गोप्ता इति च न भवेत् । अस्मिंश्च संसार एव हि ज्ञानाज्ञानभावाभावजननमरणञ्चेत्यादि परिदृश्यते । पदार्थानां याथातथ्यं हि वर्तमानत्वम् । तदन्यथा भवनं हि भेदः । अयमेव हि अदर्शनं नाश इत्युच्यते । अयञ्च वस्तूनां स्थूलत्वादिभेदेन भवति । अन्यथा सत्कृतं सदिति न्यय्याज्जगतः, " जायते "

इत्यादिव्यवहारो न स्यात् । अत एव, "नायञ्जातो न मृतो न प्रपञ्चरूपः" इत्यादि श्रुतिः अयमित्यात्मानं निर्दिश्य तथाहि वदति । यदेदंस्थूलसूक्ष्माणुबृहदिति व्यवहारयोग्यम्, तदास्य प्रपञ्चरूपत्वम्। प्रपञ्चरूपश्चायमात्मा भवति । तत्र तस्यापूर्णरूपत्वमेव । सर्वास्ति-क्रियासंबन्धस्त्वात्मन एव । अतश्चोकारेण प्रपञ्चस्वरूप मभिहितं भवति । किञ्च एतदुत्पत्तिस्थितिलयानां प्रयोजनादि यत्किञ्चिद्वक्त-व्यम् । तथा च नात्मनः कार्यस्य निष्प्रयोजनत्वम् । प्रयोजना-ज्ञानेन, निष्प्रयोजनमिति न वक्तुं युक्तम् । यो ह्यनादिरनन्तश्च, तत्कार्यम् , प्रयोजनञ्च तादृशमेवेति सुस्पष्टमेव । अतः प्रयोज-नमप्यस्तीति ज्ञेयम् । अस्य केवलजिज्ञासाकारणत्वमेवात्रोच्यते । तस्मादुकारस्वरूपम् , अकारजातम् , तदिच्छानुरूपञ्च भव-तीति फलितमस्ति ॥

अत्र चानेकवस्तुनामरूपगुणदोषभेदादिकं सर्वमुकारेणैव गृह्यते । विशेष्यस्यास्य विशेषणमात्रमुकारः । विशेष्यविशेषणा-भ्याञ्च सर्वविधोऽपि संसारः परिबुध्यते । यावदिदं जगत्, तावद्विशेष्यविशेषणस्वरूपं हि भवति ।

अस्मिन्नुकार एव हि महत्तत्त्वादिकं सर्वं द्रव्यादिपदार्थ-जातं प्रभासते । पृथिव्यप्तेजोवाय्वाकाशदिक्कालसंख्यापरिमाणा-नि च सावसानारंभाणि चेति बोध्यम् । तेषामादिरेवायमुकारः । स

तु न कस्य चिदन्यस्याद्यन्तो भवति । आत्मा तु स्वयमनाद्यनन्तः । तस्याद्यन्तश्चोकार इति विज्ञेयम् । अवसानार्थकोयमारंभो भवति ; तथा चावसानमप्यारंभार्थकं भवतीत्येतत्संबन्धोऽपि परस्परफलो भवति । उकारेणैव स्थलादिकमुच्यते । तस्मादुकार एवाद्यन्त्यत्वविशिष्टोऽनाद्यनन्तवस्तुबोधकश्च भवति ॥

अत्रैव प्रकृतिशक्तिश्च तिष्ठति । संख्याकालशब्दादीना संभवश्च तदधीन एव परिदृश्यते । एतैरेव हि चाणुत्वमहत्त्वे, तेषां संसर्गश्च भवति । ततस्सर्वाधारभूतेयमित्यवगम्यते । तत्र चैकः प्रेरकतयाऽद्वितीयो भवति, तत्र चैको विनश्यतीति नियमेन सर्वेऽपि परस्परं सर्वोत्पादकास्सर्वविनाशकाश्च व्यवस्थिता भवन्ति।

अस्य मिथ्यात्वमप्यवगम्यते, यस्य च भेदो विभाव्यते, नोत्पादकाविनाशकाविधिः, एकस्थं तदेव मिथ्येति प्रतीतेः। अत्रैव युष्मदस्मदौ, तमःप्रकाशौ च दृश्येते । केवलमिथ्यात्वमप्यस्य लक्षणं भवति । अन्यथा तु युष्मदस्मद्वृत्तेरेकत्वेन भेदो न स्यात् । अत एव मिथ्याप्रपञ्चात्मकं सर्वं भवति ।

सत्स्वरूपं त्वात्मनिश्चितं भवति । आत्मनो यद्यप्यपूर्णादित्वम्, तथापि संसर्गजया हि भिन्नदृष्टया स्वयमविशेष्यमपूर्णश्च भवति । समदृष्टया तु पूर्ण एव भवति । स च केवलारोपेण संसर्गेण हि बद्धः प्रभासते । तादृशावस्थोपस्थितौ सत्याम्, तदुचित-

सुखदुःखादिभाग्भवति । अत एव श्रूयते—"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्म" इति । जिज्ञासाकरणत्वेनैव हि भेद इति जगतः फलं दर्शितम् । न वस्तुतस्तत्राशाकरणत्वं प्रतीयते । सर्वमेतदुकाराकारस्वरूपेण गृह्यते । रूपभेदस्संज्ञाभेदश्च, तयोस्संबन्धेनेति ज्ञेयम् । संबन्धस्तु कालस्वरूपभेदेन भवतीत्यतः पृथक्त्वम् । पर्यायोऽप्यत्रदृश्यते । तदात्मनः फलं भवति, तत्रापि पृथग्भावेन चात्मनस्संधानात् । अत एवोकारप्राबल्येनात्मन्यवस्थाभेदश्च भासते । अवस्थायाः भेदस्य च कारणं कालस्संख्या च । व्यापारस्तु कालेन संख्यया च भवति । विना च व्यापारम्, न संसारस्य स्थितिर्भवति । तस्माद्व्यापारार्थकोऽयमुकारशब्दः । अनेनैव सर्वेषां सन्धिः ।

वर्णसमाम्नायेऽप्युकारस्यैव सन्धिकारणत्वमुक्तम् । अत एव वर्णानां स्थानभेदः प्रयत्नभेदश्च भवति । "वर्णैश्च पुनः शब्दा जायन्ते" इत्यादिविधिना वर्णानां क्रमिकसंबन्धेन शब्दो भवति । तदर्थोऽपि च तेनैव क्रमेण विज्ञायते । तस्य लिङ्गसंख्याकारकविभक्तयोऽपि तदनुरोधेन भवन्ति । छन्दसां मध्ये तत्प्रयोगोऽपि तादृशस्वरूपेणैवोपलभ्यते । वर्णक्रमविधानाच्च शब्दार्थः प्रतीयते । तस्मात्सर्वकारणमुकारः । अत एव "उकारस्सर्वशाब्दिकः" इति स्पष्टम् ।

आकाशस्य वायुना, वायोश्च तेजसा, तस्याप्यद्भिः, तासां पृथिव्या नियोजनम्, तत्तद्गुणानां संबन्धश्च भवति। तत्तद्वृत्तीनामेकस्थत्वम्, तेन तेन धर्मेण च कार्यित्वकल्पनञ्चेत्यादिप्रवचनार्थोऽयमुकारोभवति। "अस्मादेतदेवं प्रजायेत। अतश्चेमानि जातानि जीवन्ति" इत्यादि सर्वमुकारेण सिद्धं भवति। अत्रैतस्य विरामः, अस्मादारम्भः एतत्कर्तव्यमकर्तव्यञ्च, कृतमकृतञ्चेत्यादि सर्वं तेनैव बोध्यं भवति।

सन्धिना हि किल सर्वोत्पत्तिर्भवति। सन्धिभूतो हि स्वयमेवोकारस्संसारवाचकस्सन्धिस्थं इति हि वेदैर्निश्चितः। फलन्त्वेतस्य दुर्विज्ञेयं भवति। यद्यपि साध्यं फलं साधनेन केनापि साधयितुं शक्यते; तथापि नानात्वात्तस्य दुर्विज्ञेयत्वमेव। अकारानुक्रमादिज्ञानस्यासंभावात्, तत्राविद्यमानत्वाच्च, उकारेण तद्ग्रहणं बोध्यम्। यद्यप्यकारस्यापूर्णत्वमेव, तत्र च कारणं भवति; तथापि तस्यान्येन संबन्धादन्यधर्मस्तत्रारोप्यते। बुद्धिविरामार्थकमिदंत्वारोपणं भवति। अतो ह्यकारस्य स्वरत्वम्, व्याकरणविहितत्वञ्च बोध्यम्। शब्दशास्त्रे हि सर्वेव्यञ्जनवर्णाभवन्ति। अकार एव केवलं स्वरोभवति। यो हि स्वयमेव प्रकाशते सर्वस्य प्रकाशकश्च, स स्वर इतिसिद्धम्। तेनोकारादीनां वर्णानां व्यञ्जनत्वम्, उकारेणैव सर्वस्य नियोजनञ्च विज्ञेयं भवति। तत्र च

ात्तिरकारस्यैवेति ज्ञायते । तस्मादोमित्यत्र युत्काभ्यामकारोकारा-
यामात्मसंसारयोर्बोधो भवति । संसारशब्दश्च सर्वशद्वाना-
ाधारभूतः , सर्वव्यावहारिकपदार्थबोधकश्च भवति । कति-
दार्थाः , कीदृशास्ते इत्यादि विज्ञान मुकारार्थ विज्ञानप्रयोजनं
ावति ।

आवश्यकानावश्यकविधिद्वयञ्चानेन स्पष्टमुक्तं भवति ।
ास्तुतस्तु तत्रावश्यकानावश्यकं यत्किञ्चित्तत्त्वम् , तदवस्था
त्र , कालसंख्यानियमेन भासते । तस्याविद्यमानत्वेनावास्तव-
वेन च नानावश्यकञ्च यत्किञ्चित्तत्त्वमस्तीति प्रशस्तं भवति ।
उकारेणत्वनावश्यकं तत्वमपि वुध्यते। वस्तुतस्तु सर्वस्याप्यकार-
मूलकत्वेन सर्वमप्यावश्यकमेवेति ज्ञेयम् । कार्यदृष्टयाहि पदार्थे
यावश्यकत्वानावश्यकत्वं विज्ञायते । यथा हि, लोके पदा-
र्थस्य एककार्यदृष्टयावश्यकत्वम् , अन्यकार्यदृष्टया तस्यैव पदा-
र्थस्यानावश्यकत्वञ्च दृश्यते । अतोऽनावश्यकमावश्यकञ्च न
किञ्चिदिति विज्ञेयम् । अयमन्योन्यमभेदश्चोकारेणैव ज्ञायते ।
उकार संबन्ध एवावस्थानियन्ता च भवति । अतस्तादृशविधि-
द्वयेनैवावश्यकमनावश्यकञ्च भासते । सिद्धान्ते तु स्वभावतः
प्रतीतपदार्थस्यैव प्रवचनम् । तस्मद्वेदोक्तं सर्वमावश्यकं भवति ।

सर्वाणीमानि कर्माणि जातानि जायमानानि चावश्य-

कानीति वेदितव्यानि भवन्ति । एतत्संसारमात्रञ्चात्मावश्यकत्वेन विज्ञायते । यद्यपि संसारस्य उत्कृष्टापकृष्टत्वं भवति, तथापि तस्य भ्रमत्वान्न तथेति विज्ञेयम् । विदुषान्तु तथा न भवति । अत एव हि सर्ववेदान्तग्रन्थाः,"समाने हि सुखदुःखे तथा शत्रु-मित्रे परापरौ, सर्वमपि च सर्वथा स्वयमेव ब्रह्मभूतम्, आत्म-वृत्त्या च सर्वत्र स्थितम्" इत्युपदिशन्ति । साम्यबुद्धिरेव हि सर्वेषां कर्मज्ञानादीनां फलं भवति । यावदेवं न बुध्यते तावदेव द्वैते प्रतीयेते। यो हि स्वात्मवृत्त्या यदावश्यकंमन्यते, तत्सुखम्, तथानावश्यकं दुःखम् । एवं सर्वत्र वेदितव्यं भवति। अन्यथा सर्वमेवेदमात्मेति बुद्ध्याप्रपञ्चनाशः, सर्वत्र चैकैवात्मवृत्तिश्च स्यात्। अतश्चायं परमानन्दो मोक्षः, स्वर्गप्राप्तिरित्याद्यनावश्यकत्यागे-नोच्यते। अत एव साधवस्तत्त्वविदः, संसारस्य प्रपञ्चस्य मिथ्या-त्वारोपं न कुर्वन्ति । किन्त्वेनमावश्यकविधिना पश्यन्ति। तेषाञ्च प्राप्तम्, दृष्टञ्च सर्वमावश्यकं भवति । एवं भूतादिकालभेदोऽ-प्यावश्यकत्वेन गृह्यते । वस्तुतस्तु वर्तमानरूपश्चैक एव कालः, सायं प्रातः मध्याह्न इति, भूतो भविष्यो वर्तमान इत्युपाधिभि-र्भिन्नः परिदृश्यते। तत्तदुपस्थित्या हि तथा व्यवहारो भवति। तस्मा-त्कालत्रयस्यापि सत्ता त्वेकैव मुख्या भवतीति बोध्यम्। तथा ज्ञान मप्यावश्यकमेव भवति । एवमेव च नित्यत्वमनित्यत्वं सत्यत्वञ्च

भवति। प्रवचनार्थे हि पदार्थानां कालेन व्यवस्था भवति। तयै-वार्थभेदः, तेन च शब्दभेदः, तेन संख्याव्यवहारश्च भवति। अतः कारणभूतोऽयमुकारव्यापारस्सर्वेषामिति बोध्यम्।

तत्रैकदेशस्समुदायश्चेत्युभौ भवतः। समुदायग्रहणे चैकदे-शग्रहणमिति नियमेन समुदायस्थेनात्मना संसारस्यापि ग्रहणं भवति। आत्मैव समुदायस्थः। द्वयोरपि परस्परं ग्रहणं दृश्यते। संसारेणात्मना चान्यपदार्थस्य नामरूपरहितस्य सत्त्वमात्रेणानु-मितिर्भवति। न तत्र प्रत्यक्षस्य संभवः। एवञ्चोकारार्थेन संसारेण ह्यात्मनो बोधो भवति, न तथाह्यात्मना संसारस्य। आत्मनः प्राथम्यं हि तत्र हेतुरिति विज्ञेयम्। यद्यपि मिथ्यात्वेन तत्प्रतीति-र्भवति, तथाप्यावश्यकत्वेनात्रापि तदात्मनः क्रिया भवति। अतो न संसारत्यागसंभवः। केवलं तस्मिन्मिथ्यात्वज्ञानमेवेति सिद्धान्तः।

यो ह्यावश्यकस्तस्यैव स्वभावोऽत्र चोच्यते। न तत्र कार-णम्, कर्ता, प्रयोजनम्, नाम, कार्यमित्यादिव्यवहारः प्रभ-वति। अतस्तस्य प्राथम्यं विज्ञायते। आत्मनश्च संसारभवनमा-त्रेणेदं ज्ञानमिति विज्ञेयम्। संसारदशायान्तु तस्य कर्तृकरण-क्रियादिव्यवहारस्सर्वोऽप्यस्ति। एतेषां वर्णानां त्रयाणां प्रणवोंकार-स्थितानां सन्धिस्थत्वे सति, बोधो भवति। तस्मादुकारेण तु

केवलं संसारकार्यमुत्पत्तिस्थितिलयहेतुत्वञ्च बुध्यते । अकारेणा-यमात्मा सर्वव्यापक इति बुध्यते । तयोस्सिद्धान्तश्च न किञ्चित् । केवलावश्यकत्वेन तयोस्तथा नियमः ।

एकदेशसमुदायविधिश्चापि प्रकृते भ्रमेणोपतिष्ठति । समु-दायस्य चैकदेशस्य लक्षणेन हि भेदो भवति । सति च भेदे संबन्धस्य संभवः । अभेदे तु संबन्धप्रवचनमपि न संभवति । तन्निर्धारणन्तु सत्तयैव भवति । वस्तुभेदे हि संवन्धभेदस्सत्ताभे-देन भवति । अतस्सर्वेषां वस्तूनां सत्ताभूतश्चायमात्मा भवति । वस्तु चात्मनोऽन्यदिति निश्चयेन, "सर्वे सर्वोत्पादकाः" इति वेदोक्त्या च तदुकारवृत्तिः कारणं । तस्मात्संसारमात्रार्थबोधकोऽ-यमुकारप्रयोगो भवति ।

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे प्रथमप्रकरणे उकारार्थनिरूपणं नाम तृतीयस्तरङ्गः ॥

---

ॐ

## अथ चतुर्थस्तरङ्गः ॥

मकारोऽयं तृतीयश्चाकारोकाराभ्यां भिन्नस्वभावः, निषेध वचनोऽव्ययोऽर्धमात्रश्चभवति । न ह्ययमात्मनस्संसारस्य तयोर्हे-

तोर्वा बोधको भवति। न तदधीनः कश्चित्परिदृश्यते। नाप्ययं कस्य चिदधीनश्च भवति। मा कुरु मा भवेत्यादिप्रयोगदर्शनादस्याव्ययत्वम्, निषेधार्थकत्वञ्चेहोच्यते। न केनापि छान्दसेन स्वरेण, प्रयोगेण, वर्णेन वा, तदर्थभेदः परिदृश्यते। नायं व्यापकोऽव्यापकश्च भवति। केवलं भेदवचनत्वमप्यस्य न स्वतो भवति; किन्तु संसारदृष्ट्या हि विज्ञायते। अस्य चास्तित्वनास्तित्वमप्येवम्। अतस्त्वेवंभूतो मकार इति विज्ञायते। सर्वशब्दमूलभूतयोस्सर्वार्थयोरकारोकारयोर्योगे सति चास्योत्पत्तिः परिदृश्यते; अतस्सर्वाक्षरमूर्धन्यो मकारो भवति। अस्यानुस्वारस्वरूपत्वमपि चोच्यते; परसान्निकर्षविवक्षया हि तद्भवति; सा च तत्कृत्रिमपरिणामस्वरूपप्रवचनार्था हि भवति। न च सा तत्स्वभावतो भवति। अन्यथा हि तस्य निषेधार्थकशब्दत्वेन प्रयोगः, सन्धिः, प्रातिपदिकादिसंज्ञाकरणञ्च सर्वमपि निरर्थकं भवेत्। नचायं मकारः पूर्णोऽपूर्णः, कामनारूपः, सविकारो निर्विकारः, शून्योऽशून्यः, केवलस्सविशेषणश्च भवति। नायं लीयते, न तस्मिंश्च कश्चिल्लीयते; नाय मुपस्थितोऽनुपस्थितश्च भवति; नायं स्थापकः, स्थाता, स्थेयः, स्थानञ्च भवति; नायमस्तिनास्तीत्यादिव्यवहारगोचरो भवितुमर्हति। अत एव तेन मकारेण सहाकारयोगोऽपि न भवति। अत्र यद्यपि "स्वराश्रयं व्यञ्जनम्" इति विधिः परिदृश्य

तथापि नचायं विधिरत्र परिगृह्यते, अस्य च केवलसर्वनिषेधप्रव-चनार्थकत्वात् । तस्य च व्यञ्जनत्वेनाभिवर्णनन्तु, वर्णसमाम्नायादोषरूपं भवेत् । अन्यथा तु मकारो वाचको न स्यात् । यद्यपि " रुक्माभं पुरुषं परञ्च " इत्यादिभिर्मकारस्य देवताद्यर्थकत्वं दृष्टम्, तथापि तादृशज्ञानस्य भ्रमरूपत्वात् उक्तं तत्सर्वमप्यात्मार्थकं भवति । आत्मनो योगेन ब्रह्मसंज्ञापि न तस्योच्यते । कार्याकार्ययोर्भिन्नत्वात्सर्वविरहितत्वाच्च आत्मनस्सर्वं विशेषणमिति निश्चितं भवति । स एव ज्ञातव्यः श्रोतव्यो निदिध्यासितव्यश्च भवति । अत एव

" प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वसुधीगम्यं विद्यात्तं पुरुषं परम् ॥ "

इत्यप्यात्मार्थकमिदं वचनं भवति। ततः परं यत्किञ्चित्तन्निषेधार्थकोऽयं मकार इति बोध्यं भवति ।

यद्यप्यहं ब्रह्मास्मीति ह्युच्यते, तथाप्यहमस्मीति क्रियायोगे ह्यात्मन एव ग्रहणं भवति । अहं ब्रह्मेत्युक्त्या हि नान्यद्ब्रह्मेति सूचितं भवति । अतो नाहं ब्रह्म, न त्वं ब्रह्म, न ब्रह्म स्वयमपीति शुद्धं ह्येतद्ब्रह्मेति विज्ञायते । यच्च वान्यत्किञ्चिदस्ति, तदात्मनः संबन्धरूपस्संसारः । आत्मनस्संसारस्य चास्तित्वमप्यावश्यकमित्यवगम्यते । असत्यपि संसारे चात्मनस्सत्वमवगम्यते ।

मिथ्यात्वान्न तथा संसारस्य; आत्मनो हि स्वतोभावस्वरूपत्वाच्च। उकारबुद्धया ह्यस्त्येव संसारः, नास्ति चात्मेति फलितं भवति। अस्तिनास्तीति द्वाभ्यां भावाभावपदार्थावुच्येते। तयोः प्रकाशस्त्वकारोकाराभ्यामेव भवति। यस्य येन संबन्धः, स तद्गुणं हि परस्परं लभते। अतो भावाभावयोर्गुणः परस्पराधिकरणो भवति। न ताभ्याञ्च यत्किञ्चिदन्यद्वस्तु विज्ञेयं भवतीति सिद्धम्।

" आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥"

इत्येतदर्थस्तु केवलात्मसंसारयोरेव चरितार्थः। तम इव तमश्चात्मनस्संसारो भवति। अस्यैव भावाभावौ च भवतः। न चाप्रतर्क्यादिप्रवचनमात्मन्येव न संसारे इति केनापि वाक्येन वक्तुं शक्यमिति वाच्यम्, मकारार्थवैय्यर्थ्यापत्तेः। अत एव नार्थोऽनर्थः, प्रसुप्तोऽप्रसुप्तश्च, प्रतर्क्योऽप्रतर्क्यो वितर्क्यश्च, ज्ञेयोऽज्ञेयो विज्ञेयश्च, भिन्नोऽभिन्नो विभिन्नश्च न भवति; किन्तु केवलमर्धमात्रन्तादिति स्पष्टं भवति। यद्यपि "ब्रह्मणि सर्वाणि लीयन्ते" इत्याद्युक्तिः, तथापि तदात्मन एव ग्रहणं भवति। ब्रह्मणः पदार्थत्वाभावात्तत्र लयोत्पत्तिस्थितिसामर्थ्यन्न वक्तुं युक्तम्। सर्वन्तत्सामर्थ्यासामर्थ्यञ्चात्मन्येव भवति। आत्मा हि किलासहायवान्व्यापकस्सर्वद्रष्टा सर्वशक्तश्च भवति। तस्माद्वेदे प्राणेन्द्रियपरो-

क्षापरोक्षसापेक्षनिरपेक्षहेत्वहेतुसाध्यासाध्यं नेत्यर्थतया, "मं ब्रह्म, खं ब्रह्म" इत्याद्युक्तं भवति । यस्य च न पूर्वापरौ, नार्थानर्थौ, तन्मकारवाच्यं भवति । तस्मादिदञ्जगदात्मभूतम्, तमःप्रकाशयुक्तम्, भावाभावविशिष्टञ्च द्रष्टव्यम् ।

अकारोकारयोर्हि योगेन सर्वाः क्रियास्समुत्पद्यन्ते । मकारस्त्वयं तत्प्रतिषेधमात्रवचनः सर्वैर्वियुक्तो निरपेक्षो न निषेध्यश्चेति मन्तव्यः । ज्ञानाविषयत्वादसामर्थ्याच्च तज्ज्ञेयम्, न बोध्यत्वेनोपयुक्तं भवति । ब्रह्मण्यप्ययं योगो भवति । एवंभूतमकारस्वरूपनिश्चयो ज्ञानविज्ञानयोगसांख्यानां फलं भवति । एवंविधप्रतिषेधश्च भावाभावनिश्चयाय ससाधनो भवति । अतो ह्येवन्निश्चित्य, सर्वमपि कार्यञ्चावश्यकं ज्ञात्वा, परमानन्दो भोक्तव्य इत्युपदेशः। सत्युकारव्यापारे, सर्वं कार्यजातं त्रितयक्रमेणभवति । एवमकारेऽप्यनेकत्वारोपश्च संक्षेपविस्तररूपो भवति । तदेतदेवं भवतीति निश्चयेन न किमपि चिन्तनीयं भवेत् । न हर्षशोकौ, न च महल्लघ्वित्यादिर्हि निश्चयः । तेन सर्वं संसारस्वरूपं सुखमवस्थीयते । मकारप्रतिषेध्यविज्ञानाय न यत्नः कश्चिदस्तीति हि सिद्धान्तः । सर्वञ्च ब्रह्मगतमस्ति । सर्वगतं हि ब्रह्म भवति । अतस्सर्वत्र सर्वं साध्यमसाध्यञ्च केवलप्रतिषेध्यस्वरूपं भवतीति निर्णेयम् । सर्वाश्रयोऽयमात्मा आत्माश्रयं सर्वमित्येतदपि भ्रममूलकं भवति ।

अतोऽयमात्मा नाश्रयो नाश्रयी च, केवलावश्यकत्वेन बोध्यो भवति । यदेतदपि ज्ञानम्—ममायम्, तवायम्, अस्मत्ज्ञातिः, तत्ज्ञातिः,मदीयम्, तदीयम्, अन्योऽयमन्यादिदम्, पवित्रोऽयमपवित्रोयम्, इदं पापमिदं पुण्यम्, बन्धोयं मोक्षोऽयमित्यादि; तत्सर्वं भ्रममूलकमेव भवति। आवश्यकेन विधिना तु केवलं सर्वं विज्ञेयमेव भवति। सर्वप्रतिषेधबोध्यत्वमात्रेण ब्रह्म विज्ञेयमेव भवतीति सर्ववेदानाम्, तद्विहितसिद्धान्तानां फलं भवति। अतस्तत्प्रवचनादिकं सर्वमप्यावश्यकं भवति । सर्वसिद्धान्तव्यवहारेणाकारोकारयोस्संयोगस्तद्वियोगश्च बोध्यो भवति । केवलप्रतिषेधमात्रेण हि न संयोगवियोगौ, नाभियोगः, न यत्नश्च भवति। नचायमात्मा प्रतियोगी, नानुयोगी, न विचार्यो नाविचार्यः, न निर्धार्यो नानिर्धार्यः, न नियोज्यो नानियोज्यः, न सर्वो नासर्वः, न प्रशस्तो नाप्रशस्तः, न सिद्धो नासिद्धः, साध्योऽसाध्यश्च नैवेत्यादिप्रतिषेधार्थो भवति । अत एव "निषिद्धस्सर्वान्तःप्रतिष्ठः पुराणः प्रसहस्समोऽयमात्मा,प्रथितः प्रसर्गोऽविधेयोऽयमात्मा,जन्यज्ञानोऽऽयमात्मा, प्रमाणप्रमेयोऽवधेयोऽयमात्मा, ज्ञेयोऽविशेष्यत्वावधेयो यमात्मा, नेदं ब्रह्म प्रतिषिद्धम्, वर्ज्यावर्ज्यविरहितञ्च, कुत्सितमकुत्सितम्, मूलममूलञ्चेत्यतो मः" इत्यादिर्बीजेन मकारः सम्यगुक्तो भवति। यद्यपि "तत्सद्ब्रह्मोति" प्रवचनम्, तथापि तच्च

अतोऽयमात्मा नाश्रयो नाश्रयी च, केवलावश्यकत्वेन बोध्यो भवति । यदेतदपि ज्ञानम्–ममायम्, तवायम्, अस्मत्क्वातिः, तत्क्वातिः,मदीयम्, तदीयम्, अन्योऽयमन्यदिदम्, पवित्रोऽयमप वित्रोयम्, इदं पापमिदं पुण्यम्, बन्धोयं मोक्षोऽयमित्यादि; तत्सर्वं भ्रममूलकमेव भवति। आवश्यकेन विधिना तु केवलं सर्वं विज्ञेय-मेव भवति। सर्वप्रतिषेधबोध्यत्वमात्रेण ब्रह्म विज्ञेयमेव भवतीति सर्ववेदानाम्, तद्विहितसिद्धान्तानां फलं भवति। अतस्तत्प्रवचना-दिकं सर्वमप्यावश्यकं भवति । सर्वसिद्धान्तव्यवहारेणाकारोकार-योस्संयोगस्तद्वियोगश्च बोध्यो भवति । केवलप्रतिषेधमात्रेण हि न संयोगवियोगौ, नाभियोगः, न यत्नश्च भवति। नचायमात्मा प्रतियोगी, नानुयोगी, न विचार्यो नाविचार्यः, न निर्धार्यो नानि-र्धार्यः, न नियोज्यो नानियोज्यः, न सर्वो नासर्वः, न प्रशस्तो नाप्रशस्तः, न सिद्धो नासिद्धः, साध्योऽसाध्यश्च नैवेत्यादिप्रति-षेधार्थो भवति । अत एव "निषिद्धस्सर्वान्तःप्रतिष्ठः पुराणः प्रसहस्समोऽयमात्मा,प्रथितः प्रसर्गोऽविधेयोऽयमात्मा,जन्यज्ञानोऽ-ऽयमात्मा, प्रमाणप्रमेयोऽवधेयोऽयमात्मा, ज्ञेयोऽविशेष्यत्वावधेयो यमात्मा, नेदं ब्रह्म प्रतिषिद्धम्, वर्ज्यावर्ज्यविरहितञ्च, कुत्सितम-कुत्सितम्, मूलममूलञ्चेत्यतो मः" इत्यादिबीजेन मकारः सम्य-गुक्तो भवति। यद्यपि "तत्सद्ब्रह्मेति" प्रवचनम्, तथापि तत्र

देशकालवस्त्वपरिच्छिन्नं सदिति संज्ञया चासतश्च भिन्नं तदिति प्रतिषेधफलं बोध्यम् । मकारेण न कस्यचिद्व्यावृत्तिः; नैव हि व्यापारस्य; किन्तु व्यापारविशिष्टानान्तदविशिष्टानाञ्चैव प्रवचनं भवति । तच्च कालसंख्यायोगवियोगधर्माधर्माश्रेयादिरूपम् । अतः "अप्रमेयं प्रतिषिद्धमप्रतिषिद्धं परं ब्रह्म साख्यम्, संख्या-देशकालवस्तुपरिणामान्ताद्यनाद्यनन्तवर्जितम्" इत्युक्तं भवति । तस्मादयं मकारः प्रतिषेधवचनोऽर्धमात्रो भवति । अत एव

" अकारोकारयोर्भिन्नं वर्णानां योगनिर्वृतम् ।
प्रशस्तमप्रमेयञ्च मस्वरूपं तदुच्यते ॥ "

इत्यादिवाक्यैस्तदर्थो बोधितो भवति । वर्णसमाम्नायेऽपि मकार-स्य व्यञ्जनानाम्, स्वराणाञ्च भेदः परिकल्प्यते । यद्यपि मकारस्य पवर्गेण स्थानप्रयत्नौ समौ परिदृश्येते, तथापि पवर्गत्वेन तदा-रोपो न युक्तः, स्थानप्रयत्नयोश्चारोपयितव्यत्वाभावात् आरो-पणस्य च संसर्गादिनियमविरोधात् अक्षरसमाम्नायप्रतिषिद्धानां स्थानप्रयत्नाद्यारोपे प्रयोजनाभावाच्च । अत एव स्थानप्रयत्नतुल्य-त्वेपि तस्य न केनापि वर्णेन सावर्ण्यंभवति । किञ्चार्धमात्रिकम-कारानुस्वारो विसर्गश्चायोगवाहत्वेनोक्तः । अयोगवाहानां हि न सावर्ण्यम् । अयोगवाहत्वञ्चास्य, केवलमक्षरसमाम्नायप्रति-षिद्धत्वमेव । आक्षरसमाम्नायिकानामेव हि सावर्ण्यम्, तेषामेव च

सर्वपरिणामः । यद्यप्यनुस्वारादीनामपि संहितायां सन्धिविकारो भवति, तथापि तादृशेनैव हि रूपेण तद्विकारो भवति । विसर्गस्य सकारादि प्रतीकम् । तत्रापि विसर्गः पाक्षिक एव । कदाचिद्विसर्गरूपेणैव विकारः परिदृश्यते । एवमनुस्वारमकारयोरपि । मकारानुस्वारे तु न भेदः । स च केवलमन्यवाक्याध्यवसेयो भवति, यथा—निषिद्धं प्रतिषिद्धञ्चेति शब्दद्वयम् । अत एव "मा संसारः, मात्मा च" इत्यादि स्पष्टं भवति । यच्च किञ्चिदस्ति नास्ति च संसाररूपात्मरूपम्, "तन्मा" इति फलितार्थः । यश्च मा, स न संसारः, नात्मा चे त्यपीष्ट एव । मकारस्वरूपन्तु संसारात्मनोर्विरुद्धम्, तत्सहितञ्च परस्परोपहार्यं भवति । अतो मकारस्य सन्ध्यादिनियमो न प्रशस्यते । तस्यायोगवाहसंज्ञयैव निर्वाह इति वैयाकरणानां सिद्धान्तः । अत एव चास्याकारोकाराभ्याञ्च न योगः; किन्तु द्वयोः प्रतिषेधस्वरूपस्सत्यासत्ययुक्तायुक्तनिषेधकस्वरूपश्च मकारो भवति । यत्र चैतत्त्रयम्, प्रवचनरूपम्, संसरणमनिषिद्धञ्च, स प्रणव इति वेदितव्यम् ।

त्रयाणां योगस्वरूपं ब्रह्म भवति । न तत्रैकैकं किञ्चिद्वस्तु चास्तीति निर्णेयम् । नायं संसारः स्वयं दृश्यते । नापि चात्मा तद्भिन्नः परिदृश्यते । नापि तद्द्वयोर्ब्रह्मसंज्ञा । तच्च संयोगवियोगरहितमन्यद्वेदितव्यं भवति । शब्दकालाभ्यामतीत-

त्वान्न तद्ब्रह्म प्रवचनलभ्यं भवति । तस्मादेतादृशमोमित्येतत्तादृश-
प्रकारत्रयावस्थितब्रह्मबोधकं भवति । यद्यप्येवं ब्रह्मेत्युक्त्या, सं-
सारोऽयं ब्रह्म, उतात्मा, अथवा निषिद्धमिति सन्देहः स्यात् ;
अतस्त्र्यर्थको वर्णानां त्रयाणां सङ्घातः ओमित्युक्तो भवति, तथापि
व्याख्यानेन तत्सङ्घातस्य तादृशार्थकस्य सत्त्वेऽपि न वर्णानां त्रयाणां
पृथग्भावः । तथा व्याख्यानन्तु तादृशयोगयुक्तत्वनिरूपणार्थं
भवति ; येन त्रयाणां बोधो भवेत् । वस्तुतस्तु न तेषां पृथ-
ग्भावः परिदृश्यते । न संसारश्चात्मनो भिन्नस्तिष्ठति । एवमात्मापि
न संसाररहितस्तिष्ठति । एवं प्रतिषेधार्थकमकारं विना नचैतद्द्व-
योरुपस्थितिर्भवति । अतोऽस्य प्रणवस्य भागत्रयेण कथनं केव-
लसर्वबोधायेति मन्तव्यम् । प्राधान्यात्तु केवलमेकाक्षर एव सः,
यथा चावयवी तदवयवेभ्यो भिन्नः परिदृश्यते । अत्र चोभयोस्सत्ता
त्वेकरूपैव भवति । एवमेव हि पर ब्रह्मेति विज्ञेयं भवति । उदा-
हरणमात्रभूते संसारे न तदर्थकत्वम्, एतत्त्रयाणां विभागैकत्व-
ञ्च द्रष्टव्यम् ।

आत्मसंसारप्रतिषेधार्थकानामकारोकारमकाराणां त्रयाणां
केवलानुभवेन त्रित्वैकत्वं बोध्यम् । अनेकैकयोरप्येवंवृत्तिः कल्प-
नीया । तत्र चैकस्मिन्ननेकत्वविज्ञानम्, अनेकस्मिन्नप्येकत्व
विज्ञानञ्च भवति । वस्तुतस्तु अनेकैकत्वयुक्तं तादृशमेकं ब्रह्म

विज्ञेयं भवति। यद्यप्येकानेकभानं पृथग्भावेन भवति, तथापि वास्तवैकत्वविज्ञाने च न भेदः परिदृश्यते। एकादिव्यवहारे च सर्वत्रैकत्वबुद्धिविशिष्टबोध एव मुख्यः। बहुत्वसंख्याविशिष्टबोधस्त्वयमेकोऽयमेक इति बहूनां समाहाररूप एव। बहुत्वमपि चैकावस्थयावगम्यते। यथा चैकः पुरुषः बाल्याद्यवस्थया, बालः, युवा, कुमारः, वृद्धश्चेत्याद्यनेकव्यवहारविषयो भवति, यथाज्ञः प्राज्ञ इति। नह्यत्र पुरुषभेदोऽवगम्यते। कालिकभेदेन बालोऽयमित्यादिपुरुषभेदभ्रमस्समुद्भवति। अयमित्यनेन भेदोऽवगम्यते। एवमेव ह्येकस्माद्वृक्षवीर्यात्समुत्पन्नाश्चानेकेऽप्येकजातीया एव ते वृक्षा भवन्ति। तेभ्यश्च तद्वीर्यं तस्माच्च तादृशाः। अत्र च भेदावगतिः। एवमेव ह्येकानेकयोस्संबन्धः। अत एव संख्यावधिर्न परिदृश्यते। बुद्धिविराम एव तदवधिनियामकः। एकं शतं सहस्रं लक्षमित्यादिव्यवहारस्तु भ्रममूलक एव। अवस्था हि पुनरेतादृशीति नियता। नात ऊर्ध्वं संख्या भवति। वस्तुतस्तु संख्ययावस्थासंभवः। सर्वमेकस्मादारभ्यते, एकस्मिन्परिसमाप्यते। अतस्सर्वत्रानन्तत्वमेव भवति। एकस्मिन्व्यक्तिवचनेऽप्यनेकत्वज्ञानं तादृशभ्रमरूपमेव। तस्मादेकानेकयुक्तमेकमेव; न पृथक्पृथगनेकं भवति।

एवमेव संसारात्मप्रतिषेधाश्च भवन्ति। यं विना न

यस्योपस्थितिः, न तयोः पृथग्भावोः वक्तुं शक्यः । किन्तु स्वयमेक एव तिष्ठति । संसारस्त्वयमात्माधीनः, तथैवायमात्मा संसाराधीनः । तदेवं निश्चयेन न तयोः पृथग्भावस्समुपपद्यते । तयोस्संबन्ध एव निषिद्धो भवति ॥

तदेतत्त्रयाणां ब्रह्मस्वरूपत्वमुक्तं भवति । अस्यैव प्रणवस्य त्रिकूटत्वञ्चोक्तम् । यदेतत्त्रयाणां विभागेन विज्ञानम्, तद्भ्रमरूपमेव । नान्यथा सप्तपदार्थभ्रमसंभवः । तदेवमकारोकारमकाराणां व्याख्यानेन ब्रह्मविज्ञानं सिध्यति । आत्मा संसारः निषेधश्च बुद्धिविरामायोक्तो भवति । अन्यथा तु साक्षादेकं विशुद्धं ब्रह्मत्रयं भवेत् । तस्य केवलकार्यविज्ञानाय हि वर्णत्रयात्मकः प्रणवशब्दश्चोच्यते । यथा चैकस्यैव पुरुषस्यानेकवृत्तिकत्वमुपलभ्यते, यथाज्ञः प्राज्ञश्चेति । कार्यदृष्ट्या हि कारणावश्यकत्वम् । तथैवात्राप्यात्मानात्मतत्संबन्धनिषेधानामावश्यकत्वमभ्युपगन्तव्यं भवति । यद्यपि "मं ब्रह्म खं ब्रह्म" इत्याद्युक्तिः, तथापि तत्र संज्ञासंज्ञिव्यवहारः । संज्ञा तु संज्ञिनां बाधिका भवतीति शब्दशास्त्रसिद्धान्तः । तेन "सर्वं खल्विदं ब्रह्म" इत्यादि स्पष्टमुक्तं भवति । सर्वशब्दोऽप्येतत्त्रयस्यैव वाचको भवति । यदिदमेतत्त्रयवाच्यं तदेव सर्वं भवतीति बोध्यम् । तेनात्मा ब्रह्म, संसारश्च ब्रह्म, निषिद्धञ्च ब्रह्म, सर्वञ्च ब्रह्मेति फलितोऽर्थः । संज्ञया च हि नियमेन संज्ञिनां प्र-

हणं भवति; संज्ञिना तु न संज्ञाग्रहणसंभवः, तेनैव सहयोगस्य दृष्टत्वात्। सज्ञिमात्रग्रहणार्थस्संज्ञाप्रयोगः। पृथङ्निर्दिष्टाना हि संज्ञा न कदापीत्येतन्न्यायसिद्धं भवति; यथा—एकजातिवाचकशब्दोच्चारणेन तज्जातिस्थसर्वव्यक्तीनां ग्रहणं भवति। व्यक्तया हि न जातेर्ग्रहणम्। तस्मात् "ओं ब्रह्म परात्परम्" इति सूत्रम्। ओमित्युक्त्या हि सर्वशब्दवाच्यानां सर्वेषां पदार्थानां ग्रहणात् "सर्वं खल्विदम्" इत्याद्युक्तिस्संगच्छते। अत एव ब्रह्म त्रितयात्मकं प्रस्फुटितम्, सर्वस्थम्, सर्वस्वरूपम्, भिन्नमभिन्नमित्याद्युक्तम्। अहं ब्रह्मेत्युक्त्या हि सर्वं गृह्यते, एतत्त्रयाद्भिन्नो नाहमिति नियमात्। एकैकस्मिन्नपि शब्दे चैतत्त्रयं बोध्यं भवति। वैयाकरणानाञ्च प्रशस्तोऽयं पक्षः। एतत्त्रयात्मक एव शब्दः, ब्रह्मणश्च तथात्वात्। त्रितयात्मकत्वेनैव शब्दब्रह्मेत्यभिधानं भवति। एतत्त्रयाणां परस्परकार्यकारणभावो न भवति, तथैव तदावश्यकत्वात्। यद्यपि यदिदम्, "तत्त्वमसि" इत्यादिभेदवचनं वाक्यम्, तथापि तदर्थस्याभेदपरत्वमवगन्तव्यम्। यदेतत्त्रयमात्मा संसारो निषेधश्च, तत्त्वमसि, तदहमस्मि, तदयमस्तीति; त्वमहमयमिति भेदरूपम्, तन्न किञ्चिद्भवति, त्वमहमयमित्यभिधानत्रयेण तदेकत्वात्सर्वमेकस्वरूपमस्तीत्यर्थः फलितः। अहमन्यस्त्वमन्योऽयमन्य इति हि भ्रमेण भासते। अस्यैव हि मिथ्याप्र-

पञ्चत्वेनोक्तिर्भवति। प्रतिशब्दे तु अहंत्वमयमित्यत्र चैतत्त्रयं ज्ञातव्यं भवति। इदमेव हि ब्रह्मविज्ञानं भवति, यदिदं सर्वरूपत्वेनोच्यते, तत्र सर्वत्र चैतत्त्रितयस्य स्थितत्वात् । स्वयं ब्रह्मेति प्रतीत्या ज्ञाता स्वयं भवति। निर्विषयकत्वात्तु न ज्ञानसभवः । तस्माद्यदेतत्त्रयस्वरूपविज्ञानम्, तदेव ब्रह्म विज्ञानं भवति । तेन त्यक्तभ्रमज्ञानः ब्रह्मविद्भूत्वा, यदित्थं ब्रह्म तत्स्वयं ब्रह्म इति जानाति । न तत्र हि स्वपरान्ययुष्मदस्मादिदन्तदादिशब्दानां पृथक्पृथगर्थत्वेन भानम् । तस्यैव प्राधान्येन बोधनाय प्रणवो भवति । तस्मात्तादृशं तज्ज्ञातव्यमित्युपदेशफलं भवति । अकारेण चायमात्मा, उकारेण जगत्, मकारेण च तयोः संबन्धानिषेध इति विज्ञेयम् ॥ अत एव—

> "अकारस्तु स्वयं ब्रह्म चोकारस्तत्फलं जगत् ।
> मकारस्तदसंबन्धो ब्रह्मैतत्त्रितयाहितम् ॥
> अकारात्मा च तद्ब्रह्म संसारो ब्रह्मसवृतः।
> मकारब्रह्मसंस्पृष्टत्रयाणां विहिते विधिः ॥"

इत्यादिवाक्येन, त्वं ब्रह्म, अहं ब्रह्म, अयं ब्रह्म, न त्वं ब्रह्म, नाहम्, न चायम्, सर्वं त्वम्, सर्वमहम्, सर्वश्चायम्, प्रपञ्चार्थमप्रपञ्चरूपमित्याद्युच्यते। यत्त्वम्, तदेवाहम्,यदहम्, तदेव त्वम्-अयमप्येवमेवेति स्पष्टम्। सकारणमेव चैतत्त्रयं संसारेऽपि दृश्यते।

रागद्वेषौ, तत्त्यागश्च तत्रैव दृश्यन्ते। तेषामेव त्रितयत्वेन बोधः। एतेन त्रितयसंबन्धेन, ब्रह्मणा सर्वम्, सर्वैश्च ब्रह्मेति निश्चितं भवति। पित्रा पुत्रः, पुत्रेण च पिता समुत्पन्नः; पुत्रजायमानः पिता भवति, पितृजायमानः पुत्रो भवतीत्यपि सिद्धम्। अत एव "सर्वैस्सर्वं जातं विनष्टं स्थितश्च सर्वैस्सर्वं संपन्नम्, सिद्धश्च सर्वधा सर्वकालिकं सर्वम्, सर्वस्माद्वाचः" इत्यादिस्पष्टतया अकारो ब्रह्म, उकारो ब्रह्म, मकारो ब्रह्म, इत्यपि प्रतिष्ठितं भवति। अत एवात्र लिङ्गादिनियमो न दृश्यते, अव्ययानामलिङ्गत्वात्। अत एवैतेषां सर्वलिङ्गविभक्तिवचनत्वम्, सर्वार्थत्वञ्चोक्तम्। अत एव चैतेषामव्ययपाठत्वेनोपस्थितिः। अकारोकारमकाराणां त्रयाणां प्रवचनस्य मन्त्रत्वमप्युक्तं भवति। अत एवाकारस्य, उकारस्य, मकारस्य च, न किञ्चित्कार्यार्थत्वं शब्दशास्त्रे समुपपादितम्; किन्तु केवल प्रणवसंज्ञया तदुक्तिः। एतत्त्रितयव्याख्यानेन चास्य त्रितयस्य आत्मसंसारतत्संबन्धनिषेधानां पृथक्त्वेन भानम्। क्रमश्चात्र कालेन तदावश्यकविधिना च विज्ञेयो भवति। तस्मादकार आत्मार्थकः, उकारो ह्यनात्मार्थकः, मकारस्तयोस्संबन्धनिषेधार्थक इति निश्चितो भवति॥

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे प्रकृतिसन्धिप्रकरणे मकारार्थनिरूपणं नाम चतुर्थस्तरङ्गः॥

ॐ

## ॥ अथ पञ्चमस्तरङ्गः ॥

अथ चैतेषां वर्णानां त्रयाणां संयोगवियोगवृत्तिर्ज्ञातव्या भवति। नह्यावश्यकानां संयोगावियोगवृत्तिः कदाचिदपि भवति । संयोगस्त्वेषामेव, येषां पृथग्भावस्समुपलब्धो भवति । पृथग्भावो हि वियोगे नियामको भवति । तत्रानावश्यकस्यापि प्रयोजनं भवति, सत्यावश्यकत्वे संयोगः, तद्विरोधे वियोगश्च विज्ञायते । यद्यप्यस्यनावश्यकस्यापि संयोगः, तथापि तस्यावश्यकान्तर्गतत्वं बोध्यं भवति । "नावश्यकः कश्चिद्विद्यते" इत्यतस्संयोगावियोगौ न कस्यचिद्भवत इति स्पष्टमुक्तं भवति । यद्यप्यवैय्यर्थ्यं शब्दानामुक्तम्, तथापि संयोगवियोगशब्दयोस्तदर्थयोश्च क्रम एव तत्र कारणं भवति। क्रमेण ह्यवस्था विज्ञायते । तयैव भवतस्संयोगवियोगौ । अनेनास्य संयोगः, अनेन च वियोग इति तु भ्रममूलक एव । यदिदं त्रितयं संसारात्मनिषेधरूपम्, तस्मिन्संगवियोगवृत्तिर्हि केवलारोपरूपैव भवति। सत्यावश्यके संसारे, साकमात्मना भवति संयोगः। तस्मादयं संयोगस्तादृशश्चावश्यकः प्रतीयते । आत्मसंसारयोर्निर्धारणं हि यस्यावश्यकम्, यस्मिंश्चावश्यकमित्यादिपृथक्करणम्, तदेव वियोगः। अन्यथा तु संसारावश्यको भवत्यात्मा, आत्मावश्यकस्संसार इति स्यात् । तयोः परस्परं कर्तृत्वम्,

कार्यत्वम्, कारणत्वं चेत्यपि विज्ञेयम्। परस्परं सति तयोः कर्तृत्वकार्यत्वकारणत्वे, संयोगवियोगवृत्तेश्चापि परस्पराश्रयत्वम्। सह चात्मना संसारस्संयुक्तः, आत्मा च तेन सह संयुक्त इति तु संयोगः। भेदद्वयावस्थितत्वाद्योगोऽपि चोच्यते। यथा—ज्ञान्यज्ञानी च। दृश्यते तस्मिन्पुरुषे ज्ञानाज्ञानभेदः सति च भ्रमनाशे ज्ञानी, असति च तस्मिन्नज्ञानी चेति तत्र संयोगवियोगौ विज्ञेयौ। एवं भ्रमोऽपि नात्मनि, किन्तु केवलं संसार एव। तत्र केवलं तत्सत्तामात्रविधानम्। तेनैव संयोगवियोगास्थितिः। अतः सर्वे वर्णा वियुक्ताः संयुक्ताश्चेति स्पष्टमेव। संयोगवियोगयोः कारणन्तु न किञ्चिदस्ति। अत एव स्वभावसिद्धौ रागद्वेषौ। त्यागस्तु तत्पर एवेति निश्चयः। अतः सन्धेर्विवक्षा, तदभावश्च भवति। विवक्षायां हि सन्धिः, नाविवक्षायां भवतीति सिद्धान्तः। विवक्षा च व्यपदेशकार्याधीना भवति। अविवक्षा तु स्वाधीना भवति। वस्तुतस्तु आवश्यकेन नियमेन, विवक्षाविवक्षासन्ध्यसन्धयश्च भवन्ति। तस्माद्विज्ञेयो भवत्यकारोकारमकाराणां सन्धिः। यद्यप्यस्याप्रातिपदिकत्वमसन्धिमत्त्वञ्चोक्तम्। तथापि तत्कारणभूतेन संयोगविभागयोर्भावाभावरूपत्वेन स्थितेनावश्यकेन संसारात्मनस्सम्बन्धेन संध्यादि वक्तुं युक्तम्। अस्ति च सन्धिप्रातिपदिकयोस्संबन्धः। प्रातिपदिकानामेव हि

सन्धिरित्यभिधानम् । प्रातिपदिकं पदं वाक्यं सन्धिरित्यभिधीयते । प्रातिपदिकभूतश्चायमात्मा भवति, संसारश्च वाक्यरूप इति शब्दसृष्टिक्रमः ।

आत्मनः संसारयोगस्यावश्यकत्वात्त्रयाणामेतेषां सन्धियोग्यत्वमस्ति । संबन्ध एव हि तद्योग्यताकारणं भवति । तत्संबन्धरूपो मकारस्तयोरूर्ध्वं तिष्ठति । आत्मनः संसारसंबद्धत्वादकारोकारयोः सन्धिरसन्धिश्च वाच्यो भवति । यद्यपि नात्मनः स्वस्वरूपेणावस्थितिर्विना हि संसारम्, तथापि तद्वृत्तिव्यवधानात्स्वभावास्थितिरूपप्रकृतिभावः । अत एव वर्णानामपि प्रकृतिभावः शब्दानुशासितः । सन्धिप्राप्त्यप्राप्त्योश्च सार्वकालिकत्वं भवति । अत एव चायमकारस्सन्धेयः परिदृश्यते । व्यवहारदृष्ट्या तु अकारोकारयोर्योगः कथितो भवति । वस्तुतस्तु त्रयाणां संयोगवियोगौ न दृश्येते । त्रयाणां धर्मस्तु परं ब्रह्म एवेति सिद्धान्तः ।

अकारस्यैव हि सर्वशक्तिमत्त्वमुक्तं भवति । शक्तिमानित्युक्तेः शक्त्या सह योगस्त्वावश्यकः । एवन्नियमेन हि अकारं विना न वर्णोच्चारणमिति सिद्धान्तः । तेन सर्वत्र सन्धिस्थोऽयमकारो ह्यात्मवत् । अत एव "सर्वत्रात्मानं पश्येत्" इत्याद्युक्तिः । सर्वात्मा सर्वत्र सर्वं सर्वेण पश्येदिति हि सन्धेः फलं

भवति। यथा—जीवदेहयोः सन्धिः। न विना च जीवं देहसंज्ञा, एवं देहं विना न जीवसंज्ञा च भवतीति हि संबन्धफलम्। एवमेव सर्वस्मिन्नात्मनि, संसारेऽपि च बोध्यम्। अत एव वीर्याधारभूतोऽयं वृक्षः तदाधारभूतं वीर्यञ्च भवति। एवमेकस्मादप्यनेकम्, तस्मादप्येकमिति संख्याशास्त्रसिद्धान्तः। तस्मादकारोकारयोः सन्धिः। मकारस्तु तत्सन्धिरूप इत्यवधेयम्। यद्यपि तत्र प्रकृतिभावसंभवः, तथापि तस्य न पारमार्थिकता। सिद्धान्तस्तु प्रकृतेः सन्धेश्च परस्पराभिन्नत्वात्तदनपेक्षत्वाच्च तादृशं संधिप्रकृतिभावविशिष्टं प्रणवस्वरूपमिति सिद्धम्।

एवं ब्रह्म च तादृशं प्रकृतिसन्धिसमाहितं निषिद्धञ्च भवति। "सर्वं ब्रह्म" इत्युक्त्यापि सन्धिप्रकृत्योर्ग्रहणम्। सन्धिप्रकृतिप्रतिषिद्धञ्च ब्रह्मेति, तदेवेदं सर्वमिति चानुसंधानात्त्रयाणां सन्धिरूपत्वमुक्तम्। सन्धिप्रकृतिरूपत्वेन चैतेषाम्, वर्णसमाम्नायेऽपि सन्धिप्रकृतिरूपत्वं विज्ञायते। एतत्सन्धिप्रकृतित्वयोगेन, तादृशो पस्थित्या च शब्दोऽनन्त इति विज्ञायते। अत एव "शब्दोऽयमनन्तो ब्रह्मभूतस्सन्धिप्रकृतिस्थितो विनष्टोऽविनष्टो भवति" इत्युक्तम्। ब्रह्मस्वरूपप्रवचनमपि साध्यमसाध्यम्, प्रसिद्धमप्रसिद्धम्, दृष्टमदृष्टञ्चेति विज्ञेयम्। तस्मात्त्रयाणां सन्धिरावश्यको भवति॥

अकारोकारमकाराणां क्रमोऽपि कालानुगुणमावश्यक इति

नियमेन दृश्यते । पूर्वमात्मा भवति, तदुत्तरश्च संसारः । संसारदृष्ट्या तयोः पूर्वोत्तरत्वम्, विपरीतत्वञ्च प्रतीयते । आत्मनस्संसारबद्धत्वात्, मकारस्य संबद्धरूपत्वाच्च पूर्वोत्तरत्वनियमोऽप्ययुक्तो भवति । येन यस्संबद्धस्तस्य तास्मिन्क्रमनियमोऽपि तादृशः । नियमाश्रयणञ्च न किञ्चिदित्यपि ज्ञेयम् । यत्पूर्वम् , तदेवोत्तरम् , यच्चोत्तरम् , तदेव पूर्वमित्यन्योन्याश्रयश्च भवति । इदमेव पूर्वमिदमेवोत्तरमित्ययं विधिरनावश्यको भवति । अत एव " सर्वं पूर्वोत्तरम्, अनादि अनन्तम्, नित्यमनित्यम् ,उत्पन्नमुत्पादकम् , वृत्त्यवृत्ति चोपस्थितम्" इत्याद्युक्तिः। तस्मात्सन्धौ न पूर्वोत्तरत्वं विज्ञेयं भवति । यद्यप्यनेनास्य सन्धिरिति प्रवचनम्, तथापि सन्ध्यवस्थायां न तद्भेदो युक्तो भवति । तेनैव "संयुक्तं न वियुज्येत" इत्युक्तं भवति । अत एव संबन्धे ह्यभेदन्यायोक्तिस्सगच्छते ।

भिन्नानां पदार्थानां संबन्धस्त्वनित्य इति सर्वसम्मतं भवति । नित्यसंबन्धस्त्वभिन्नपदार्थे एव निश्चितो भवति । अनावश्यके नहि भेदविज्ञानं भवति । अत एव द्रव्यस्य गुणकर्माश्रयत्वम्, गुणकर्मभिन्नञ्च द्रव्यं भवति । न च द्रव्यं गुणकर्मानाश्रयं भवतीत्यस्यावश्यकार्थकत्वम् । एवमेव ह्यकारोकारमकाराणां गतिर्भवति । यद्यपि मकारस्य प्रतिषेधरूपत्वमुक्तम्, तथापि संबन्धरूपत्वाद्द्वयोर्मध्ये तस्य तृतीयत्वेन ग्रहणम् । सबन्धस्त्वावश्य-

रूपयोः पदार्थयोर्भवति । संबन्धो हि तृतीयो भवति । संबन्ध-रूपो मकारस्तयोर्भिन्न इति स्पष्टमेव । तस्मादकारोकारयोरात्म-संसारवाचकयोश्च गतिं दृष्ट्वा तत्प्रवचनपरत्वेन तयोस्सन्धि-र्विज्ञेयो भवति ।

यद्यप्यन्यत्वेनाकारोकारौ भासेते, तथापि तत्सत्तायाश्चै-करूपतया सन्धिरुपयुक्तो भवति; आत्मधारणानुकूलव्यापार एव हि सत्तेत्युक्त्या तयोस्सत्ता त्वेकैव भवति, "यः संसारः स एवात्मा यश्चात्मा स एव संसारः" इति श्रुतेः। यद्यपि संसाराद्भिन्नश्चायमात्म भवति, आ मुक्तेस्संसार इति श्रुतेः; तथाप्येवंज्ञानं भ्रममूलकमेव भवति। संसारपरित्यागायैव ह्येवमुक्तं भवति । संसारस्तावदेव, यावदित्थंभूतमात्मसंसारविषयकं विज्ञानमिति हि तदर्थः । संसारादारभ्य मुक्तिरिति हि तत्फलितार्थः। आमुक्तेस्संसार इति श्रुति-वाक्येनाप्यज्ञानविनाशस्सूच्यते । यदिदंशब्दैः पृथगेव सर्वं वि-ज्ञायते तदिदमसंबद्धमज्ञानमिति निश्चयः । "ऋते च ज्ञाना-न्न मुक्तिः" इति तदनन्तरं वचनमिदम् । ज्ञानं विना न मुक्ति-रिति तदर्थं विज्ञाय, ज्ञानार्थं यत्नः स्वीकार्यः। भेदज्ञानमेव सर्वत्र भवति। यत्नेन ज्ञानी भूत्वा मुक्तिं प्रपद्येत इत्युपदेशः। तस्माद्यदित्थ-मात्मनः संसाराभिन्नत्वविज्ञानम्, तदेव मुक्तिसाधनमिति सिद्धान्तः। यद्यपि द्रव्यगुणकर्मणां भेदो विज्ञायते शब्दभेदप्राबल्येन, तथापि

तदावश्यकत्वान्न भेदः । यदिदं द्रव्यं तदेव गुणकर्मभ्यामभिन्नमिति विज्ञेयं । अत एव "नाद्रव्यं किञ्चित्" इति सर्वोक्तिः सङ्गच्छते ।

विना प्रातिपदिकं न शब्दस्य स्थितिर्भवतीति वैयाकरणसिद्धान्तः । तस्मादात्मनः संसारस्य चाभेद एव ब्रह्मेति प्रवचनम्, तद्बीजेन च सन्धिरिति मन्तव्यम् । एवं यो ह्यकारस्तस्य प्रातिपदिकत्वम्, एवमुकारस्यापि तत्त्वमिति नियमेन चोभयोः प्रातिपदिकत्वात्सन्धिर्योग्यो भवति । यद्यपि सन्धिना द्वयोरेकस्यान्यस्वरूपत्वं भवति, तथापि तस्य नान्यस्वरूपत्वम्, वस्तुतस्साम्यात्। एवमकारोकारमकाराणा त्रयाणां सन्धिना ह्योमिति शब्दस्वरूपं संज्ञायते । तदेव ब्रह्म भवति । अत एव "नेह नानास्ति किञ्चन" इति चरितार्थम् । यदिह द्वयोस्संवर्त्तने नानात्वं भासते, तन्न; केवलं भ्रमरूपन्तत्, "सर्वं सर्वत्र सर्वधा सर्वोपयुक्तं सार्वकालिकं ब्रह्म" इत्याद्युक्तेः । यच्च किञ्चिन्नानात्वदृश्यते, तत्सर्वमयुक्तं भवति ।

त्रितययुक्तन्त्वावश्यकं सर्वमिति हि तत्फलं भवति । यद्यप्येकोऽहं बहु स्यामिति वाक्यम्, तथापि नानात्वं नोपयुक्तम्। बहुत्वमपि तादृशन्त्रितययुक्तमेव भवति । एकस्माद्बहवः प्रजायेरन्नित्युक्त्या एकानेकशब्दार्थानामभेद एव बोध्यो भवति । यश्च यस्माज्जातः, स तदभिन्न इति युक्तम्, एकोऽहमित्युक्तेश्च ।

अहमित्यस्यात्मार्थत्वेन, तद्वहुभवनमप्यात्मन एवेति विज्ञेयम् । एकस्माद्धि वीर्याद्बहवो वृक्षाः प्रजायन्ते, न तद्वीर्यवृक्षयोर्भेदः, तद्वत्प्रकृतेऽपीति ज्ञेयम् । यद्यपि रूपान्तरं दृश्यते, तथापि न तत्र भेदसंभवः। अन्यत्वेन भानमपि केवलं ज्ञानरूपत्वेन, रूपान्तरस्याप्यावश्यकत्वात् ततो जायमानत्वाच्च । वस्तुतस्तु तत्सादृश्यमेव । तस्मान्नानात्वस्य परिहारो युक्त एव भवति, एकश्च योऽयमात्मा स एव बहुरूप इति तद्व्याख्यानात्। यदि आत्मनो बहुत्वमन्यथाभवनरूपमुक्तम्, तदा चैकस्माद्बहवः सञ्जायेरन्निति तन्मूलवाक्यमपि युक्तं भवति ।

अहमित्युक्त्या हि तयोः परस्पराभेदोऽपि च सूच्यते । अत एव "नायमात्मा संसारः न संसारोऽयमात्मा न तयोः पृथग्भावो युक्तः,न तयोरपेक्षासंसर्गसंस्काराः,नापि च धर्माधर्मगुणागुणाः" इति हि स्पष्टमेव । तदेवमेकरूपमनेकस्वरूपं गतिरनुष्ठानं सर्वं सर्वाश्रयं सिद्धमित्युपदेशः । तस्मात्तयोः सन्धिर्युक्त एव भवति । तथा सर्वेषां पदार्थानां सर्वैः सह संबन्धः, सर्वं सर्वत्र संबद्धमिति प्रख्यातत्वात् नानात्वस्य निषेधाच्च । संन्धिरपिच भवत्येव, यथा वर्तमानोक्त्या ते भूतो भविष्यन्निति भवति। वस्तुतस्तु वर्तमानमेव सर्वम्, न भूतो न भविष्यत् यत्किञ्चिदस्तीति हि नियमः । यद्यपीन्द्रियाणामणुत्वमहत्त्वादिकं गोचरं भवति, तथापि तथाभानं

भ्रमरूपमेव । यदिदमणु दृश्यते, तदेव महद्भवति । तथा महदपि चाणु भवतीति सर्वसिद्धान्तेन सन्धिः सन्धिस्थः सन्धेयश्चैकोऽकारएव ।

वर्णसमाम्नायस्यैव कारणत्वमकारोक्तं भवति, नहि कारणाद्भिन्नं कार्यमिति नियमात् । वर्णसमाम्नाये एव अकारस्य सत्त्वात्सर्वैर्वर्णैः सहाकारस्य सन्धिर्भवति । पुनस्तेच वर्णाः परस्परं सन्धेया भवन्ति । स्वराणां तैस्सह, व्यञ्जनानां तैः सह च सन्धिरुपस्थितो भवति । तथा स्वरव्यञ्जनयोरपि च सन्धिः । एवमेव मकारोकारयोर्व्यञ्जनस्वरभूतयोः सन्धिः । यश्च प्रणवसंज्ञकः ओमित्यव्ययशब्दः, तत्र सर्वं कार्यजातं शाब्दिकं भवतीति विज्ञेयम् । यद्यप्यव्ययानां सन्ध्यादिकार्यस्य निषेधः; तथापि तस्यासार्वत्रिकत्वान्मकारस्य तद्युक्तत्वं भवति । सहितविरहितयोरपि च वृत्तिश्चैकैव भवति, निषेधार्थकस्य मकारस्य संबन्धरूपत्वात् । यद्यपि प्रकृतिभावस्य संधेः पृथक्पाठः, तथापि तयोः प्रकरणसमत्वमेव । प्रकृतेरपि सन्धिर्ह्युच्यते । यथा—प्रकृतिसन्धिः, स्वरसन्धिः, व्यञ्जनसन्धिश्चेति सन्धेस्त्रित्वमवगम्यते । अत एव लिङ्गकारकविभक्तीनाम्, संख्यायाश्च प्राबल्यमुक्तं भवति । कारकस्य, समासस्य, सन्धेश्च, वाक्यत्वमेवं युक्तं भवति । प्रत्ययानाम् , तत्प्रयुक्तानाञ्च, साध्यत्वेन हि विवक्षा भवति । तस्मान्न सन्धिप्रकृत्योर्भेदः ।

सन्धिग्रहणेनैवात्र प्रकृतिग्रहणम् । वस्तुतस्तु शब्दशास्त्रे भेदद्वयं भवति, "सुतिङौ समाख्यातौ प्रातिपदिकधातुसंज्ञकौ" इत्याद्युक्त्यापि, संसारात्मनोर्ग्रहणं भवति । प्रातिपदिकं चायमात्मा धातुरेव हि संसार इति व्याख्यानं फलितं भवति । धातुप्रातिपदिकयोरभेदोऽप्युक्तो भवति । यद्यपि धातुभिन्नः शब्द एव प्रातिपदिकमिति, तथापि विशेषसंज्ञयैव भेदः, शब्दत्वेन चोभयोरभेदात् उभयोरप्येकमूलकत्वाच्च । यदेवप्रातिपदिकं तदेव धातुस्वरूपमिति परस्पराभेदः। तथोक्तेश्च तयोरनित्यः संबन्धः। वस्तुतस्तु "धातुप्रातिपदिकानाञ्च नित्यः संबन्धः" इत्युक्त्या तयोर्नित्यसंबन्ध इति स्पष्टतया न तयोर्भेदः, सुबन्तं प्रातिपदिकम्,तिङन्तो धातुरिति सिद्धान्तात्'सुपां सुपा,तिङां सुपा, तिङां तिङा,सुपां तिङा" इति संबन्धोक्तेश्च । तस्माद्धातोः प्रातिपदिकेनापि संबन्धित्वम्। अत एव "धातुप्रातिपदिकाभ्यां संबन्धः" इति सूत्रम् । शब्दानां सन्धिरिति तद्व्याख्यानात्, अकारोकारयोस्सन्धिर्विषयः। यद्यपि धातुः, प्रातिपदिकं, पदम्, तथापि पदानां समाहारः सन्धिरित्युक्त्या, सर्वे शब्दाश्चैवमेव सन्धेया भवन्ति ।

> "तस्मात्सन्धिर्विभक्तिश्च लिङ्गतत्कारकं तथा ।
> संख्यासमासयोगश्च प्रत्ययः परमस्तथा ।
> शब्दानां संवृतो भूयाद्यत्नस्थानानुयोगतः । " इति ॥

अत एव "तदक्षरं ब्रह्मशब्दः ब्रह्मवर्णं ब्रह्मावीद्भिः" इत्यपि च स्पष्टम् । अत एव चोङ्कारस्य सर्वत्र प्राथम्यमुक्तं भवति ।

"सर्वमन्त्रसमारंभे मङ्गलत्वेन दृश्यते ।
ओङ्कारः प्रणवोऽरूपस्त्रितयात्मकसवृतः ॥"

इति। तस्मात्तदोङ्काररूपम्, प्रणवसंज्ञकम्, परस्परसंयुक्तम्, वर्णत्रयम्, ब्रह्मेति प्रवचनार्थं भवति । न तत्र नानात्वमेकत्वं पृथक्तं वा बोध्यम्, "सर्वं सर्वसमावृतम्" इतिसूत्रात्सर्वं सर्वेणावेष्टितमिति तदर्थाच्च । यद्यपि "अनन्तोऽयंसंसारः, तदनन्तं ब्रह्म"इत्यादिना नानात्वग्रहणम्, तथाप्यनन्तशब्दस्य पृथगर्थत्वेन न प्रतीतिरिति तन्निश्चयः । अनन्तं सान्तञ्च न किञ्चिद्भवति, "यत्सान्तं तदेवानन्तम्, यदनन्तं तदेव सान्तम्"इति सूत्रात् । अथातो यदिदं वस्तु दृश्यते, तस्य परिणामः केवलं तथाविधज्ञानविषय एव, वस्तुपरिणामस्यासंभवात् संख्याकालरहितत्वाच्च अनन्ते हि न संख्याकालयोस्संबन्ध इति स्पष्टं प्रतीतेश्च । नानन्तत्वं यत्र, तत्रैव संख्याकालसंबन्धः बुद्धिविरामायोक्तो भवति । तेनानाद्यनन्तत्वप्रतीतिः । अत एव सत्यं ज्ञानमनन्तञ्च ब्रह्मविशेषणं भवति । सतो भवः सत्यमिति तल्लक्षणम् । देशकालवस्तुभिन्नं सादित्युक्त्या च संख्याकालराहितत्वं सत्यत्वमित्युक्तं भवति । यदिदं सत्यं तद्ब्रह्म एव । तद्ध्यानमपि सङ्घटितं भवन्ति । संख्याकालरहितत्वेनान-

न्तं ब्रह्मेत्यपि सिद्धम् । ज्ञानं सत्यम्, तथात्मा संसारश्च सत्य-भूतः, अनन्तश्च तयोस्संबन्धः सत्य एव । तस्मात्त्रितयभावः अनन्तस्सत्यभूतः ब्रह्मस्वरूपश्च भवति । तद्ज्ञानमपि तथा भवति। एवमेव हि तत्त्रितयवाक्यार्थः । सत्यानन्तयोर्ज्ञाने च न भेदः । यत्सत्यम् तदनन्तम् । तद्ज्ञानमपि यच्च किञ्चिदस्ति, तदनन्तं भवति । ज्ञायते यच्च किञ्चित्तदनन्तम्, अनन्तश्च यत्तत्सत्यञ्च-भवति । ज्ञानञ्च सत्यम्, ज्ञातृज्ञेयौ च सत्यभूतौ । तेषामभेदरूपत्व-मनन्तत्वञ्च विज्ञेयं भवति । सान्तानन्तयोरभावस्त्वनन्तशब्दार्थः । यथा चाद्यन्तरहितौ, अनाद्यनन्ताविति रहितार्थे नञ्समासः । तेनाद्यन्तौ अनाद्यन्तवर्जिताविति द्वयोः फलं भवति । तस्मात् "सत्यमनन्तमव्ययं ब्रह्म" इति चोक्त्यापि नानात्वप्रतिषेधः ।

सन्धिसामान्यमेव स्पष्टमुक्तं भवति । अनेकत्वप्रवचनम-नन्तत्वप्रवचनञ्च त्रितयस्यैव भवति । शब्दशास्त्रे पृथक्प्रयोजना-भावात् । अत एव "सर्वे सर्वानुगताः नानुगताः निश्चिताः निषिद्धमप्रतिषिद्धञ्च" इति श्रुतिः । अनन्तं त्रितयं ब्रह्मेत्यपिच । यद्यपि सर्वशक्तिमानित्यात्मनो विशेषणम्, तत्पृथङ्निर्देशः शक्तिसंभावनया, तथापि त्रितयशक्तित्वेन तत्प्रयोजनं बोध्यम् । सर्वकारणसामर्थ्यं यत्र मन्येत, तत्रैवाकारणत्वमपि निषेधरूपं निर्णेयं भवति; अन्यथा तु सर्वशब्दार्थविरोधो भवेत्, न सर्व-

तोभिन्नं प्रतिषेधरूपं यत्किञ्चिदन्यादिति व्याख्यानात् । ब्रह्मणोऽनन्तत्वप्रवचनेन त्रितयत्वस्य ब्रह्मस्वभावत्वेन च, संसारमिममनन्तं, दुस्तरं निश्चित्य, विकल्पनिर्विकल्परूपञ्च सर्वम् आवश्यकं सन्धिस्थमिति सर्वत्रोक्तं भवति । अत एव अनन्तोऽयमात्मा, संसारश्चानन्तः, अनन्ता च कृतिः । अनन्तकृतकाकृतकयोरभेद इति व्याख्यातं भवति । तस्मात्त्रितयं ब्रह्म, तेषां सन्धिरित्यवधेयम् । अत एव सर्वं त्रिकं त्रिकमित्युक्तं भवति । सन्धिश्च त्रिकत्वेनैव प्रतिपद्यते । एतत्त्रिकत्वकथनमेव सन्धिः । सन्धानं-सन्धिरिति तत्प्रयोगात् । अकारोकारमात्रमत्र सन्धेयत्वेनोपयुक्तं भवति, प्रणवपर्यायत्वात् । त्रिकत्वं चात्र तत्प्रयोजनत्वेनालक्ष्यते । अत एव चाकारानुगतं सर्वं त्रितयम्, त्रिविधमित्यपि च भवति ।

लिङ्गत्रयमप्यस्माद्भवति । अकारश्चैकलिङ्गकः, उकारश्चैकलिङ्गकः, मकारश्च तादृशः । स्त्रीपुन्नपुंसकञ्च लिङ्गत्रयत्वेनावगम्यते । "शब्दाश्च सर्वे त्रिलिङ्गकाः" इत्यनुशासनं भवति । अत एव,

"पुल्लिङ्गोऽयमकारः स्यात्स्त्रीलिङ्गोऽयमुकारकः ।
नपुंसकन्तयोर्भिन्नलिङ्गं सर्वस्य सम्मतम् ॥"

इत्युक्तं भवति । लिङ्गेऽपिच प्रत्येकं त्रितयत्वमस्ति, तस्याभेदात् । अत एव "लिङ्गत्रयं शब्दकारणम्" इत्युक्तम् । यद्यप्यर्थबलेन शब्दबलेन च लिङ्गनियमः, तथापि प्राधान्यादिदमेवात्र कारणं

भवति । एकार्थकशब्दस्य लिङ्गत्रयेऽपि बोधात् । एतदुदाहरण भवति—दाराःस्त्री कलत्रमिति । दारशब्दस्य स्त्रीबोधकत्वेऽपि पुंस्त्वम् , स्त्रीशब्दस्य तदर्थत्वेऽपि स्त्रीत्वम् , एवं कलत्रशब्दस्य तदर्थत्वेऽपि च नपुंसकत्वम् । अतो नार्थस्य लिङ्गकारणत्वमभ्युपगम्यते । किन्त्वत्रान्यत्कारणं भवति । तस्मादेतत्तित्तिरीयोक्तिव्यापार एव कारणं भवति । यद्यपि लिङ्गत्रयस्य कारणत्वम् , तत्तद्वाचकशब्दस्य कार्यत्वञ्च, तद्वृत्तेरसंभवान्नोपयुक्तम् । यथा- वारिणा सर्वमुपजायते, तस्य पञ्चतत्त्वान्तर्गतत्वात् , तथापि तस्य क्लीबं लिङ्गं । तेन लिङ्गत्रयकारणं सन्धित्रयकारणञ्चैतत्तित्तिकमेव भवति । तस्मादत्राव्ययपदेन, न लिङ्गादिनियम इति स्पष्टमुक्तं भवति । सर्वं सर्वलिङ्गं सन्धेयञ्चेति फलितार्थत्वेन अकारोकारयोः, मकारेण सन्धिरभियुक्तो भवति । एतद्वियोगभावोऽपि लक्ष्यते, तदेव प्रकृतिभावः । संयोगे चास्याव्ययत्वम् , सति च वियोगे पृथक्पृथग्लिङ्गमिति ज्ञेयम् । सन्धौ तु न लिङ्गादिनियामकं बीजमस्ति । लिङ्गादिनियमस्त्वाद्यन्त युक्तः, एतस्य चाद्यन्तत्वानाद्यनन्तत्वसहितत्वेन व्याख्यानान्न केवलाद्यन्तत्वविशिष्ट एव तत्प्रतीतिः । अत एव च " न लिङ्गं धर्मकारणम्"इति स्पष्टमुक्तम् । तत्र लिङ्गशब्दस्य चैकीकरणमर्थः । किञ्च "नायमात्मा पुरुषो न स्त्री न तयोर्भिन्नः न तत्सहितः" इत्याद्युक्त्या चात्मनः नैकत्र नियमो युक्तः ।

अत एव नात्मनः किञ्चित्स्थलं भवति। यच्च किञ्चित्तद्भ्वेत्। "नियतोऽनियतश्चैवं सर्वात्मानं सुखावहम्। पश्येत्तु योगयुक्तात्मा" इति चोपदेशः। एवमेव

"नात्र तत्र च तद्वृत्तिरस्तिनास्तीत्ययं ततः।
सर्वैर्युक्तश्च सर्वात्मा सर्वाधिगत एव च॥
स्वयञ्च स्वपरान्यश्च तवैवायं ममैव च।
सोऽयमात्मा च सर्वत्र ततस्सर्वपरावरः॥"

इत्यपि च। तस्मात्सन्धिस्थोऽयमकारः तदुकारो मकारश्च, तादृशमिदं चासनमिति च स्पष्टमुक्तम्। नाकारोकारसन्धेर्विशेषणत्वम्। नैष स्वरसन्धिः। नच व्यञ्जनम्। केवलगुणमात्रत्वमुक्तम्। अकारोकारदृष्टया गुणो भवतीतिसान्धिरूपः। तद्गुणोऽयमकार इति भावः। "आत्मनश्च गुणस्सर्वम्" इति सूत्रम्। गुणैर्जातमिदं जगदिति तद्भावः। आत्मगुणसहितश्च संसारः। आत्मनश्च द्रव्यपदार्थत्वोक्त्या स एव गुणाधिकरणो भवति। तज्जायमानश्च कर्म इति द्रव्यगुणकर्मपदार्थार्थः। इदमेव पदार्थत्रयं सर्वत्र लक्ष्यते। अस्यैव गुणात्मकत्वं त्रिगुणात्मकत्वञ्चोच्यते। अत एव निर्गुणं सगुणं ब्रह्मेत्युक्तिर्भवति। यदिदं निर्गुणम्, तान्निषिद्धस्वरूपं संबन्धमात्रम्; सगुणञ्च संसारात्मस्वरूपामिति तद्वाक्यार्थः। सगुणं ब्रह्म निर्गुणं ब्रह्म इति पृथग्भानन्तु मिथ्या।

"यदिदं निर्गुणं ब्रह्म, तदेव सगुणं मतम् इति"चोक्तेः। सगुणमन्य-द्ब्रह्म, निर्गुणमन्यद्ब्रह्मेति तु भ्रान्तवाक्यम्। गुणेन सह बद्धोऽयमात्मा गुणरूपेण वर्तते । निर्गुणञ्च तयोस्संबन्धरूपं प्रशस्तम् । पृथगुपादानं चैतयोः केवलबोधप्राधान्यनिरूपणाय भवति। "स-गुणं निर्गुणञ्चैव निर्विकल्पमनाश्रयम् " इति सूत्रम् । तस्मादका-रोकारयोर्गुणकृतश्चोङ्काररूपामिति तृतीयं सन्धिरूपं बुध्यते। संन्धि-स्थानां तृतीयावस्था त्वन्या बोध्या, यया द्वयोस्तदभावस्य च बोधो भवतीति प्रयोजनम्। यद्यप्येकस्वरे न सन्धिः किन्तु प्रकृति भाव एवोक्तः,तथापि सर्वार्थवाचकत्वान्निरर्थकत्वाच्च पक्षद्वयं प्रकृति भावश्च ।

आत्मनः संसारस्य च व्याख्यानपक्षे पृथग्भावः वर्ण-समाम्नायरूपत्वेन ज्ञेयः । तत्रैव बहुत्वमेकत्वम्, तदभावश्च पृथक्पृथग्व्याख्यानमात्रं दृश्यते । तयोरेकानुवर्तने सन्धिः। तस्य त्वावश्यकत्वं भवति प्रतिषिद्धवचनेन त्वव्ययत्वमपि। यदा यत्र न शब्दाधिकारकार्यं पुनरात्मनस्संसारस्य च, तदा तत्र पृथक्त्वसंयोगौ चापि तयोर्ज्ञेयावित्यूर्ध्वस्थितमकारेण ज्ञेयम्। "नायमात्मा स्थितो न बद्धो न पृथक् न भूतो न जातो नामृतो न मृतो न मुक्तो नामुक्तो नानुगतो नानुकरणमुपकरणञ्च" इत्या-दिवचनात् , आत्मसंसारयोर्निषिद्धरूपत्वञ्च विज्ञेयम्। एवमेव

हि व्याख्यानस्य फलं भवति । तस्मादकारोकारमकाराणाञ्च पृथ-क्करणं न युक्तम् ।

ओमित्येकस्वरूपम् । अव्युत्पन्नश्चायं शब्दः । नात्र धातुप्रत्ययप्रातिपदिकविभक्तय इति ज्ञेयम् । किन्तु सर्वथा समष्टि-स्वरूपं ब्रह्मसंज्ञकं विज्ञेयं भवति । यदपि व्यष्टिपदेन पृथक्त्वं सूच्यते इति, तदप्ययुक्तम् , या च समष्टिः सैव व्यष्टिपदार्थ इति विज्ञेयं स्यात् । व्यष्टिर्हि विभागस्य संज्ञा, विभक्तौ व्यष्टिरिति नियमात् । सार्वकालिकत्वात्सर्वाभियुक्तत्वाच्च, विभागो न ततोऽन्यः कश्चिदिति तदर्थो भवति । यो हि विभागः स विभाज्यः, स्वयं तद्विभाजकश्चेति तत्रापि त्रितयत्वं भवति । अत एव व्यष्टिरात्मा समष्टिरप्यात्मेत्याद्युक्तं भवति । अत एव " व्यष्टिस्समष्टिर्विक-ल्पोऽयमात्मा प्रसिद्धः पुराणः प्रयुक्तोऽयमात्मा । त्रितयन्तद-न्यत्प्रयुक्तश्च" इत्यादि स्पष्टमुक्तं भवति । यच्च तद्व्यष्टिसमष्टि-रूपम् , तद्ब्रह्मेति तदर्थः । एतदेव सन्धिप्रकृतिफलं भवति । प्रकृतिर्व्यष्टिः, सन्धिस्समष्टिरिति तद्भावः । एवं संसारमात्रे द्रष्टव्यम् । नावयविनोऽवयवस्य पृथक्त्वं बोध्यम् । किन्तु तद-वयविनिर्देशेन तद्ग्रहणं भवति । एवमेव व्यष्टिसमष्ट्योराख्यानं भवति । व्यष्टिसमष्ट्योरेकत्वेनैव मिथ्यात्वं प्रपञ्चत्वमित्युच्यते । अत एव मिथ्याभूतः प्रपञ्चः प्राधान्त्वेन दृश्यते । सकलं जगदिति

हि सिद्धान्तः, सदसच्च मिथ्या व्यष्टिश्चेति वचनात्। "सर्वं व्यष्टिः समष्टिः" इतिसूत्रात्सन्धिप्रकृतिभावयोरेकाधिकरणत्वमुक्तं भवति ।

ओङ्कारशब्देन केवलं ब्रह्म, नानात्वादिरहितम्, सर्वाधिष्ठितम्, सार्वत्रिकम्, सार्वकालिकमित्यादिबोधः । अत एव "अथातो ब्रह्मजिज्ञासा" इति सूत्रम् । ब्रह्मजिज्ञासाकरणञ्चैतत्त्रयज्ञानेच्छेति ज्ञेयम् । यद्यप्यथशब्देनात्रान्यस्यापि ग्रहणम्, अतश्चैतज्ज्ञात्वा अनेन कारणेन ब्रह्मजिज्ञासा भवति, तेन ब्रह्मणोऽन्यस्यापि ज्ञानमस्तीति सिध्यति; तथापि तद्विरोधासंभवान्नैवमर्थः । अत इत्यस्य कारणवाचकत्वादथशब्देन ब्रह्मणोऽन्यदप्यस्तीति न वक्तुमुचितम् । अतश्शब्देनाथशब्देन च, भ्रमरूपमज्ञानं प्रश्लिष्यते। यदिदं ज्ञानं पृथक्पृथङ् न युक्तम्, तेन दूषितत्वाद्दुष्टा वृत्तिर्भवति । एवं पृथग्रूप ज्ञात्वा ब्रह्मजिज्ञासा भवतीति तदर्थः । योऽयं भासते स संसारोऽन्यः, ततोऽन्यश्चात्मा, ततास्त्रितयं ब्रह्मेति ज्ञात्वैव ब्रह्मजिज्ञासाभवनमिति नियमात् ।

शास्त्राणाञ्चापि पृथक्पृथग्व्याख्यानस्येदमेव फलं भवति । एतत्त्रितयज्ञानायैव हि शास्त्रं सर्वमिति स्पष्टमुक्ततया, विभक्तमेकैकं सर्वमपि पृथक्पृथग्रूपेणभासते इति ज्ञात्वा, तत्र दोषं निरूप्य, ततश्चैकत्वसमर्थननिष्ठा भवति। तदेकत्वविज्ञानायैव ब्रह्मजिज्ञासा समुपपादिता भवति । जिज्ञासाकरणत्वेनैवैतदर्थो लभ्यते । अत

एव सर्वशास्त्राणां पृथक्पृथग्रूपं नित्यत्वानित्यत्वबीजं व्याख्यातं भवति। एवञ्च सिद्धान्तत्रितयं सर्वत्र निश्चितं भवति ।

संसाराख्यानमपि ब्रह्माख्यानत्वेन प्रतिपाद्यते, संज्ञिरूपत्वात् । एवमात्मनः प्रतिषिद्धस्य च सिद्धान्तस्त्वेक एव भवति, यो हि केवलया चैतादृश्या बुध्या सर्वमेकमेव जानाति । तस्यैव चायमर्थो भवति । तथाचैवं ज्ञानवतः संसारमिथ्यात्वप्रतीत्या ब्रह्मजिज्ञासायामादरो भवति ।

अत एव धर्मकामार्थविज्ञानिन एतत्त्रयैकत्वविज्ञानरूपो मोक्षो भवतीति फलितम् । सूत्रस्थातश्शब्देन अथशब्देन च एतत्सूचितं भवति ।

" एतत्त्रितयविज्ञानं पृथग्बुद्ध्या च सर्वशः ।
तस्यैकत्वं समावृत्य ज्ञातव्यममृते विधिः ॥"

इत्युक्तेश्च । तेन अथ अनन्तरं संसारात्मनोर्बोधानन्तरम्, अतः तन्निषिद्धरूपबोधस्य दोषत्वात् , ब्रह्मजिज्ञासा त्रितयस्य चैकत्वकल्पना कर्तव्येत्यर्थ इति सिद्धान्तः। तस्माद्ब्रह्मजिज्ञासावृत्तेश्चापि संधिप्रकृतित्वे संसूचिते भवतः ।

एवमेव संधिप्रकृतिभ्यां शब्दब्रह्म प्रशस्तमित्यप्युक्तिर्भवति । तेन जगदात्मानौ तयोर्निषिद्धं चोङ्कारप्रणवस्वरूपम् , सर्वव्याख्यानयुक्तम् , प्रकृतिसंधिस्थितं ज्ञेयम् ।

अत एव " प्रमाणं च प्रमेयश्च संशयश्च त्रिधा मतम् " इत्यप्युक्तं भवति। प्रमाणप्रमेयसंशयाश्च सर्वं ब्रह्मेति तद्भावः। प्रमाणभूतोऽयमात्मा, संशयभूतं सर्वं जगत्, प्रमेयस्तु तयोः संबंधरूपः प्रतिषिद्धं चेति व्यवस्थितम्। संशयश्च विरोधः। स एवास्मिन्संसारे परिदृश्यते। विरोधरूपं संसरणमिति संसारार्थः। " ज्ञान्यात्मा विशिष्यते " इति स्पष्टोक्त्या प्रमाणस्य ज्ञानत्वम्, आत्मनश्च प्रमेयत्वम्, द्वयोरपि च युक्तत्वमेव संबंधरूपं भवति। तेन प्रमाणप्रमेयसंशया भवन्ति।

एतत्त्रितयमपि ब्रह्म, प्रमाणप्रवचनोऽयमकारः, संशयप्रवचनोऽयमुकारः प्रमेयप्रवचनोऽयं मकारः प्रतिषिद्धरूप इति बोध्यं भवति। अत एव " प्रमाणं ब्रह्म, प्रमेयो ब्रह्म, संशयश्च ब्रह्म " इत्युक्तिः। तत्रापि ब्रह्मशब्दस्य प्रत्येकं योगात्, त्रितयत्वस्य संधिप्रकृतिस्वरूपस्यैव ग्रहणम्।

प्रयोजनन्त्विदमेव त्रितयविज्ञानस्य, कर्तृत्वादिसामर्थ्यस्य च। यदिदं प्रयोजनं त्रितयैकत्वरूपम्, तदेव ब्रह्मज्ञानं भवति। एवमेव " त्रितयं ज्ञात्वामृतत्वाय कल्पते " इत्याद्युक्तिः। पुनरेवं ज्ञानम्, तद्विश्लेषश्च तदर्थं इति स्पष्टमुक्तं भवति। तेन ब्रह्मणः स्वभावकल्पनस्य प्रयोजनत्वमुच्यते। सर्वं ब्रह्मेति हेतुनैवावश्यकेऽपि प्रयोजनं बोध्यम्। यद्यप्यावश्यकस्याप्रयोजनत्वमेवोक्तम्।

तथापि प्रयोजनत्वरूपेण प्रयोजनमिदं भवति । अत एव "ब्रह्म-ज्ञानं प्रयोजनं सर्वस्य" इत्युक्तिर्भवति । "सर्वं ज्ञात्वा ब्रह्मभावाय कल्पते" इत्यपि च । सर्वं ज्ञानम्, यदित्थंभूतम्, सर्वस्य वित-यत्वं, तज्ज्ञात्वेति तदर्थः । तस्मात्प्रमाणप्रमेयसंशयप्रयोजनमपि चतुष्टयमुक्तं भवति ।

इदमेव साधनचतुष्टयम् भवति । प्रमाणसाधनम्, प्रमे-यसाधनम्, संशयसाधनम्, प्रयोजनसाधनं च भवति । एवं यत्साधनम्, तदेवसाध्यं चेति बुध्यते, कार्यकारणकर्तृत्वा-भावात्, तदभेदाच्च ।

अस्यैव च जीवब्रह्ममायेत्यभिधानं भवति । भेदस्य हि माया कारणं भवति । सति च भेदे संसारः । जीवोऽयमात्मा ब्रह्मेति तयोर्निषिद्धरूपः संबंधः । अत एव भेदरूपा माया भवति । सर्व-भिन्नं ब्रह्म, बद्धो जीव इति स्पष्टमुक्तं भवति ।

"सर्वाणि कर्माणि कृत्वा ब्रह्मपदवीमुपासते" इत्युक्त्यापि कर्ममात्रस्य प्रयोजनं ब्रह्मभावः । यदित्थंभूतं वितयत्वं चेति तदर्थः । यद्यपि मिथ्याभूतोऽयं संसारस्त्याज्य इत्युक्त्या भेदःसंभ-वति, तथाप्यभेद एव । यदिदं संसारमात्रं केवलकृतकत्वेन मन्यते, तदित्थं संसार एव । नातो भिन्नं यत्किञ्चिदन्यदिति मन्तव्यम् । त्याज्यं च सर्वं त्रितयत्वेन लक्ष्यतामित्युपदेशः । ययेत्थं संसार

एवं मन्यते, सा मिथ्या मायारूपेति त्याज्यः। संसारात्मानौ प्रतिषिद्धस्वरूपौ विद्धीति तत्फलितार्थः॥

यच्चित्तवृत्तिनिरोधकरणं योगसंज्ञकं व्यवस्थितम्, तदप्येतद्रूपेण बोध्यम्। वृत्तिश्च व्यापारः। तेन व्यापारस्य पृथग्रूपत्वात् तन्निरोधकरणोपदेशः। यदिदं त्रितयं संसारात्मप्रतिषिद्धं पृथग्भासते, तस्य चैकीकरणयोगश्चिन्त्यतामिति तदर्थः। अत एव योगयुक्तं ब्रह्मेत्युक्तं भवति। योगश्च संधिः, युज्यतइति हि तदर्थः। संधिभिन्नं नान्यत्किञ्चिदस्तीति स्पष्टतया चित्तवृत्तिं निरुध्य योगयुक्तः सिद्धो भवति। तस्माद्ब्रह्मणस्सर्वरूपत्वं सिद्धम्। जिज्ञासया हि ज्ञानं भवति तदेव योगः। अत एव ज्ञानेन योग इति व्याख्यातम्। ज्ञानमेव योग इत्यप्युक्तम्। "ज्ञानमस्ति हि सर्वस्य सर्वं ज्ञानमयं भवेत्" इति व्याख्यानाद्वा। सर्वमिदं ब्रह्ममयं ब्रह्ममयं च सर्वं भवति। इदमित्यस्य अपृथक्त्वं मन्तव्यम्।

या हि चात्र संख्या दृश्यते, सा न पृथग्रूपा, किन्तु त्रितयत्वमेवेति सांख्यम्, "त्रित्वं त्रिगुणः परम्" इति सूत्रात्। यदपि परमित्युक्त्या गुणशब्देन त्रयाणां भेददर्शनम्, तदपि न युक्तम्। त्रित्वमित्युक्त्या, यदयं त्रिगुणः संसारात्मप्रतिषिद्धरूपः, स एव परमसिद्धान्तः नैकैकं पृथग्रूपं किञ्चिदिति। यदपि प्रकृतिः पुरुषो ब्रह्मेति तत्रोक्तम्, तेनाप्यस्यैव ग्रहणम्,

त्रिगुणात्मकं ब्रह्मेत्युक्तेश्च । यदिदं संख्यामात्रं महत्त्वलघुत्वयुक्तमेकेनैकं जातमिति, तदप्ययुक्तं, सर्वे वितयत्वं ब्रह्मोऽिमांख्यप्रतीतेः । संख्यायाः पदार्थमात्रकारणत्वम् , तस्य परमार्थत्वम् , आवश्यकत्वं च तत्सूचितं भवति ॥

एवमेव कर्मवितयं मीमांसकानमित्यपि ज्ञेयम् । कर्तव्याकर्तव्ये, तयोः संबन्धश्चान्यइति त्रितयं बोध्यम् , कर्तव्याऽकर्तव्ययोः, ताभ्यां भिन्नस्य च ममत्वविशिष्टत्वात् । अत एव स्वार्थपरार्थपरमार्थाभिधानं भवति । इदं कर्म मदर्थम् , अस्मत्कृतम् , दुःखमनेन, सुखमनेनेति प्रथमः । त्वत्कृतमिदमयुक्तं चेति द्वितीयः । तयोर्भिन्नं सर्वमावश्यकं भवति । नचापि तेन प्रयोजनं भवति । सर्वार्थे सर्वे ज्ञात्वा कारणमात्रमिति तृतीयः परमार्थः । अत एव स्वार्थपरार्थयोरभिधानस्य त्याज्यत्वमुक्तम् । कर्तव्याकर्तव्यरहितमावश्यकं कुरु इति तदुपदेशः । "कर्म चावश्यकं वरम्" इत्युक्त्या वा । सत्यप्यावश्यके सर्वस्मिन्स्वान्यारोपणं भ्रममूलकमेव ।

इदमेव भाव्यम् ; यच्च भाव्यम् , तदेव भूतं भविष्यच्च भवतीति सम्यक् । अत एव तत्त्वदर्शिनो नानुशोचन्ति । भाव्यमेवेति सर्वमामनन्ति । न तेषु स्वपरान्यभाव इति प्रमाणैर्निश्चीयते । तदिदं कर्मपराणां प्रवचनम् ;

"अकारः स्वार्थकं कर्म चोकारस्तु परार्थकम् ।
परमार्थं मकारस्तु ज्ञाप्यमानादिदं भवेत् ॥"

इति स्पष्टम् ।

"आत्मीयं कर्म चाकारात्सांसारिकमुकारतः ।
मकारादन्यकर्मैवं भाव्यमेवं प्रशस्यते ॥"

इत्यादिवचनेनापि त्रितयत्वं ब्रह्मेति सूचितं भवति । यदपि मीमांसकानां कर्मत्रये भेदाभिसंमतिः, तत्फले त्वेकत्वमेव त्रितयस्य पृथक्पृथगनुपस्थितेः । अत एव "सर्वमेकत्वेन दृश्यताम्" इत्यपि सिद्धं भवति ॥

विषयाणां विशेषविज्ञानं वैशेषिकमितिनियमः। अत्र पदार्थानां सर्वेषामेकत्वं बोध्यम्, द्रव्यगुणकर्मणां समवायित्वात् अभेदरूपः संबन्धः समवाय इति लक्षणाच्च । समवायस्तु एतत्त्रितयस्यैकत्वबोधाय वक्तव्यः । न तत्समवायपदेन त्रितयस्य पृथगुपस्थितस्य संबन्धेन प्रयोजनम्, किंतु त्रितयस्य केवलमेकत्वेनाभिधानमेव। सामान्यविशेषावप्येक एव,"सामान्यान्तरो हि विशेषः" इत्यभिधानात् । सामान्यस्य स्वरूपमेव विशेष इति तदर्थः यथा—विज्ञानी चायं पुरुष इत्यत्र पुरुषपदस्य, विज्ञानीति पदस्य च सामान्यत्वमेव । सामान्यद्वयस्य चैकयोगो विशेष इति तद्भावः । अन्यच्चान्यच्च सामान्यं सामा-

न्यान्तर इति तदर्थात् । सामान्यस्य तु विषयमात्रेण संसारे भेदो- दृश्यते । वस्तुतस्त्वभेदरूपमेव । अतः सामान्यविशेषयोरैक्यं भवति। अत एव "विशेषास्त्वनन्ता एव" इत्युक्तं भवति, सामा- न्यस्यानन्तत्वात् । वस्तुतस्तु "न द्रव्यगुणकर्मसामान्यविशेष- समवायाः" इत्यादि व्याख्यातम् । यदपि परमपरं चेति द्विविधं सामान्यमुक्तम् , तेनाप्यभेद एव । परमिदं जगन्मात्रम् , अपर- मात्मबोध्यम् , उभयोः संबन्धरूपं सामान्यम् , स्वयमेकं भवति, " परापरयोः सामान्ययोरेकयोगो विशेषः" इति तद्व्याख्यानात्। सामान्ये च भेदद्वयं दृष्टिमात्रम्। सामान्यान्तरो विशेष इत्युक्तम्। तेन सामान्यविशेषसमवायाभावानामपदार्थत्वात् त्रय एव पदार्था इति सूचितं भवति ।

एतेन पदार्थत्रयस्य चैकत्वं ज्ञेयम् । ऐक्यं विना सामा- न्यादीनां चतुर्णां भवनं नोपयुक्तम्। तेन यदिदं विशेषरूपम् , संसारविषयम् , योगसमवायाभावस्थम् , पदार्थत्रयमेकीभूतम् , तदेव बोध्यं भवति । तेन वैशेषिकमिति फलितम् । अत एव जिज्ञासया, योगेन, कर्मणा, सांख्येन, विशेषेण, निर्णयेन चैभिः षड्भिः ब्रह्मैव बोध्यं भवति। " इदमेव षडङ्गं ब्रह्मबोध- साधनरूपम् " इत्युक्तं भवति ।

सर्वस्य त्रितयत्वात्त्रितयात्मकं विश्वमित्युच्यते । तस्मात्त-

त्रितयमात्रस्य ब्रह्मस्वरूपस्य प्रवचनाय प्रणवसंज्ञकम्, ओमित्येतद्वर्णत्रयात्मकम्, संधिस्थम्, सप्रकृतिकं चोच्यते । "ओं सर्वानुभावनम्" इति सिद्धान्तसूत्रात्, अकारोकारमकारेष्वेवसर्वसिद्धान्तः संधिरूपेणासंधिरूपेण च द्रष्टव्य इति लभ्यते । अत एवास्योच्चारणे महत्त्वमुक्तम्। "सर्वज्ञः सर्वं प्राप्नोति" इति सत्यम् ॥

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे प्रथमप्रकरणे
संधिस्वरूपनिरूपणं नाम पञ्चमस्तरङ्गः ॥

प्रथमं प्रकृतिसंधिप्रकरणं संपूर्णम् ॥

ॐ



ॐ

## ॥ अथ द्वितीयम् ॥

## ॥ प्रकारयोगप्रकरणम् ॥

अथ चैतेषां संधेः फलं निरूप्यते । संधीयन्तेऽस्मिन् संधिरिति व्युत्पत्या हि सर्वमोङ्कार एवेति विज्ञेयम् । यद्यपि संसारात्मप्रतिषिद्धं पृथगेव व्याख्यातमस्ति, तथापि तथा व्याख्यानं केवलानां तत्तत्स्वरूपविज्ञानार्थमेवेति बोध्यम् । वस्तुतस्तु द्वाभ्यामेव ब्रह्मसंसारशब्दाभ्या सर्वं विज्ञेयं भवति, संसारनिषिद्धात्मन्यभेददर्शनात् , यच्च किञ्चिदस्ति, तस्य संसारशब्दार्थत्वात् एतात्रितयभिन्नं नास्तीति व्याख्यानाद्वा । अत एवोक्तम्,

"न चैकं द्वितीयं तृतीयं तदन्य-
न्नचाकेवलं केवलं ब्रह्मरूपम् ।
ससंसार एष त्रयाणां हि योग-
स्ततो ब्रह्मसंज्ञं प्रशस्तं प्रधानम् ॥
न चैवायमात्मा न संसाररूपः
पृथक्त्वं विशेषो न शून्यं विधेयम् ।
न चाशून्यमद्वैतमेकं प्रधानं
परं नैव पूर्वं नचाद्यं नचान्त्यम् ॥

सदाशब्दसंयुक्तसंसाररूपं
न पूर्वं परं नोत्तरं किञ्चिदन्यत् ।
अनाद्यन्तसिद्धांतभेदो न कश्चि-
त्सदावश्यकं ब्रह्म सर्वस्वरूपम् ॥
संसार एषो ह्ययं वेदितव्यः ।"

इत्याद्युक्त्या, संसार एव ब्रह्मेति प्रतिपादितं भवति । अत एव "अत्र ब्रह्मास्ति मोक्षः स्वर्गनरकावुभावपि" इत्यपि च संगच्छते । इदमेव संसरणं तु त्रितयं भासते ।

अत्रानेकप्रकारोऽपि दृश्यते । तत्प्रकारश्च संसरणमेव । यदेतत्प्रकारं च संसरणम्, तदेव ज्ञातव्यमिति सर्वसिद्धान्तसरणिरवगम्यते । अत एव "पश्यन्ति संसारमसारत्वेन" इति श्रुतिः । अत्रासारशब्दस्य निराधारार्थो प्रतीतिर्भवति । नातो भिन्नः कश्चिदन्याधार इत्यसारार्थः । अत एवोक्तम्—

अनाधारसंसाररूपोऽयमात्मा
ह्यनाधेयसंसर्गसिद्धोऽयमात्मा ।
असारेण सद्भावयुक्तोऽयमात्मा
स सर्वैर्विभिन्नः प्रयुक्तोऽयमात्मा ॥
असारप्रसारो निषिद्धोऽयमात्मा
ह्यनात्मा विरामः समेयोऽयमात्मा ।

अशब्दः प्रकालेन शब्दोऽयमात्मा
विशुद्धो विमुक्तो हि बद्धोऽयमात्मा ॥
स संख्या तदन्यत्समस्तोऽयमात्मा
सदा सर्वथा साधनस्थोऽयमात्मा ।

इत्यादिवचनैः संसारस्यासारत्वम् । "सर्वे सर्वार्थवाचकाः" इत्यपि च सिद्धं भवति । प्रकाररूपं यत्संसरणं तदेव कार्यम् । अतस्त्रितयरूपं संसार इति निश्चितो भवति । अत एव "सर्वेषां जगद्गुरुः" इत्युच्यते । एष एव च संसारः स्वयमेव गुरुश्शिष्यश्च भवतीति तदर्थः, जगदेव गुरुर्यस्य, यो हि जगतो गुरुरिति च समासार्थात् । इदमेवाध्ययनम् , तपः, योगकरणम्, नियोगकरणं च भवति । अत एव "संसारं समधीत्यैवं लभ्यतां स्वर्ग उत्तमः" इति स्पष्टं भवति । संसारविज्ञानमेव स्वर्गति-साधनमिति तत्फलितार्थः । अत एव सर्वत्र जिज्ञासामात्रं दृश्यते ।

संसारस्यानन्तप्रवचनत्वात्तज्ज्ञानस्यापूर्णत्वमेव, "भ्रमरूप-मिदं पूर्णत्वविज्ञानमस्य यत्सर्वं प्राप्तमस्य, यावत्सर्वं न लभ्यते, न तावत्पूर्णम्" इति श्रुतेः । सर्वशब्दस्यात्र त्रितयत्वम्, कालसं-ख्याराहितत्वञ्चार्थ इत्युक्तं भवति । तेन सर्वलाभस्यासंभवात्त-त्पूर्तेरप्यसंभव इति वाक्यार्थ उक्तो भवति । अत एव " सर्वं ज्ञात्वा न ज्ञातं किञ्चित्" इत्यपि स्पष्टं भवति । "ज्ञानं सर्वम-

सर्वेशः" इत्याद्युक्त्या वा । ज्ञानादेरनन्तत्वोक्त्या पूर्णत्वं नावधेयम् । अत एव

" न संख्या न कालो न कार्यं समिष्टं
न तत्पूर्णता नैव मुक्तो न बद्धः ।
सदा सर्वथावश्यकं संप्रयुक्तं
नियुक्तं करोमीति सिद्धं परं स्यात् " ॥

इति । इदमेव सर्वशास्त्राध्ययनस्य फलं भवतीति बोध्यम् । यद्यपि "सर्वं न सर्वविषयं" इत्युक्तम्, तथापि सर्वस्यैव सर्वत्र स्थितत्वात्, सर्वस्य सर्वत्र लाभाच्च, विषयान्तरभेदोऽप्यत्र नयुक्तः।

कार्मिकश्च विशेषो बुध्यते । वैशेषिकं च कर्म करोति। जिज्ञासा तु द्वयोर्मध्ये भवति । सांख्यमपि पदार्थगणनार्थमेव । एतत्त्रितययोगोऽपि द्वयोः समीयते, विनापि षड्भिरङ्गैरेतत्त्रितयबोधस्यासंभवात् । विषयभेदस्य सिद्धान्तभेदस्य च निरूपणं भ्रममूलकमेव, सर्वस्य संसाररूपत्वेनोक्तत्वात् । अत एव " समभावेन सर्वं द्रष्टव्यम् " इत्युपदेशः । अत्र समशब्देनापि पृथग्भावस्य सूचितत्वात् समदृष्टिरित्यप्युक्तम् । अत एव " ब्रह्मवित्समदर्शी" इति स्पष्टमुक्तं भवति । यो हि ब्रह्मविदेतात्त्रितयरूपसंसरणं जानाति, स स्वयं ब्रह्मेति बुद्ध्या, सर्वमहमेवास्ति, अहंसर्वमेवास्मीति जानाति । अयमेव साम्यपदार्थः ।

यद्यपि " उपकर्तुमुचितम् " इत्युपदेशः ; तथापि तेन प्रकारेण भेदो न निरूपणीयः, स्वस्यापि तथावस्थितत्वात् । उपकारकरणं केवलं संसरणमेव। भाव्यमिदमेव भवति । उपदेश-फलं तु भ्रमत्यागार्थकमेवेत्युक्तं भवति ।

यदिदम् अहं करोमि, त्वं करोषि, अयं करोतीत्यादिप्रवचनम्, तदयुक्तम्, इदंभवत्येवेति मन्यतामिति तदर्थः । प्रकारे यद्भेददर्शनं तदेवायुक्तमिति निश्चयाय सर्वार्थोऽयमुपदेशः । अन्यथा तु स्वयं ब्रह्म सर्वज्ञाता च सर्वदा भवेत्। अत एव

"नायं पुराणेन लभ्योऽयमात्मा न वेदेन सांख्येन लभ्योऽयमात्मा ।
नदानेन यज्ञेनसाध्योऽयमात्मा न योगेन वाक्येन सिद्धोऽयमात्मा ॥
नबुद्ध्यानभक्त्याचदृष्टोऽयमात्मानवेदान्तसिद्धान्तवेद्योऽयमात्मा।
सदा सर्वगः सर्व भूतो विधेयः ॥"

इत्यादिवाक्यैः प्रकारभेदो न मन्तव्य इत्युक्तं भवति , प्रकारत्यागायोक्तायाः "सर्वं खल्विदं ब्रह्म" इति श्रुतेः । सर्वशब्देन यश्च प्रकारः संप्रबुद्धः, स खल्विति निश्चयेन न युक्त इत्यभिधानात्, एवंभूतः संसार एव त्रितयात्मको ध्येयो विधेयश्च भवति । अतः सर्वेषां हि नियमानामेवं निश्चय एव फलं भवतीति विज्ञेयम् ॥

ग्रहणत्यागावप्यत्रैव परिदृश्येते । तेनापि चाभेदः सूचितो

भवति, ग्रहणग्राहकग्राह्याणां च त्रितयाभिनियतत्वात् त्याज्यपदार्थोऽपि ग्राह्य एवेति ग्राह्यत्याज्ययोरभेदाच्च । उदाहरणेनैव ह्येवं द्रष्टव्यं भवति । यो ह्येकं त्यजति, तमन्यो गृह्णातीति प्रत्यक्षं भवति । एतत्त्रयाणामभेददर्शनेन न परस्परान्यत्वविशिष्टं यत्किञ्चिदस्तीति स्पष्टप्रतीतेः तत्र स्वयमेव ग्रह्णाति, त्यजति चेति भावः। त्यक्तं गृहीतमित्यत्र पदार्थानां न कर्तृत्वम्, किन्तु ततोऽन्यादिति प्रवचनात्, "ग्राह्यत्याज्ययोर्न लिङ्गम्" इति सूत्राच्च, विजातीयमेव तत् । अत एव

"गृहीतं निषिद्धं पवित्रं न किञ्चित्
न पापं न पुण्यं परं वेदनीयम् ।
सदैवायमात्मा पवित्रः प्रसिद्धः
स्वभावेन सिद्धः सदावश्यकोऽयम् ॥"

इत्याद्युक्तम् ।

यद्यपि "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्याद्युक्तम् ; तेन पुण्यम्, ततः पापमिति सूचितं भवति । मर्त्यलोके पतनं पापफलं भवति । तेन पुण्यस्थानं यत्किञ्चिदस्तीति सूचितं भवति; तथापि तत्राज्ञानमेव कारणम् । क्षीणमिति व्यवहारस्तु कालसंख्याविशिष्टस्यैव भवति । आत्मनश्चाकालसंख्याविशिष्टत्वात् क्षयस्थानस्याभेदात्पतनं चायुक्तं भवति ।

तत्र क्षयेण, पतनेन च मर्त्यस्यैव ग्रहणं भवति । "सर्वं स्थानं हि सर्वस्य" इत्याद्युक्तेः, मर्त्यलोके पतनम्, ततोऽन्यस्मिन्निवासश्च कार्यमेवास्ति । इदमेव प्रसरणम्, क्षीणत्वं च संसार एवेति ज्ञेयम् । भाव्यमात्रमेव केवलं पुण्यक्षीणत्वेन ज्ञेयं भवति । यच्च भाव्यं तदेव पुण्यम् । तत्कार्यं क्षिणोतीति तदर्थः । अत एव "सर्वं पुण्यजं मत्वा विचरन्ति हि सर्वथा" इत्यादिवचनेन स्वभावमात्रमावश्यकं मत्वा सर्वस्मिन्नपि काले सर्वस्थाने च सर्वे विचरन्तीति तत्फलितार्थः । स्वर्गनरकावुभावपीत्युक्तेन न्यायेन भेदः सूचितो भवति । तयोरपि कर्मण एव कारणत्वान्न पृथग्भावो युक्तः । अत एव

"समौ हि स्वर्गनरकौ सुखदुःखेच ते उभे ।
शत्रुमित्रे न मन्तव्ये सर्वमावश्यकं भवेत् ॥
यदेतत्त्रितये भेदो ह्यज्ञानं भ्रममूलकम् ।
तज्ज्ञात्वा चामृतं भोज्यमावश्यकमिदं विधेः ॥"

इत्याद्युक्तेः, प्रधानपर संसार एवेति बोध्यम् ।

संसारात्मनोर्निषिद्धरूपं पुनः तत्स्थानां प्रकाराणां सुखजिज्ञासायै उक्तं भवति । एतद्भ्रमेण हि जिज्ञासा भवति, तस्याश्चापरमार्थत्वात् । वस्तुतस्तु त्रयाणामेतेषां यदेकत्वविज्ञानम्, तदेव जिज्ञासाविषय इति सिद्धम् । प्रकाराभेदश्च भेदश्च त्रितयार्थमेवेति सिद्धान्तः । अत एव

“ पुण्यजं ब्रह्म तद्विच ब्रह्मजो ब्रह्मसाधनम् ।
ज्ञानजं ज्ञानसंपन्नं वृत्तिजावृत्तिरेव च ॥
अप्रशस्तात्प्रशस्तं च प्रशस्ताच्चाप्रशस्तता ।
कालिकं कालजं प्रोक्तं सर्वं सर्वमनन्तरम् ॥
सर्वजं सर्वतो नष्टं सर्वं सर्वेण सिध्यति ।”

इत्यादि चोक्तम् । अत एव

“ प्रशासिता हि सर्वेषामेक एव प्रतीयते ।
सर्वजातानि सर्वाणि जायन्ते हि परस्परम् ॥
सर्वे भवन्ति सर्वस्थाः सर्वे सर्वप्रयोजकाः ।
प्रसारणमिदं सर्वं संसारासारसागरम् ॥
सर्वं सर्वेण गृह्णन्ति ददाति प्रतिलभ्यते ।
सत्यं त्याज्यं तथा ग्राह्यं सर्वैः सर्वानुवर्तनम् ॥
नायुक्तं तत्प्रयुक्तं च नियमो नियमो न च ।
नानियतं न तद्भिन्नं सर्वं संसारसंज्ञकम् ॥
सर्वं खल्विदं ब्रह्म नानात्वं भ्रममूलकम् ।
सर्वं मान्यममान्यं च ज्ञानस्यैव फलं भवेत् ॥
अज्ञातं सर्वशो ज्ञात्वा ज्ञाने ज्ञानं च सर्वशः ।
इदमेव हि वैचित्र्यं संसारासारभासनम् ॥” इति

वाक्येन संसारश्चासारत्वेन द्रष्टव्यो भेदवर्जमिति व्याख्यातं भवति ॥

एवमेव हिंसारक्षणशब्दाभ्यामप्यभेदो मन्तव्यः। यद्यपि प्राणवियोगानुकूलव्यापारो हिंसा, तद्योगानुकूलव्यापारो रक्षा चेत्युच्यते, तथापि संयोगवियोगयोर्व्याख्यानेन रक्षणहननयोरप्येकत्वं भवति। यत्र ह्येकस्य हननम्, तत्रैव चैकस्य रक्षणमिति नियमः। न कश्चिद्धन्ता हि भवति। सर्वं हि प्राकृतेन प्रयोजनेन सिद्धं भवति। तदावश्यकनियमेनैकेन चैकस्य वधो विधीयते। सर्वस्याप्यमृतत्वान्न वधः, किन्तु तस्य रूपान्तरत्वेनावश्यकत्व भवति। इदमेव भाव्यम्। एवं तत्सिद्धार्थः। एवमेव रक्षणमपि तादृशं बोध्यम्। यद्यपि "अहिंसा परमो धर्म" इति वाक्येन हिंसा निषिध्यते, तथापि हिंसाहिंसयोरसंभवित्वेन श्रुतेरर्थो द्रष्टव्यः। यस्य च एवंभ्रममूलं प्रयोजनमवधार्य एतद्धननेन चेदं मदीयं कार्यं सिध्यतीति बुद्ध्या, हिंसा भेदरूपप्रयोजनतया दोषयुक्ता, तस्य तदकर्तृत्वमेव परमो धर्म इति श्रुतेर्भावः। एवं हिंसारहित इत्यर्थाङ्गीकारेण रक्षणरहित इत्यर्थोऽप्यङ्गीकार्यः। हिंस्यते इति हिंसा, न हिंसा इति व्युत्पत्त्या, हिंसाराहित्यं परमधर्म इति च श्रुतेरर्थः। भिन्नरूपव्यापारेणैव हिंसा, रक्षा, सहाय इत्यादिसर्वशब्दप्रयोगः। अत एव

"न हिंसा नैव रक्षा च न साहाय्यं विधीयते।
अहन्तव्यं तथारक्ष्यं तद्ब्रह्मेत्यभिधीयते॥

हननं रक्षणं चैव साहाय्यं धर्मसंवृतम् ।
सर्वं त्वभेदयुक्त्येदं ब्रह्मरूपं परोत्तरम् ॥"

इत्याद्युक्तिभिः "अनेनास्य पालन हननमुत्पत्तिश्च" इत्यादिभेदवाक्यैः, हन्तव्यः हननं हन्ता च न किञ्चिदप्यस्तीति स्पष्टमवगम्यते । एवं रक्ष्यमाणः रक्षक इत्यपि च न "सर्वान्तं हि सर्वम्" इत्युक्तेश्च । अत एव

"सदा हिंसनीयं सदा रक्षणीयं यथावश्यकं चेति कर्तव्यमेव ।
न हिंस्यो न रक्षायुतश्चायमात्मा तदन्यस्वरूपप्रयुक्तो न चात्मा॥
सदा सर्वभिन्नं नियुक्तं प्रमेयं महद्ब्रह्मरूपं च संसाररूपम् ।
सदावश्यकेनैव संवर्त्तनीयं प्रतिष्ठं परं ज्ञानगम्यं फलं च ॥"

इत्यादिप्रवचनम् आत्मनः सर्वात्मकत्वान्न किञ्चिदपि भेदस्वरूपं द्रष्टव्यम् । तथा भानं तु भ्रमेणारोपितं भवति । अत एव सप्रयोजनानुष्ठानेनैव पापपुण्यफलं भिन्नस्वरूपं परिदृश्यते, न तदावश्यकत्वेन । यो ह्यावश्यकं जानाति, स तु स्वात्मनो हननं रक्षणं च सर्वथा मन्येत, इति तदाशयः । अत एव निष्प्रयोजनं कर्म कर्तव्यमित्युपदेशः । "निष्काम्यं कर्म कृत्वा मोक्षं लभेत ,, इत्यस्यापि निष्कामकर्माचरणमेव मोक्ष इति सिद्धान्तः॥

एवमेवारोग्यानारोग्ये च प्रशस्येते । प्राकृतस्य चानावश्यकत्वचिन्तया सति च भेदज्ञाने रोगः । वस्तुतस्तु सर्वमारोग्यमेवे-

त्ववधार्यताम् । प्रयोजनारोपेण न नियमो भवति । स्वभावतः सर्वं भाव्यमेवेति रोगाः प्रजायन्ते । अत एव

"अनियमो हि रोगाणां कारणं दृश्यते विधौ ।
औषधं नियमोपेतं तस्मात्तत्सेवनं परम् ॥"

इत्युक्तम् । औषधशब्दस्य नियमेनैव संबन्धः । नियम एवौषधमिति तत्फलितार्थः "निदानं सर्वरोगाणामनियमः" इति वचनाद्वा । उदाहरणं चात्रेदमवधेयम्, नियतकालेन व्यसनादिकं समुपलभ्यते । यत्र नियतत्वाद्विकारोत्पत्तिः स एव रोगः । पुनस्तन्निवृत्तिकरणमौषधमिति प्रतीयते । अत एव

"येन यान्नियतं कार्यं तदेवतस्यसाधकम् ।
तदौषधं भवेत्तस्य तच्छुद्धिस्तेनजायते ॥"

इत्युक्तम् । यस्य रोगस्य यदौषधम्, तेनैव तच्छान्तिरिति भावः । भेदवचनेनैव रोगः, औषधं च भवति । तस्मात्तद्वाहुल्यम् । तयोर्विरुद्धत्वमपि तेन संसूचितं भवति । यो ह्येवं प्रकारं जानाति—सर्वं भाव्यं नानियतं कदापीति, नियतमेव करोति च ; सनीरोगो ब्रह्मविदिति बोध्यम् । यो ह्यनित्यं निवारयति, अनियतमकर्तव्यमित्युपदिशति वा, अनियतानां नियतमार्गे स्वशक्त्यातादृशौषधेन तत्र प्रवर्त्तयिता च, स वैद्य इति बोध्यम् । "वैद्यो नियमेन सिध्यति"

इति वचनात् ।

" इदं हि सर्वं नियतं भाव्यं संसारसंज्ञकम् ।
जानाति नियतत्वेन वैद्यता प्राप्यते ततः ॥ "

इत्युक्त्या वा । अत एव वैद्यानां धार्मिकत्वमप्युक्तम् । एवमेव "सर्वे च रोगिणः प्रोक्ताः सुखिनो ब्रह्मवित्तमाः" इत्याद्युक्तम् । अत एव

" सर्वं सर्वौषधं विद्धि रोगास्ते सार्वकालिकाः ।
नीरोगाश्च विधाः सर्वाः सर्वाः सर्वार्थसाधकाः ॥ "

इत्यादिवचनम् । अत एव च

" सर्वे दण्ड्या हिंसकाश्च रक्षका मानभागिनः ।
प्रयोजनेन सिध्यन्ति दण्ड्यमानं यथायथम् ॥
वैद्याः सर्वेऽपि पूज्यन्ते निन्द्यन्ते सर्वरोगिणः ।
त्यक्त्वा विशेषणं सर्वं ब्रह्मविद्धव सर्वथा ॥ "

इत्यादिवचनेन सर्वेणाभेदः सूचितो भवति । धर्मार्थकाममोक्षाणां चतुर्णामेकबीजत्वकल्पनया, सर्वशास्त्रोपदेश इति सिद्धान्तोक्त्या त्वभेद एवेति निश्चितं भवति । ततो ज्ञान्यज्ञानी, रोग्यरोगी, दण्ड्योऽदण्ड्यः, मान्योऽमान्यः, स्वर्गी नरकी, सुखी दुःखी च, न प्रतीयते । अतः सर्वं खल्विदम्, पुरुषोदयः सर्वैरधिष्ठितो भवतीति ज्ञेयम् । अत एव "अमृतं हि विषं

तत्स्याद्विषमप्यमृतायते " इत्याद्युक्तिः । उदाहरणेनाप्येतत्सिद्धं भवति । रोगे हि विषस्याप्यौषधत्वेनोपयोगो भवति । नित्यनियतस्याप्यमृतस्य त्याज्यत्वं विज्ञायते । एवमेव सर्वम् । अत एव

" रोगे तु ह्यौषधं ग्राह्यं युक्तायुक्तं परित्यज ।
नित्यं सव्यसनं त्याज्यं नियतं यत्स्वभावतः ॥
विषमप्यमृतं विद्धि तद्धि संभूयते विषम् । "

इत्यादिवचनं स्पष्टमुक्तं भवति । तस्मात्संसरणमात्रं सर्वमावश्यकत्वेन विज्ञेयम् । " संसारमात्रं ज्ञात्वा स्थीयताम् " इत्यभियुक्तसंमतं भवति । यत्र न वैद्यादीनां प्रयोजनम्, तत्र स्वयमेव सर्ववैद्यादिप्रधानोभवेत् । दोषादोषास्तु केवलं स्वप्रयोजनारोपेण दृश्यन्ते । तान्परित्यज्य सुखी भवेति तद्वाक्यार्थः । तस्मात्प्रणवसंज्ञमोमिति शब्दस्वरूपं संसारमात्रमावेदयतीति निश्चयः ॥

अथैतत्संसरणव्यवहारश्चेत्थं द्रष्टव्यः । यद्यपि संख्याकालरहितत्वमुक्तम्, तथापि आरम्भावसानमप्यस्यावश्यकं भवति । आरम्भावसानयोश्च कालसंख्यानियतत्वं परिदृश्यते । " आद्यन्त प्रतिवचनान्यत् " इत्युक्त्या सृष्टेरारम्भावसानार्थकत्वं विज्ञायते । आरम्भावसाने चास्य व्याख्येये भवतः । तत्रारम्भस्य व्याख्यानमुचितं भवति, आरम्भस्यैव प्राथम्यात् । यतः पूर्वं नास्ति किंचित्, तत्प्रथममिति संज्ञया तदारम्भो विज्ञेयः, " पूर्वा-

परव्यवहारश्च कालेन भवतीत्युक्तेश्च । सारम्भावसानः संसारः । तयोः पूर्वं परं निषिद्धरूपं भवति । तस्मात् "संसारोऽयं सारम्भावसानः" इत्यादि स्पष्टमुक्तं भवति । आरम्भस्त्वकारेण बोध्यः । अवसानं चोकारेण । निषेधस्तु तयोर्मकारेण । एतदारम्भावसानाभ्यांचकालस्य त्रिविधत्वमुक्तम्—भूतो भविष्यो वर्तमान इति । इत्थमेव हि कालभेदोऽवगम्यते—आरब्धापरिसमाप्तिः वर्त्तमानः, समाप्तो भूतः, ताभ्यामन्यो भविष्य इति । एतदर्थप्रवचनायैव हि त्रुटिः, क्षणः, मुहूर्त्तम्, दिवा, रात्रिः, पक्षः, मासश्चेत्यादि अभिहितम् । कालस्यैव चास्य परस्परयोगेन, युगं कल्पो महाकल्प इति व्यवहारः त्रयाणामेतेषां कालानां प्रसरणेन सर्वशब्दव्यवहारो व्याख्यातो भवति । आकाशवाय्वादीनां व्याख्यानमपि चैतत्त्रयेणैव भवति । अत एव कालस्याशनत्वमुक्तं भवति, "कालोऽशनं हि सर्वेषां सर्वं कालसमाश्रितम्" इति श्रुतेः "कालेन जातानि सर्वाणि जायन्ते" इत्यादिवचनाच्च । अत एव कालत्रितयस्य योजनमेव सर्वमिति ज्ञेयम् । यस्य च व्यतीतत्वम्, तस्यैवासीदिति भूतकालक्रियया व्यवहारः । यस्य च स्थितिः, तस्यैवास्तीति वर्तमानकालक्रियया व्यवहारः । ताभ्यामन्यस्य भविष्यतीति भविष्यत्कालक्रियया व्यवहारः । एवमेव व्यवहारो भ्रमोपात्त एव । वस्तुतस्तु वर्त-

मान एव भूतः, स एव भविष्यः इति विज्ञेयम् । अत एव

" वर्तमानं हि सर्वं स्यान्न च भूतं भविष्यजम् ।
अस्त्येव सर्वथा सर्वं तदावश्यकमुत्तमम् ॥ "

इत्याद्यावश्यकव्याख्यानतया, भूतो भविष्यश्च न कश्चित् । सर्वं वर्तमानरूपमेवेति ज्ञेयम् । यथा ह्यात्मनः, संसारस्य, निषिद्धस्य चाभेद उक्तः, तथा कालत्रयस्याप्यभेदःसिद्धो भवति । तेऽपि चैतत्त्रितयान्तर्गता एव भवन्ति । अत एव

" वर्तमानो ह्यकारः स्यात्सर्वस्थः सर्वमूलकः ।
उकारस्तु भविष्यः स्याद्भूतोऽयं हि निषेधकः ।
भूतो भविष्यसंयुक्तो वर्तमानस्तथापरः ।
सत्त्वं विज्ञेयमेतेषामेवं प्रणवसंज्ञकम् ॥ "

अत एव

" एकः कालो हि सर्वस्य कालभेदो न कश्चन ।
केवलं कार्यभेदेन त्रिधाभूतः स लक्ष्यते ॥ "

इत्यादिवाक्यैः, कालत्रयस्याप्यावश्यकेनारम्भावसानानियमेन विभागः कथितो भवति ॥

एष विभागो ह्यात्मानात्मनिषेधबोधको भवति, संख्याशास्त्रेण हि विभाज्यविभागयोरभेदस्य सिद्धत्वात् " अङ्केनाङ्को विभज्यताम् " इत्युपदेशाद्वा । अङ्कस्यैव हि गुणनगुण्यगुणक-

त्वानि चोच्यन्ते । एतत्त्रितयक्रमस्यैव सर्वत्रोपस्थितेः, एतात्त्रितयस्यैव वाचकत्वमपि युक्तम् । एकं द्वितीयं तृतीयमिति संख्यामूलिकोक्तिः । एकश्चायमात्मा ह्यकारानिष्ठः, द्वितीयः संसाररूपः, तृतीयो निषिद्धरूप इति तदर्थः । एतत्त्रितयकारणंशून्यम् । अत एव चाङ्काना शून्येन वृद्धिक्षयौ भवत इत्यपि सिद्धम् । गुण्यं गुणकं चेत्यादि तु अङ्कस्यैव कार्यं भवतीति स्पष्टतया चाङ्कनामभेदः संवेद्यो भवति । गुणनकार्येण तु केवलं संसरणरूपः संसार एव बोध्यो भवति । विभाज्यविभाजकविभागैश्च हि संसारावस्थैवोच्यते । अत एव "गुण्यं तमङ्कं गुणकेन हन्यताम्" इत्युक्तम् । सृष्टिमात्रस्य त्रितयत्वं सिध्यति । अङ्के हि पुनः गुणनं विभागो योजनमिति कार्यत्रितयम्, एतत्त्रितयानियमेनैव भवतीति निश्चयात् । योजनमेव वृद्धिः, गुणनमेव वृद्धेरुपस्थितिः, विभाग एव क्षयो निषेधरूपो भवतीति हि निश्चयः । अत एव

"अकाराद्गुणितं सर्वमुकाराद्योजनं भवेत् ।
विभागस्तु मकाराद्धि संबन्धस्त्रितयात्मकः ॥"

किञ्च "त्रिकं त्रिकं त्रिकं चैव शून्यं तत्त्रितयात्मकम्" इति चोक्तिः संगच्छते । गुणनम्, योजनम्, विभागश्चैतत्त्रितयम्, त्रितयात्मकसंसारस्य कार्यरूपं भवति । उत्पत्तिरूपं हि गुणनम्,

योजनम् तदवस्थारूपम् । तत्रैव विभागो भवति । नियोजनं तु चतुर्थं तदभावरूपम् । अभावस्य चात्र शून्यरूपत्वेन न नियोजनंच किंचिद्भवति । अत एव "बाणवृद्धिरसक्षयः" इति ज्योतिर्वचनम् । अङ्कानां हि सर्वेषां वृद्धिक्षयाभ्यां तिथ्यादिकं निर्णीयते । तिथ्यादिकं सर्वमपि कालत्रयप्रयुक्तम् । तदभिवर्धनक्षयौ च संख्यया भवत इति व्याख्यानात् ।

"गुणनं योजनंचैव विभागश्च नियोजनम् ।
एतच्चतुष्टयं विद्यात्कालाधिकरणं च तत्"

इति वचनाच्च, गुणनयोजनविभागनियोजनानां चतुर्णामेव संख्याकार्यत्वमुच्यते । अत एव "अङ्कानां तु त्रिधा गतिः इत्युक्तं भवति । चतुर्थं न किंचिन्नियोजनरूपम्, तच्च शून्यत्वेनोक्तं भवतीति बोध्यम् । "अङ्कत्रयं ह्यारम्भावसाननिषेधवचनम् भवति" इति श्रुतिः । एकेन चारम्भः द्वितीयेन स्थितिः तदेवावसानं भवति, तृतीयं तु द्वयोर्भिन्नमिति तद्वाक्यार्थः। अनयैव श्रुत्या प्रत्येकं त्रितयत्वेनाङ्कनवकमपि विज्ञेयं भवति अभेदात्प्रत्येकं त्रितयत्वमपि सिद्धं भवति । दशमाङ्कस्तु न किञ्चिदस्तीति, शून्यरूपेण प्रयुक्तं तदविज्ञेयम् । अत एव नवाङ्केभ्यः परमेकएवाङ्को हि दृश्यते । य इमे नवाङ्काः पृथक्पृथक्परिदृश्यन्ते, न तेषा परमार्थतः पृथग्भावः, किंत्वेकमेव

सर्वं भवतीत्येतत्सूचनाय, शून्ययुतश्चैकोऽङ्कः, नवाङ्केभ्यः परं प्रयुक्तो दृश्यते । एकमित्युक्त्या तथा दर्शनेन च केवलात्मन एव ग्रहणात्, आत्मन्येव संसारनिषिद्धयोः स्थितिरिति व्याख्यानञ्च नवमाङ्कादनन्तरमेकाङ्कः शून्ययुक्तः सर्वसंबन्धयुक्तश्च परिदृश्यते । एवं चैतद्धि केवलवस्तुस्वभावप्रदर्शनाय संख्यायामप्युपयुक्तं, भवति । अत एव संख्याशास्त्रस्य चाङ्कसामान्यमेतदर्थकमिति सिद्धं भवति, सर्वशब्दस्य चैकत्वात् । एवं दशमाङ्कादूर्ध्वमपि पुनरेकम्, द्विकम्, त्रिकम्, चतुष्टयमिति तु तादृशम्, दशैवेति बोध्यं भवति । तदैकैकं संबध्य पुनर्द्वयं भवतीति फलितं भवति एवं क्रमेणैव हि विंशति स्त्रिंशच्चत्वारिंशत्पञ्चाशदित्यादि शतं सहस्रं सर्वमप्येकयुक्तं भवति । अत एव "सर्वाङ्कः सर्वसंबद्धः शून्येनैतत्प्रयोजितम्" इत्युक्तम् । अत एव

"गुणनं योजनं चैव विभागश्च नियोजनम् ।
सर्वाङ्कः सर्वसंबद्ध श्चारंभान्तस्य वाचकम् ॥"

इत्याद्युक्त्या कालसंख्यासंबन्धश्च सिध्यति । कालस्यैव रूपान्तरमङ्क इत्यपि विज्ञेयम्, "सर्वमानं हि सर्वकालस्तदङ्कजः" इति वचनात् । कालसंख्याशास्त्र प्रयोजनं ज्योतिरिति ज्ञेयं भवति । येनैतत्संसरणप्रकारश्चैकत्वेन बुध्यते, तदेव ज्योतिश्शास्त्रं भवति । अत एव "ज्योतिषामयनं यच्च तच्चक्षुरिति

नेयमात् । वास्तवस्य सर्वस्थानान्तरस्य च तस्य सविषयकत्वम् , विषयानुगतत्वञ्च ज्ञेयम् । संसर्गेणैव तदभिजन्यसंस्कारानियमो-ऽऽरोप्यते । आरोपणं हि सर्वथान्यस्य भवतीति फलितम् । "ते-नायमात्माऽसहायवानदेशवानवस्तुमांश्च" इति श्रुतिः । तेन चा-कारस्य प्रसक्तं परिगणनं न युक्तम् , आश्रयतासंबन्धाभावात् । तदुपस्थानम् , तदनुष्ठानञ्चावश्यकानावश्यकविधेरेव भवति । एत-द्वस्थाप्यवधानगतत्वात्सत्त्वैवेति निष्कर्षः ।

व्याकृतिश्चात्मनस्संसर्गेणैव भवति । यद्यप्ययमात्मा स्वयं न किञ्चित् , तथापि सर्वस्य तदर्थत्वात्तत्प्रावल्येन तस्यापि विका-रोऽवधेयः । तत्र च ज्ञानाज्ञानशक्तेर्हि व्यवस्था, संभवासंभव-नियमेन भवति । न तत्र संस्काराद्युपयोगः । संसारक्रमस्य हि निष्काम्यत्वान्निष्प्रयोजनत्वमेव । अतस्संस्कारोऽपि विचार्यो भवति। प्रत्यक्षोऽयं संसारः , तन्नियन्ता चानुमेयश्च भवति । अतोऽनु-गतक्रियास्थानेन संस्कारादीनान्नियन्तृरूपः, मूलभूतोऽयमात्मा भवति । तद्वाचकोऽयमकारो भवति । तस्यापि तादृशानुगति-कत्वादविशेषेण सान्धिरभिव्याप्तिश्च भवति । तत्सन्धेश्च संज्ञासं-स्कारयोर्भानम् । संस्कारशब्दस्यच, सम्यक्क्रियत इति व्युत्पत्त्या कालक्रमादि योगेनैव प्रयोजनम् । तदर्थबलादकारस्य निर्मान-त्वम् , भावाभावरहितत्वमनाद्यनन्तत्वञ्च सूचितं भवति । तत्रैव

"क्षणो मुहूर्तो मासश्च पलश्च विपला तथा ।
त्र्यंशैः सर्वतो बद्धमेतत्सर्वं च लाघवम् ॥
बृहत्वमपि सर्वत्र सर्वं सर्वाश्रयं मतम् ।
नक्षत्रं लग्नसंधिश्च योगः करणमेव च ॥
तिथिवारौ षडङ्गं स्याद्याङ्कजं कालसंज्ञकम् ॥"

इत्याद्युक्तिः । एवमेव तिथिवारनक्षत्रलग्नयोगकरणैः कालप्रकारोऽव-धेय इत्युपदेशः । अस्यैव पञ्चाङ्गत्वमपि चोच्यते, लग्नत्यागात् । वस्तुतस्तु त्र्यङ्गमेव भवति—तिथिर्नक्षत्रंलग्नमिति । नक्षत्रल-ग्नाभ्यांच तिथ्यादयो जायन्ते । मुहूर्तम्, क्षणश्चात्रैव विज्ञेयं भवति । अनेनैव च शुभाशुभकालोऽपि बुध्यते । सर्वस्याप्या-वश्यकत्वोक्त्या ह्यभेदोक्त्या च शुभमशुभमप्येकमेव भवति । एतत्पृथक्त्वविज्ञानभासपक्षेऽपि स्वप्रयोजनतया तादृशोऽयंनियमः क्रियते । काले चास्मिन्कार्यमिदं करिष्यामि, त्वं करोषि, कुरु वा, करोत्यन्य इत्यादिप्रयोजनारोपेण हि शुभाशुभविज्ञानं भवति । यच्च कार्यम्, न तत्कालावश्यकत्वेन प्रयुक्तम्; कालान्तरोपयुक्तं च तदशुभम्। यथा ऋतुनियमोऽप्यत्र दृश्यते, सर्वेषां पदार्थानां कालेन सह संबन्धात्। कालश्चावश्यकेन त्रितयक्रमेण युक्तः परिदृश्यते। इत्थंभूतपदार्थानां सार्वत्रिकत्वेऽपि कालोऽयं पृथगव-स्थितो भवति। यद्यपि सर्वस्य सर्वमिति न कालस्य पृथगव-

स्थितिः, तथापि सर्वस्य त्रितयत्वोक्त्या कालस्यापि तत्त्रित-यात्मकत्वं सिद्धम् । एवं सर्वपदार्थानामपि नियमो भवति । यथा—मासद्वैगुण्येन ऋतुर्नियुज्यते; ते षड्तवः सांवत्स-रिका भवन्ति । एवं कालनियतं च तत्फलं ह्यावश्यकं भवति । यच्च वा वासन्तिकानां पदार्थानामन्यकालिकत्वा-रोपणं स्वप्रयोजनेन भ्रमेण, तदेवाशुभं भवति । सति हि काले तदीये, शुभमिति विज्ञायते । यद्यपि कालतदन्यपदार्थयोरभेद उक्तः, तथापि तद्योजननियोजनादिभिर्भ्रान्तेन ह्येवं भेदो विज्ञा-यते । यद्यप्यनावश्यकं न किञ्चिदित्युक्तम्, तथाप्यनावश्यकम-प्यावश्यकं भवतीत्युक्तेरर्थो हि मन्तव्यः । एवं चानावश्यकत्वे-नाशुभं विज्ञायते । सत्यपि भाव्यमेव सर्वमिति निश्चये, स्वभ्रमे-णैव तदशुभमिति ह्युच्यते । यो ह्येवं जानाति सर्वं भाव्यमिति न तस्यास्ति शुभाशुभजननमरणव्यापारः । अत एव "न हर्ष-शोकौ ब्रह्मस्वरूपे" इत्याद्युक्तम् । भूयसा ब्रह्मकल्पनमपीदं भ्रमा-दन्याद्विद्धीत्युपदेशफलं भवति । लाभालाभानुसारेणैव हर्षशोकौ प्रतीयेते, तदेवं शुभमशुभमपि । यदिदं प्रकाररूपं भाव्यम्, तदेव मन्तव्यम्—नाशुभम्, न शुभमिति च । अत एव यानि लग्नानि, नक्षत्राणि, कालरूपाणि चैककार्यप्रयुक्तानि, तान्येवा-न्यस्मिन्कार्येऽनुपयुक्तानि भवन्ति । तस्मात्सर्वस्य युक्तत्वमयुक्तत्वं

र्च सिद्धं भवति। यदेकस्य शुभम्, तदन्यस्याशुभं भवति। तदशुभमप्यन्यस्य शुभं भवतीति हि निश्चीयते। अत एवं

"सर्वे शुभाशुभं चैकं ऋतुमासा निरर्थकाः।
अनन्तमव्ययं चैव सर्वमावश्यकं भवेत्॥"

तस्माज्ज्योतिःशास्त्रेषु शुभाशुभसूचकम्। सुमुहूर्तं दुर्मुहूर्तं चोच्यते। वस्तुतस्तु यदेतत्त्रितयसंसरणमकारस्वरूपमभेदरूपम्, तदेव दर्शयतीत्यवगम्यते। सारम्भावसानेन नियमेन सर्वं विद्धी-त्युपदेशोऽपि भवति।

कालसंख्ययोरभिन्नत्वमप्युक्तम्, परस्पराधिकरणत्वात्। कालः, संख्या, सांख्यं चेति त्रयं कालात्मसंख्यासंसारबोधकं भवति। तयोः परं च सांख्यम्, संबन्धरूपं निषिद्धं भवति। अत एव "नास्तिकाः सांख्यवादिनः, आस्तिकास्त्वात्मवादिनः" इत्यभिहितं भवति। वस्तुतस्तु द्वयोरेकत्वमेव। अत एव

"नास्तिकाऽनास्तिकाश्चैवमास्तिकाश्च ततः परम्।
त्रित्वमेतदप्रमेयं द्वयोर्भेदो न युज्यते"॥

इत्युक्तं भवति। अत्रानास्तिकत्वं निषिद्धरूपम्, नास्तिकत्वं विरोधरूपः संसारः, आस्तिकत्वमात्मस्वरूपप्रतिपादनपरमिति च फलितं भवति। संख्याकालाभ्यां सांख्यमित्यपि सिद्धं भवति, "नास्ति ब्रह्म" इति सांख्यप्रवचनात्। यद्यपि ब्रह्मणो भिन्नं न

किंचिदस्ति, तथापि भ्रमेणैव यत्तथा प्रतिपादनम्, तन्निषेधमात्रार्थमित्युक्तं भवति । "कालसंख्याविरामः सांख्यम्" इत्युक्त्या वा । सांख्यप्रतिपादनमपि सर्वार्थमित्यपि ज्ञेयम् । कालसंख्याप्रतिपादकं ज्योतिर्वचनम्, तत्सांख्यार्थमेवेति सिद्धान्तः, कालस्य संख्यायाश्चैकयोगस्तत्संबन्धमूलस्सांख्यमित्यभिधानात् । अत एव "कालश्च ज्ञेयः, संख्या च विज्ञेया, साख्यं च भाव्यम्" इत्याद्युक्तिः । कालसंख्यापरिणामः सांख्यमिति च । यच्चारम्भावसानविशिष्टमात्मसंसारस्वरूपं स्वयमनाद्यन्तं निषिद्धरूपं च तदेव सांख्यानुमतं ज्योतिः शास्त्रानुमतं च भवति । केवलप्रकारवचनमारम्भावसानरूपम् । यद्यप्यारम्भावसानस्य चानाद्यनन्तत्वमुक्तम्, तथापि कार्यविरामाय तत्साधनमिति बोध्यम् शुभाशुभत्वम्, युक्तायुक्तत्वं चापि विरामार्थकमेव । न तत्र लिङ्गं भवति । "विरामो लिङ्गमनुसाध्यम्" इति सूत्रात् अत एव

"सर्वगं सर्वसंस्थं च सर्वज्योतिरनन्तरम् ।
सर्वाश्रयं सर्वभूतं कालिकं कालमूर्धजम् ॥
आदिमध्यान्तवर्जं च वर्जनादपि वर्जनम् ।
प्रविष्टमप्रविष्टं च धृतं चाधृतमेव च ॥
उपस्थितं ब्रह्म विदुरनुपस्थितमेव च ।"

इति स्पष्टमुक्तम्। तस्मात्त्रितयात्मकं कालसंख्याविशिष्टं तद्रहितं च सांख्यं प्रसरणामिति निश्चितं भवति। तत्प्रकाररूपं चारम्भावसानं भवति। आरम्भावसानयोरपि प्रत्यन्तरत्वम्, तदभावश्च सर्वत्रानुसंधेयम्। अत एव "सर्वे मासाः, सर्वर्तवः, सर्वत्र सर्व पदार्थानामुपस्थितिः" इति वचनम्। "सर्वा तु विद्या सर्वस्य" इत्याद्युक्त्यापि, सर्वोपाख्यानमारम्भावसानसहितं बोध्यम्। तेन कालसंख्ययोरप्यनियतत्वमनन्तत्वं ब्रह्मस्वरूपत्वं च सिध्यति। एतत्कालसंख्यानुसारेणैव सर्वमपि कार्यं वेद्यं भवति।

एतदेव ग्रहाणां फलमित्यवधेयम्। ग्रहा इत्येतात्त्रितयस्यैव संज्ञा। तत्फलं भवनमात्रमेवेति बोध्यम्। एतत्त्रितयस्य त्रितयक्रमेणैव प्रत्येकं गुणितत्वात् नवधा नियमाच्च नव ग्रहा भवन्ति। वस्तुतस्तु त्रयमेव तदकारोकारमकारान्तर्गतमिति विज्ञेयम्। एतत्त्रयस्य च फलं कालानुसारि भवति।

कालश्चात्र संसारक्रम एव। संसारे क्रमस्त्वारम्भावसाननियमेनैवेति दृष्टया, आरम्भावसानमेव काल इति निश्चयात्कालस्य क्रमत्वमुक्तं भवति। क्रमस्य कालस्वरूपत्वमपि, तच्छब्दार्थत्वात् आरम्भावसाने च क्रमाधीने इति नियमात् "क्रमशो भवन्ति सर्वाणि" इत्युक्तेश्च। अस्मादेव पदार्थानाम्, एकस्मादनन्तरमेक

इति यथाक्रमं स्थितिर्विज्ञायते । तदनन्तरमेवावसानम्, भवनम्, आरम्भश्चेति तद्वाक्यार्थः । एकस्य भवनमेकस्य समाप्तिरिति हि क्रमो विज्ञायते, "अनन्तरक्रमास्तित्वम्" इति वचनात् ।

क्रमस्य हि कालस्वरूपत्वोक्त्या, यस्य क्रमो बुध्यते तदेव संख्येयेत्यपि चावधेयम् । अत एव "सांख्याः सर्वेऽपि पदार्थाः" इत्युक्तम् । "सर्वं संख्येयं हि संख्यया" इति तत्तात्पर्यार्थः । "सर्वे च पदार्थाः संख्यासमाप्त्यारम्भसहिता भवन्ति" इति सूत्राच, परिगणनं संख्येति तद्व्याख्यानात् परिगण्यः पदार्थ इति व्याख्यानाद्वा, परिगणनं पदार्थसंख्यामात्रम्, प्राधान्यबोधायोक्तम् । अत एव "भूतं संख्या भवनं क्रमः" इत्यपि स्पष्टम् ।

कालशब्देन चानाद्यनन्तत्वसूचनात् बुद्धिविरामार्थकः क्रमो भवति । वस्तुतस्तु सर्वस्मिन्सर्वमिति बुद्ध्या, न क्रमो नच कालश्च भवति । सर्वान्तर्गतः क्रमः काल इति तदर्थः । "क्रम एव कालः सर्वशः" इति शिष्टव्याख्यानात् कालसंख्याक्रमश्च सर्वमेवेत्यतः फलितं भवति ।

यद्यपि "कालाधिकरणः क्रमो भवति" इत्याद्युक्तिः । विरामार्थकमिदं वचनमिति बोध्यम् । यद्यपि विरुद्धस्वभावाभ्यामात्मसंसारशब्दाभ्यां नियमेन तयोर्बोधः संभवति, तथापि द्वयो-

ऽैकत्वमेवेति विज्ञेयम्। तथा प्रवचनं त्वज्ञानमूलकमेव भवति। एव-मेव कालस्यानन्तत्वप्रवचनम् , क्रमश्चेति विज्ञेयम् ।

अत्र चाकारेण क्रमः, स एवात्मा; उकारेण च संख्या, सैव संसारः; मकारेण च कालः, स एव निषेधरूपः । एव-मेवत्रितयेऽपि ब्रह्मबुद्ध्या चैकत्वमवधेयमिति तद्व्याख्यानफलं भवति । योऽयं प्रकारभेदः, स एव क्रमसंख्याकालरूप इति बोध्यम् । अत एव

"कालसंख्याक्रमस्थोऽयं नात्मा भवति सर्वदा ।
सर्वस्थः सर्वभिन्नश्च सोऽयमात्मा सनातनः ॥

"क्रमान्तर्गतं कालयुक्तं च नैत-
न्न संख्याविशिष्टं पुनः सांख्यरूपम् ।
सदा भिन्नसंयुक्तमावश्यकं त-
त्परं ब्रह्म वेदान्तसिद्धान्तवेद्यम् ॥ "

इत्याद्युक्तम् । पुन श्चैवम् "क्रमः संख्या कालः सांख्यं प्रवृत्तं निवृत्तं च ब्रह्मेति बोध्यम्" इत्यपि चोक्तम् । तेन क्रमसंख्याका-लसांख्यानामपि व्याख्यानरूपोऽयमेव संसारप्रकारभेदो भवति । प्रकारे चास्मिन् तादृशभेद एव मन्तव्यः । मिथ्यारूपोऽयं पृथ-ग्भावश्चैतत्प्रकारस्य । अत्रैव सुखदुःखादिकं प्रतीयते, अन्यथा तु भाव्यं सर्वं परमानन्दमयमिति मन्तव्यं भवेत् । तदेवमोमित्ये-

तच्छब्दस्वरूपेण त्रितयात्मकेन सर्वप्रकारस्यैकत्वम्, सर्वप्रकारस्यावस्यकत्वम्, आरम्भावसानबीजत्वं च बोध्यमिति सिद्धान्तः ॥

अथैतत्प्रकारत्रितयात्सिद्धे संसारे, तदारम्भावसाने च, तत्र च बीजं विराम इति सर्वत्रोक्तं भवति । तन्निरूपणं चैतत्त्रितयसंबन्धविशिष्टमिति वक्तुं युक्तम् । सत्यामपूर्णतायां विरामो भवति, तस्य प्रयत्नफलकत्वात् । योऽयं भवनरूपो व्यापारः त्रितयात्मकः, स एव प्रयत्नो भवति । तस्यैव विरामो भवतीति विज्ञायते । अत एव "प्रयत्नारम्भौ विरामावसाने" इत्युक्तम् । श्रमनिवृत्त्यर्थं हि विरामः सिद्धो भवति । एतत्त्रितयोत्पत्तेरावश्यकत्वेऽपि तद्बीजं विचार्यं भवति । अस्त्यनुमानं हि प्रत्यक्षयुक्तम्, "प्रत्यक्षान्तर्गतमनुमानम्" इति वचनात् । प्रत्यक्षज्ञानं चेन्द्रियार्थसंनिकर्षजं भवति । तस्मात्परोक्षज्ञानकरणमनुमानमिति नियमेन तदनुमानमपि प्रत्यक्षमेव, अनुमानप्रत्यक्षयोरभेदेन व्याख्यानात् । अत्र सर्वपदार्थविषयकप्रत्यक्षेण सर्वस्य संसाररूपत्रितयात्मकभवनमनुमेयम्, सर्वस्य संसाररूपत्वात्त्रितयात्मकत्वाच्च । तादृशं प्रत्यक्षमपि केवलं भ्रान्तेन हीदं प्रत्यक्षं ततोऽन्यदनुमेयमित्युच्यते ।

यच्च किञ्चिद्भासते, तस्य मूलमवश्यं विचार्यमेव । त्रितयात्मकस्य सर्वमूलत्वं विज्ञायते । यद्यपि संसारोऽयं भ्रान्तोऽ-

सत्योऽयुक्तश्चेत्युच्यते, तथापि तदेतत्प्रवचनमात्रस्यासत्यत्वमयुक्तत्वं चेति विज्ञेयम् । बुद्धिभ्रमेण ह्यसत्यत्वमयुक्तत्वं चास्मिन्भासते । संसारस्य त्रितयात्मकत्वबुद्ध्या तु नासत्यत्वं नायुक्तत्वं च भवति, असंभवात् । सर्वं भाव्यमिति यो हि मन्येत, न तस्य भ्रमः कल्पयितुं युक्तः । एवं च प्रत्यक्षानुमानयोरेकत्वं हि विज्ञायते । ज्ञानत्वेन रूपेण न तयोर्भेदः कल्पयितुं शक्यः । प्रत्यक्षमपि ज्ञानमनुमानमपि ज्ञानं भवति ।

वर्तमानो भूतो भविष्यंश्च क्रमेण प्रत्यक्षमनुमानं निर्णयश्चेति विज्ञेयम् । यद्धि किल प्रत्यक्षम्, तन्निर्णीतं वर्तमानरूपं भवति । अनुमेयो भूत इत्यवगम्यते । भविष्यदंशे निर्णयप्रयोजनं संभवति । तेन प्रत्यक्षानुमानाभ्यां भविष्यतोऽपि निर्णयः संभवति, प्रत्यक्षानुमाननिर्णयानां परस्परसंबन्धात् । यादृशं चेदानीं प्रत्यक्षं भवति, तेनैव पूर्वमप्यनुमीयते । अतः परमपि चैतादृशमिति प्रत्यक्षानुमानकृतो निर्णयः । वस्तुतस्तु निर्णयानुमानयोः कारणं प्रत्यक्षमेव ।

एतत्त्रितयं चैकमेवेति सिद्धतया प्रत्यक्षानुमाननिर्णयानामेकत्वमेव । अत एव "प्रत्यक्षानुमाने ताभ्यां निर्णयः" इति न्यायवचनम्, "प्रत्यक्षानुमाननिर्णयकृतं हि सिद्धं भवति" इत्यपि च । एवं च प्रत्यक्षानुमानाभ्यां निर्णीतं सर्वं सिद्धमित्युक्तं

भवति । प्रत्यक्षानुमाननिर्णयानामपि तादृशस्त्रितयसंबन्धः परिकल्पितः। अकारवाच्योऽयमात्मा प्रत्यक्षं भवति । निर्णयस्तूकारवाच्यः संसारः । मकारवाच्यमिदमनुमानम् । एवं त्रितयं हि विज्ञायते । प्रत्यक्षं चात्मनस्त्वविरोधेन सर्वस्थितत्वाद्भवति । यत्र च बहुवचनं तदेव निर्णेयम् , विरोधयुक्तत्वात् ।

संसारस्य प्रकारतया विरोधो दृश्यते । आत्मनः परो भवति संसारः। तस्मात्तस्य निर्णेयत्वम् , "निर्णेयं हि जगत्त्रिकम्" इति वचनात् । "अपारोऽयं संसारसागरः" इत्याद्युक्त्या वा । अनुमानं च ताभ्या निषिद्धमभावरूपमिति । यद्भवति, वर्तते च, तदेव भवः; न भवतीत्यवर्तनमभव इति स्पष्टमुक्तेः। तदनुमानमेव तृतीयम् । भूतस्यैवाभावः सर्वलोकः, "नाभावः कश्चिदन्यः पदार्थः" इतिव्याख्यानात् । अतः षट् पदार्थाः समवायान्ता उक्ता वैशेषिकैः, " भावान्तर्गतोऽभावः " इति वचनात् ।

आत्मदृष्ट्या चात्मनः प्रत्यक्षम्, संसारस्य निर्णयः,निषिद्धमनुमानम् । संसारदृष्ट्या तु संसारमात्रस्य प्रत्यक्षम् , निर्णयश्चात्मनः, निषिद्धमनुमानञ्चेति बोध्यम् । त्रयाणां परस्परत्वादपरस्परत्वाच्च सर्वमनुमानं प्रत्यक्षं निर्णयश्च भवति । अभावदृष्ट्या त्वनुमानस्यापि प्रत्यक्षत्वमित्यपि व्याद्दयातम् । यद्यपि तस्यासत्त्वमुक्तम् , तथापि निर्णयप्रत्यक्षयोः संबन्धरूपत्वात्ता-

भ्यामेव तद्ग्रहणम् । वस्तुतस्तु प्रत्यक्षमेव सर्वम् । अत एव "प्रत्यक्षज्ञानं ब्रह्म" इत्युक्तम् ।

ज्ञानं च परोक्षापरोक्षत्वभेदेन द्विविधं भवति। परोक्षज्ञानं च निर्णयानुमानसिद्धम् । अपरोक्षं च प्रत्यक्षसिद्धं भवति, अक्ष्णः परिवर्तमानेन्द्रियकार्यात्परं पूर्वं चेति तदर्थात् । अत एव "परोक्षापरोक्षयोर्भिन्नं ब्रह्म" इति सिद्धान्तः । एवमेव यत्प्रत्यक्षम्, तदनुमानं निर्णयश्चेत्युक्तम् । यदेतत्त्रितयस्यैकत्वं तदेव सिद्धान्त इति बोध्यम् । असंदिग्धो हि सिद्धान्तो भवति । प्रत्यक्षानुमाननिर्णयानां पृथग्भाव एव संदिग्धः । तदेकीकरणमेव सिद्धान्त इति फलितं भवति ।

दृष्टान्तो हि प्रत्यक्षानुगामी भवति । यदयं दृश्यते, ज्ञायते, स दृष्टान्त इति तदर्थः । दृष्टं दृश्यते च यत्तदनुमानं निर्णयश्चेति तद्भावः । दर्शनमात्रं हि प्रत्यक्षम् । यश्च दृश्यते, स दृष्टान्त इति दर्शनदृष्टान्तयोर्भेदः । दर्शनाविषयश्च दर्शनीयम्, दृष्टान्त इत्युक्त्या वा, यथा द्रष्टव्योऽयं पुरः स्थितपदार्थः अत्रायमस्ति वा इति । एतेनान्यत्राप्ययमस्ति चेति दृष्टान्तफलं भवति। अनुमानसाधकोऽयं दृष्टान्तः । वस्तुतस्तु तस्यापि प्रत्यक्षत्वं सिद्धम् । दृष्टान्तस्तु केवलमुदाहरणमेव । स च प्रत्यक्षानुमाननिर्णयसाधनं भवति ।

एतत्त्रितयस्यैकत्वं सिद्धान्त इति व्याख्यानफलम्। अत एव "नानुमानप्रत्यक्षनिर्णयसिद्धं ब्रह्म" इत्युक्तम्। अत एव ब्रह्मणो ह्यनैकान्तिकत्वमपि सिद्धं भवति। प्रत्यक्षानुमाननिर्णयसिद्धान्तानां दृष्टान्तस्य च बीजमेकमेवेति निश्चितं भवति। यदिदं प्रत्यक्षसिद्धम्, तदेव पूर्वमपीति निश्चयोऽनुमानम्। परमपि चैवमित्यतो निर्णयफलं सिध्यति। एतेन केवलं त्रितयात्मकप्रकारभेदः संसारे इति बोध्यम्।

संसारे त्वस्मिन्भवनमात्रं न दृश्यते, किन्तु प्रत्यक्षकार्यकारणव्यापारः। यद्यपि कार्यकारणयोरावश्यकत्वम्, तथाप्यत्र तथा कामनादिकमेव भासते। तेन पूर्वमपि भवनं चैतादृशमित्येवानुमेयं भवति। कामनादेः कार्यकारणयोश्चावश्यकत्वं विज्ञायते। कामनादिश्च कार्यकारणव्यापार एव। यत्कार्यं तदेव कारणम्। यच्च वा कारणं तदेव कार्यमित्यपि च ज्ञायते, तयोः परस्परत्वात्। येन यदुत्पाद्यते, स तत्कारणं भवति। एवमुत्पाद्यस्याप्यन्योत्पादने कारणत्वम्। सर्वत्र चैवं दृष्टान्तेन सृष्टिस्थितिप्रळयरीत्या कार्यकारणव्यापारो बोध्यः। तन्मूलं तु केवलं भवनमात्रम्। त्रितयात्मकं त्वकारणमिति व्याख्यातम्। तेनात्र कार्यकारणव्यापारदर्शनं स्वप्रयोजनारोपरूपभ्रमेण भवति। यस्य कारणत्वमुच्यते, तस्य कार्यत्वमपि चोच्यते, तदेव भवनसंधिः। कार्यकारणप्रवचनं हि पृथग्भासनतयेति बोध्यम्।

आत्मैव संसारकारणं भवति, संसारस्याप्यात्मकारणत्वम्, तयोः अभेदाख्यानात् अभेदेत्वनियमो भवतीति सिद्धान्तात्। तदेवमेवाभेद इत्यनित्यसंबन्धफलम्। नित्यसंबन्धे तु यत्त्वं तदेवाहमिति व्याख्यानं बीजं भवति। यद्यप्यत्र जीवदेहयोः पृथक्त्वं भासते; तथापि विना चैकैकं परस्परवैय्यर्थ्यापत्तेः।

आत्मा च संसारविशेषणं भवति, संसारश्चाप्यात्मविशेषणं भवति। अतस्तयोः परस्परत्वमपरस्परत्वम्, कारणत्वमकारणत्वम्, कार्यत्वमकार्यत्वं च सिध्यति। यथा—चतसृषु दिक्षु न तन्नियमो दृश्यते। एकैकस्मिन्नपि देशे देशान्तराणां प्राक्प्रत्यग्दाक्षिणोत्तरत्वेनाख्यानं भवति। तदप्यन्यस्मिन्नन्यथा भवति। अतश्च न पूर्वोत्तरत्वादिनियमः। एवमेवात्मनः संसारस्यापि, तयोराभिन्नत्वानियमात्। अत्र च कारणकार्यव्यापारदर्शनं तादृशज्ञानमात्रम्, अस्याप्यावश्यकत्वाख्यानात्। अतश्चैवं निर्वचनमेव युक्तं भवति। तेन कार्यकारणाभ्यां च न कामनादेरुत्पत्तिः। किंतु तद्बीजं च तादृशे भवनमात्रे ज्ञातव्यमित्युपदेशफलं भवति।

कारणकार्यज्ञानं च भेदरूपम्। प्रत्यक्षानुमानानिर्णयसिद्धान्तज्ञानं चापि भेदरूपमेव। तस्मात्तद्भेदज्ञानं परित्यज्याभेदज्ञानमुपलभ्यतामित्युपदेशः। एतेषामेकत्वमेव भवनमात्रबीजम्,

तत्फलं च ज्ञातव्यं भवतीति सर्वशास्त्रसंमतत्वात् । यदिदं प्रत्यक्षं-यदिदमनुमानं च निर्णयः सिद्धान्तो दृष्टान्तश्च, तेषां सर्वेषां बीजं त्वेकमेव । प्रत्यक्षमनुमानं निर्णयश्च, त्रितयात्मकत्वेनैव तत्तज्ज्ञानभवनकारणं भवति ।

एतत्त्रितयं चैकमेव । एकस्मान्न त्रितयं भिन्नं च वर्तते। यच्चान्यदस्ति, तत्केवलं शब्दस्वरूपमेव । तस्मादेतत्त्रितयस्याप्यावश्यकत्वम्, तदावश्यकज्ञानं च तादृशमिति सिद्धम् । इदमस्ति, इदमासीत् इदं भविष्यतीति तु केवलं बोध एव । त्रयाणां सत्ता त्वेकैव । सत्ता हि सर्वत्र विद्यते । इयमेव सर्वप्रसरणमूलभूता । तस्मादिदमस्ति, अस्त्येव सर्वमपीति सिद्धे, यदास्ति तदेवासीदिति अस्त्यासीदित्यनयोरभेदप्रतीतिर्हि निश्चिता भवति । भविष्यत्यप्येवम्, तस्याप्यभेदान्वयात् ।

यद्यपि भविष्यति संभवोऽसंभव इति विधानद्वयम्, तथापि तयोरभेद एव ज्ञातव्यः। यत्सर्वं तदेव भवतीति संभवः। संभवनं संभवइत्यर्थादात्मनः संसारस्य च ग्रहणम् । असंभवस्तु न कश्चित् । स च केवलं निषिद्धरूपः । अत एव " समोऽयमात्मा भवतीह सर्वशः " इत्युक्तम् । एवमेव

" भवत्यात्मा हि संसारः समात्मा भवनं जगत् ।
संभवः सर्व एवास्ति नासंभवपरामृतः ॥"

इत्यादेरप्येवं सिद्धिः ।

" समात्मा भवनं सर्वं तयोर्योगो ह्यसंभवः ।
असंभवस्तदन्यश्च तयोः संबन्धरूपकः ॥ "

इत्याद्युक्त्या वा । संभव एवास्ति, नासंभव इति तत्फलितार्थः । असत्यसंभवेऽप्यसंभवसंविधानं यत्तदेव भ्रमरूपम् । यच्चान्यथा ज्ञानेन भाव्यं सर्वं त्रितयं चैकं न मन्येत; तस्य संनिधानं भ्रमरूपमसंभवरूपं च भवति । वस्तुतस्तु सर्वं संभव एवेति हि ब्रह्मतत्त्वम् । असंभवस्त्वारोपमात्रम् । तत्कारणं पृथक्त्वाभास एव । यद्यपि नियतस्य विनाशोऽसंभवः, तथापि विनाशस्य संभवत्वोक्त्या नासंभवः कश्चिदिति बोध्यम्, " असंभवः संभवः सर्वसंभवोऽप्यसंभवः सर्वमपि भाव्यम् " इति प्रवचनात् । भाव्यशब्दार्थे चैव संभवासंभवयोर्गतार्थता भवति । द्वयोः सत्ता च भाव्यैवेति निश्चिता । अत एव " संभवोऽपि भवेद्भाव्यं भाव्यमेव हि संभवः " इत्युक्तम् । तस्माद्योऽयं भविष्यति संदेहः, स भ्रमरूपः । तत्कारणं तु संसारात्मनोर्निषिद्धस्य च कार्यमिति विज्ञेयम् । अस्त्यादीनां त्रयाणां सत्ता त्वेकैव । ज्ञानं चैतेषां त्रयाणां सत्तैव । तस्मादेवैतत्त्रयमूलं पृथङ्निर्देश एव । वस्तुतस्तु निश्चयमात्रं सर्वमिति सिद्धम् ।

निश्चयस्यैव हि क्रमो भवति । प्रत्यक्षानुमान निर्णयाश्च

यथाकालं व्याख्याताः । ज्ञानांशे हि तत्स्थानां निश्चयः । तत्क्रमस्त्वारम्भावसानादिरूपः, प्रत्यक्षादिरूपश्चेति बोध्यम् । निश्चयस्यानन्तत्वमनादित्वं च भवति । प्रत्यक्षादयश्चाद्यन्तयुक्ताः । सर्वसत्तायाश्चैकरूपत्वादभेदबुद्ध्या यादृशमिदं तादृशमन्यादिति प्रत्यक्षादेरर्थः । क्रमरूपश्च योऽयं भेदः, तत्रैव संभवासंभवप्रतीतिर्भवति । वस्तुतस्तु सर्वं नास्त्यस्तिसमायुक्तमिति बोध्यम् ।

एतेषां परस्परकार्यकारणत्वं चापि ज्ञेयम्, सर्वस्याभेदनिरूपणात् । ज्ञातृज्ञानज्ञेयानामभेदात् संभवासंभवप्रत्यक्षानुमाननिर्णयदृष्टान्तसिद्धान्तेऽप्यभेदः । तद्भेदाभेदावावश्यकाविति स्पष्टम् । यदपि प्रत्यक्षे नानुमानमित्युक्त्या तयोर्भेदवचनम्, तदपि न युक्तम्, अनुमानस्य भूतस्वरूपत्वात् । "भूत इवाभावः" इत्युक्त्या च तस्यैक्येऽपि, न प्रत्यक्षे प्रयोजनमिति तदर्थः । निर्णयानुमानेऽप्येवं भेदः । यद्यप्यनुमानकृतो निर्णयः, तथापि सत्तानिश्चये सति, न तयोः परस्परत्वम्, सत्यपरस्परत्वे चैवाभेदः । काल एव परस्परभेदको भवति । तत्रैव तादृशः परस्परापरस्परभावः, संभवासंभवनियमश्च विज्ञेय इति स्पष्टतया, यच्च संसारे भासते तत्सर्वं भवनमात्रमिति सिद्धं भवति ।

भवने च योऽयं क्रमः, तत्क्रमान्तर्गतः काल एव विराम इत्युक्तः । स च क्रमकरणरूपश्रमस्य फलं भवति । एकस्यैव

वस्तुनो यद्भेदद्वयम्. तत्सत्ताविशिष्ट तयोरेकत्र योजनं क्रम इत्युक्त्या, योजनमात्रसमयो विराम इति स्पष्टमुक्तं भवति। तस्यैवावसानत्वमुक्तम्। योजनकरणरूपश्रमश्चैवारम्भः। वस्तूनामस्तित्वमनन्तकालिकं भवति। योजनकरणमप्यनन्तम्, भवनस्यानन्तत्वात्। केवलं समकाल एवारम्भावसानः। अनेनैव वर्तमानो भूतो भविष्यंश्चेत्युच्यते। वस्तुतस्त्वेकैव सत्ता, सर्वं चैकमेव। क्रमान्तर्गतं च कालविज्ञानं भवति। इदमेवास्तीत्येतद्रूपम्। अस्यैव निश्चितत्वं ज्ञातृत्वं चोच्यते। तत्सिद्धान्तप्रवचनार्थं हि प्रत्यक्षानुमाननिर्णया भवन्तीति बोध्यम्। तेषामेकत्वमेव हि सिद्धान्तः। तस्यैवान्यरूपे क्रमान्तरे दृष्टान्तोऽप्युक्तः। एवमेव संभवासंभवकार्यकारणकर्तृप्रयोजनानि विज्ञेयानि भवन्ति।

सर्वमभिन्नरूपं ब्रह्मेति निश्चितं भवति। कर्तुः प्रयोजनस्य च सत्ता त्वेकैव। सर्वाभेदस्तु सत्तैकत्वाद्बुध्यते। प्रवचनार्थौ च भेदाभेदौ भवतः, "सर्वं सर्वम्" इत्यभेदोक्तेः। सर्वं ह्यकारोकारमकारान्तर्गतं भवति। ओमितिस्वरूपं तु निश्चयज्ञानरूपम्। अत एव ज्ञानस्यापृथक्त्वेऽपि प्रत्यक्षादिकेन सर्वेण तस्य तत्तच्छब्देन पृथगेवान्वयः। तस्मात्प्रत्यक्षानुमाननिर्णयैर्विज्ञेयं सर्वमपि ज्ञानमेव त्रितयं भवति। तदोमिति केवलं ज्ञानस्वरूपम्। "ओं ज्ञानात्मकं ज्ञानमपि" इत्युक्तम्।

" त्रयं ज्ञानं हि विज्ञानमोमेतच्छब्दसंधिजम् ।
प्रत्यक्षेणानुमानेन निर्णयेन च सिध्यति ॥
प्रत्यक्षं चानुमानं च निर्णयश्च त्रयात्मकम् ।
ओमित्येतत्स्वरूपं हि ज्ञानमात्रं प्रयोजितम् ॥ "

इत्याद्युक्त्या वा, ज्ञानं ब्रह्मेति व्याख्यानाद्वा, ज्ञानमोङ्कारस्वरूपं त्रितयात्मकमिति सिद्धम् । तत्प्रत्यक्षानुमाननिर्णयरूपं त्रितयं सर्वत्र दृश्यते । तदेवारम्भावसानरूपमिति सिद्धान्तः । श्रमफलं तु विराम इति स्पष्टम् । तस्मात्प्रत्यक्षेण भवनमात्रानुमानं भवति ।

तत्र च कामनाद्यारोपो भवति, कामनादेः प्रत्यक्षविषयत्वात् मूलाधिष्ठितं सर्वमिति व्याख्यानाद्वा । अत्र चेच्छा, कामना, काङ्क्षा, संकल्पः, अध्यवसायश्चेत्यादिर्दृश्यते । विना च मूलाधिष्ठितमेतादृशस्यासंभव एव । तेन च भेदसूचनम्, तत्कारणावश्यकत्वं च ज्ञेयम् । यद्यप्यसंभवो नास्ति कश्चिदिति व्याख्यातम्, तथापि भिन्नसत्तायां भेदस्याप्यावश्यकत्वेनासंभव एव ।

अस्मिंश्च संसारे पूर्णत्वापूर्णत्वे च दृश्येते । पूर्णत्वविशिष्टदर्शने च संदेहः। कुत्रचिदपि पूर्णता न दृश्यत इति प्रवचनमेव युक्तम् । यद्यपि " पूर्णाः सन्तु मनोरथाः " इत्याद्युक्तम्, तथापि तत्र भविष्यत्कालस्याध्याहारः । यदयं नास्ति पूर्णो

मनोरथः, तद्भुद्भवस्त्वन्यकाले इत्याशीर्वादार्थः । भवत्वेवमेवेति निश्चये निर्णयप्रयोजनम्, तत्र विकल्पस्य संभवात् । सर्वेषामाशीर्वचनं, न्यूनाधिकत्वप्रयुक्तपरस्परक्रमेण भवति । नैतदप्ययुक्तम् । तद्भवनमेव भाव्यम् । जीवस्य ह्यात्मत्वात्तत्र सर्वस्य विद्यमानत्वाच्च भाव्यानुमानतया महतामप्याशीर्वचनम् । यदिदमपूर्णं भासते, तन्न वस्तुतो युक्तं भवति । तदिदमेव पूर्णत्वेन भासते इति तत्फलितार्थः । यदिदं त्वमपूर्णं मन्यसे, तस्यैवासंभवात्सन्तु पूर्णा इत्युक्तिः, "पूर्णे सर्वं समाश्रितम्" इति श्रुतेः "पूर्ण एवात्मा भ्रमोपस्थितः" इत्युक्त्या वा, सर्वं सार्वकालिकमिति व्याख्यानाच्च ।

वेदप्रतिपादितमाशीर्वचनं च नायुक्तम्, किं तु तद्वास्तवपक्षप्रवाचकमेवेति सिद्धान्तः। अत एव "न सर्वेषामाशीर्वचनप्रदानाधिकारः, न तद्ग्रहणाधिकारश्च" इति वचनम् । योग्यतया यो ह्येवं नोपगच्छति सर्वं सार्वकालिकमिति, न तदर्थमाशीर्वचनं देयम् । ग्राह्यमपि नैवेति तदर्थः । यस्त्वेवं किञ्चिद्रूपेण सर्वं सर्वाधिगतमिति बुध्यते, तदर्थमेव ग्राह्यं देयं चेति तदर्थफलं भवति । तस्मात्संसारे भ्रमज्ञानेन पूर्णत्वमपूर्णत्वं परिकल्प्यते । यत्र कामनादयो न विद्यन्ते, तत्र पूर्णत्वम्, तेषां विद्यमानत्वेऽपूर्णत्वमिति सिद्धान्तः ।

यद्यपि कामनादेः सर्वदैव स्थितिः, स्वतस्सिद्धत्वादावश्यकत्वादभावस्याविद्यमानत्वाच्च, तथापि एतदेवमस्तीति बोध एव परिपूर्णः । अन्यथा त्वनन्तबीजत्वेन पूर्णयोर्द्वयोरभाव एव स्यात् । यद्यपि सत्स्वेव कामनादिषु सुखदुःखयोरुपस्थितिः, नान्यथा; तथापि तयोरावश्यकत्वाद्ग्राह्यत्वाच्चास्तित्वमवगम्यते । आवश्यकनियमेऽपि तद्बोधमात्रस्य भ्रमत्वमभ्रमत्वं च तादृशं स्वभावसिद्धं बोध्यम् । सर्वमेतत्त्रितयरूपं चास्ति नास्ति वा न नास्तीति । एवं त्रयाणामेकत्वेन बोधः प्रमारूपः, पृथग्बोधस्तु भ्रमरूप इति सिद्धं भवति । कामनादीनां याथातथ्यं च तादृशस्वभावसिद्धमेव । केषांचित्पदार्थत्वेन भेदो भवति । बोधमात्रे एव तत्संभवः। बोधरूपस्त्वात्मा । तस्यैव प्रकारतया संसरणम् । तस्मात्तत्र भेदस्यापि संभवः । अत एव

"स बोधस्वरूपो विरूपोऽयमात्मा
ह्यभेदप्रयुक्तो न भेद्योऽयमात्मा ।
स सर्वत्र संसारसिद्धोऽयमात्मा
विभिन्नः परः सर्वरूपोऽयमात्मा ॥"

इत्यादिप्रवचनम् ।

"अबोधसंबोधविबोधरूपो ज्ञानस्वरूपो निजबोधरूपः ।
स्वयं परं ब्रह्म सुखात्मरूपं देशात्मकं रूपमनन्तसिद्धम् ॥"

इत्याद्युक्त्या वा । तस्माद्बोधस्वरूपोऽयमात्मा, तत्रैव भ्रमाभ्रमरूपः संसारो भासते ।

यद्यपि "अभ्रममजं निरीहं निर्विकल्पकं निरवयवात्मकम्" इति श्रुतिः, तथापि तत्संसारसहितमात्मस्वरूपं गृह्यते । संसाराद्भिन्नस्यात्मनोऽनुपस्थितेः पृथक्प्रयोजनाभावाच्च तस्य निरीहादिविशेषणं सिद्धं भवति । विशेष्यं च स्वयमेव विशेषणमिति तद्भावः । विशेष्यस्यैव सर्वं कार्यम्, विना च स्थितिं कर्तुः कार्यस्थितेरसंभवात् । कार्यान्तरे हि च तत्स्थितिर्भवति । तेनैवैतद्ग्रहणमिति स्पष्टमुक्तेर्भवति भेदसाधनम् । एतादृशभासनस्यैवापूर्णत्वमवगम्यते । अत्र च भेद एवास्ति, नान्यच्च चिन्तनीयमिति बुद्धेर्निश्चयस्य च पूर्णत्वमुक्तं भवति । वस्तुतस्तु तयोः सत्तायाश्चैकत्वान्न पूर्णापूर्णव्यवहारद्वयम् । अतः कामनादीनामपि भवनमात्रविज्ञानमुचितं भवति । भेदोऽपि चैतेषां तादृशावश्यक नियमेन गृह्यते । सर्वसंमेळनाद्भवनमात्रं विज्ञेयं भवति । कामनाकाङ्क्षेच्छानां च परस्परसंबन्धः । स च भूतभविष्यद्वर्तमाननियमेन क्रमानुसारिणा विज्ञेयः । एभ्य एव हि कामादयः प्रजायन्ते । अयमेव हि संसरणव्यवहारः । भवनावश्यकत्वे सत्येवात्मनः पृथगनुपस्थितिः । आत्मनः संसारस्य निषिद्धस्य च भिन्नत्वमभिन्नत्वमनभिन्नत्वं चोक्तं भवति ।

यद्यपि "न तस्य प्रतिमास्ति लोके यस्य हि महिमेह भवति" इत्युक्तम्, तथापि प्रतिमाप्रतिमयोर्न भेदः । यस्यैव प्रतिमा न तस्य प्रतिमात्वं वक्तव्यम् । प्रतिमा च प्रतिबिम्ब। ताश्चित्रं यस्मिन्स्वयं तिष्ठतीति तदाशयः । यद्यपि स्थानस्थापव स्थातॄणामभेदः, तथापि परस्परसंबन्धदृष्ट्या हि भेद इति विज्ञेयम् । यस्य हि महत्त्वं तादृशं यशश्च विशेषणम्, तत्र स्वां सविशेषणस्वरूपम् । प्रतिमा च न ततो भिन्नेति न विज्ञेयम् । तस्मात्सति भवनावश्यकत्वे ह्यात्मनोऽभिन्नत्वात्तत्रैव कामनादिकं ज्ञातव्यम् । कामनादीनां संज्ञा तु संसारदृष्ट्या पृथगुपयुज्यते । अत्र चारोप एव प्रतिपाद्यते । अन्यथा तु त्रितयस्यैक्यात्कामनादीनामप्यैक्यं भवति । यद्यपि पृथगुपस्थितानामेकीकरणं भवतीति व्याख्यानाद्भावमात्रे पृथक्त्वं न विचिन्तनीयम्, सत्ताया एव प्राधान्यात् । सत्तापदार्थस्त्वेक एवेति सिद्धान्तिततया सर्वेषां सत्ताधीनत्वात्सर्वस्मिन्परिस्फुटे सर्वमिति युक्तम् ।

कामना काङ्क्षेच्छाशा संङ्कल्पो विकल्पोऽध्यवसायश्च केवलं भेदबुद्ध्या ज्ञेयो भवति । सर्वाश्रये वास्तवपक्षे नानात्वस्यासंभवात् सर्वं प्रतिमा भवति । कामनादिकं च तदधिष्ठितं भवति । ततोऽन्यच्चैकमेवेति बोध्यम् । कामनादीनां चैतेषां संज्ञा पृथग्रूपेण सत्तासहितेन बोद्धव्या भवति । यदिदं भवनं तदेव का-

मनाभवनसत्तायां पूर्णं भवति । अपूर्णतैतद्भवनमात्रे, अपूर्णैव कामनेति प्रवचनम्। कामनास्तित्वं च, सत्ता निष्काम्येति व्याख्यानादवगम्यते । निसंकल्पकमिदं भवति । न तत्र किञ्चिदपि कारणाद्यारोपणं भवति । न दृश्यते च कामनायामसंभवव्याप्तिः । भवत्येवेदमिति तद्बोधः । यद्यपि कामयते इति व्युत्पत्या कामना भवतीत्यर्थमङ्गीकृत्य कामनाकरणमात्रस्य कर्त्रपेक्षा भवति, तथापि न तत्फलज्ञानमिति तदाशयः । कर्तृशक्त्या कारणमेव तत्कार्यं भवति । न किञ्चित्तत्र फलाद्यारोपणम् । कामनामात्रे फलादीनां संभावना न दृश्यते । कारणसामर्थ्यस्य तत्र विद्यमानत्वात्करोतीति तदर्थः ।

यद्यप्येकोऽहं बहु स्यामिति कामयते,तथापि तत्र कामनाशब्दस्य जायमानत्वमेव प्रयोजनं भवतीति न बहुभवनेन फलाधिष्ठानसंकल्पः; बहुभवनात्किं सिध्यतीत्यस्यापरिभाव्यत्वात्तत्र फलाद्यपेक्षा न वक्तुमुचिता । अहं ब्रह्मास्मीति ज्ञानेऽपि फलारोपो न दृश्यते। ब्रह्म भूत्वा किं करिष्यसि, किञ्च करोषि, किं वा कृतञ्चेत्यादेरदर्शनम्। "ब्रह्मभवनमात्रं सर्वस्य फलम्"इति चोक्तम्। ब्रह्मभूत्वा यत्साध्यं तत्र किञ्चिदिति तदर्थः । अत एव "ब्रह्मैव साध्यं ब्रह्मविद्ब्रह्म एव च" इत्युक्तम् । तत्रैवशब्देनावधारणार्थकेन इदमेव प्रयोजनम्, नातो भिन्नं किञ्चिदिति च तद्व्याख्यान

फलम्। अत एव "त्वं ब्रह्म अहं ब्रह्म अयं ब्रह्मान्यदपि ब्रह्म सर्वं खल्विदम्" इत्यादि प्रवचनम् । एवमेव "नानात्वमनानात्वं कामये ब्रह्म केवलम्" इत्यपि च। अत्रापि नानात्वानानात्वोक्त्या इत्थंभूतं नानात्वावश्यकविशिष्टमनानात्वं ब्रह्मेति बोध्यम् ।

न केवलं नानात्वं नानानात्वम् । अत एव कामनाकरणेऽदोषत्वमप्युक्तम् । कार्यकारणसामर्थ्ये सति कामना। न तां विना कार्यप्रसिद्धिरिति निश्चयः। एवं भवत्विति बुद्धिः कामना। एवमित्युक्त्यापि सङ्कल्पारोप एव। स चानुपयुक्तः। निश्चयार्थमिदं भवनमिति तदाशयः। अत्रावश्यकस्यैव हि संसारदृष्ट्या कामना वक्तव्या। भवनं भवत्येवेति कामनाशयः । अत एव स्यादेतत्, स्यामिदम्, स्याश्चेति त्रितयोक्तिः। अस्धातुप्रयोगमात्रस्याभेदात् कामनाया बहुत्वमेकत्वञ्च सिद्ध्यति। यदिदमस् इति शुद्धस्वरूपं तत्सत्ता। स्यादिति भवनमात्रमुच्यते । सत्ताभवनयोरभेदभेदरूपं निषिद्धम्। विना ह्यकारं सत्ताया एव प्राधान्यात् तस्य निषेधविशिष्टत्वाच्च असत्येतयोरन्तरे सकारकृत भवनम्। तदेव यादित्यनेन युज्यते। तेन स्यात्, स्याः, स्यामिति त्रितयत्वम् ।

अकारेणात्माभिहितः, सकारेण विश्वम्, तयोर्भिन्नः संबन्धरूपो धात्वर्थः, स एव सत्तेति निषिद्धं विज्ञेयम्। नित्रित-

यस्यैव बहुत्वमुच्यते । स्यात्, स्याः, स्यामिति च कामना भवति । वस्तुतस्तत्स्वरूपं स्वतस्सिद्धमावश्यकञ्च भवति । पृथग्दृष्ट्या च कामनेति प्रवचनम् । अत एव बहु स्यामिति कामये इत्येवमोमित्येतत्प्रकारभेदश्चोक्तः । एवमेव स्यामित्यकारसंबन्धः, स्याश्चेत्युकारस्य, स्यादिति मकारस्येति बोध्यम् । अयमेव हि त्रितयक्रमः । अयं स्यादित्येतद्युष्मदस्मदोर्भिन्नं संबन्धमात्रं । वस्तुतस्तु स्यामित्येव सिद्धम् । तस्मान्महावाक्यप्रवचनस्याभेदसूचनतया, त्रितयस्यैकत्वपरिधारणतया च एकोऽहमिति यत्त्रितयभावविशिष्टमावश्यकम्; तदेव बहु चेत्युक्तं भवति । अत एव स्यामित्येतत्प्रयोगेण बहुत्वमुक्तं भवति । अन्यथा तु स्यामः इति पृथक्त्वनिर्देशिका क्रिया प्रयोक्ष्यमाणा भवेत् । बहुत्वे हि शब्दशास्त्रसिद्धान्तेन बहुवचनमपि वक्तुं युक्तम् । स्यात्, स्याः इत्येतस्य भेदपरिहाराय स्यामित्येकवचनान्तं बहुत्वेऽप्युक्तम् । स्यामित्येतद्रूपं भवनमात्रञ्चास्तिकामनया । अत एवास्याः कामनाया अनाद्यनन्तत्वमुक्तं भवति । स्यामित्येतत्प्रवचनं सर्वस्मिन्नपि संसारे बहुत्वविशिष्टं दृश्यते । प्रत्यक्षानुमाननिर्णयैश्च सर्वत्र बाहुल्यम् । एवमेव "अणोरणीयान्महतोमहीयान्" इत्याद्युक्तम् । किञ्चानन्तं त्रिभवनं जगदिति व्याख्यानं स्पष्टमुक्तम् ।

कामनायामेवास्यां सङ्कल्पो विकल्पः आकाङ्क्षा इच्छाशा

च भवति । एवंरूपा च या कामना सा त्वकाररूपा, आत्म वाचकत्वात् । ततो जायमाना च यावश्यकेन विधिना नानाविधा सा काङ्क्षा । अत्र फलचेष्टेव फलार्था काङ्क्षा । केन प्रकारेणैतल्लाभो भवतीत्याकाङ्क्षायाः कार्यं भवति । एतल्लाभभवनरूपा च या शक्तिः स्वप्रयत्नात्मिका, सा काङ्क्षेति विज्ञेयम् । इच्छा च तत्प्रकारप्रदर्शिका । अनेन यदिदं भवति तच्च तद्रूपम् । आशा च इदानीमेव प्राप्यते, प्रातश्च तेनातः परमपि प्राप्यते, इति भाव एव । तस्मादाशा च भविष्यद्रूपा । तज्ज्ञानवाचकः सङ्कल्पः, एवं प्राप्यते इति बुद्ध्या करोमीत्येतद्रूपः। आशासङ्कल्प रूपयोरपि भवति कार्यकारणभावः । तेन स्यामिति कामना । अस्मीति काङ्क्षा । आसमितीच्छा भूतेन संबन्धः। भविष्यामीत्यस्यावश्यकीयमाशा । तन्निश्चय एव संकल्पः, आशायामसंभवस्यापि विद्यमानत्वात् संकल्पस्यैव निषेधको विकल्प इति व्याख्यनाद्वा ।

आसम्, अस्मि, भविष्यामि, स्याम्, एते च कामनेच्छा काङ्क्षाशारूपा भवन्ति । यदि चतुष्टयं स्यामित्यर्थेनैव लभ्यते, तदा स्यामित्यस्यानन्तत्वात्तात्कालिकया स्यामित्युक्त्या ततः पूर्वमपि स्यामित्यभूत्, परमपि भविष्यति, अद्याप्यस्तीति, त्रितयस्यैकत्वं परस्परत्वमपरस्परत्वं संबन्धोऽसंबन्धोऽनुसंबन्धश्चेत्याद्य-

क्तम् । कामना चाकाररूपः, स्यामिति तद्बोधः । काङ्क्षा तूकाररूपा, अस्मीति तद्बोधः। इच्छा तु मकाररूपो निषिद्धः, आसमिति तद्बोधः। आशा च त्रितयत्वरूपा, भविष्यामीति तद्बोधः।

सर्वमोमित्येकशब्देन च प्रकृतिसन्धिस्वरूपेण बुध्यते, स्यामित्येतस्यैवास्यासं भविष्यामीति तद्बोधः। एवमस्मीत्यस्यापि चैतत्त्रयम्। एकैकमपि प्रत्येकं वाचकं भवति। स्यामित्यस्यार्थस्तु भवितव्यमिदमिति गृह्यते । यच्च भवितव्यं तदेव भवति; अभूत् , भविष्यतीति बोध्यम्। भवितव्यमात्रस्यैवावश्यकत्वम्। तदेव विज्ञेयं भवति । भवितव्यमात्रस्य च कामनात्वेन विवक्षा। भवतीत्यस्य च काङ्क्षात्वेन प्रयोगः । अभूदितीच्छाप्रवचनम्। आशा च भवियतीति चतुर्णां संबन्धः। अत एव स्याम्, अस्ति, आसम्, भविष्यामि, इत्येतच्च परस्परं युक्तं भवति। एवमेव भाव्यम्, भवति, भूतम्, भविष्यति, इत्येतच्च निश्चितमिति प्रवचनम्। अनेनैव च कारणेन अहं, त्वम्, अयम्, प्रपञ्चश्चेति बोध्यं भवति।

यद्यपि नास्त्याशायां निश्चयः, सन्दिग्धत्वेन तद्विवक्षा, तदेवाज्ञानकार्यं भवति; तथापि निषिद्धश्च सर्वत्र स्थितेन सन्दिग्धरूपेण दृश्यते, "अभावान्तर्गतो भावः भावाभावौ भविष्यतः" इति प्रवचनात्। आत्मस्वरूपं हि भावरूपम्। तच्च वर्तमानमेवा-

सन्दिग्धम्। तत्रापि तदभावस्यान्तर्गतत्वादेवं भवति वा नवेति चिन्ता भवति । यच्च दृष्टमेवमभूच्च, तत्रापि च सन्देहः । अभून्नाभूद्वेति ज्ञानन्तु सन्दिग्धम्, प्रत्यक्षोपलब्धेः । भविष्यत्यंशे चाशाशब्देऽप्येवं भ्रमः । आशाकरणमेवानिश्चयबोधकं भवति । निश्चये त्ववश्यमेवेदं भविष्यतीति बुद्धिः।तदनुपलब्धिकारणं निषिद्धं संबन्धरूपमिति बोध्यम् । भवितव्यमेव केवलं निश्चितम्, भवनञ्चावश्यकम्, न तत्रेदमयमन्यादिति ज्ञेयम् । यच्च क्वचित्कदाचिदेकं द्वयं त्रयं बहवः, न वा चेत्यादिभवनं सिद्धम्, तदिदमेव भवितव्यम् । भवितुं योग्यं भवितव्यमित्यर्थादपि योग्यताप्रवचनेनायोग्यताज्ञानाद्भवितव्येऽप्यनिश्चय एव, अयोग्यस्यापि भवनरूपत्वे विधानात् ।

अस्ति नास्त्यनास्तीति त्रितयस्यापि भवनं सिद्धम्, न भवतीत्यपि भवनं भवतीत्युदाहरणात् । सर्वत्र च सन्दिग्धं निश्चितमिति विज्ञेयत् । अहं स्यामित्युक्त्या कालस्य ग्रहणेनाद्य कालस्यैव ग्रहणं भवति । पूर्वञ्च नासमित्यनुमेयम्। अस्मीत्युक्त्यापि नासं न भविष्यामीत्यनयोर्ग्रहणम् । आसं भविष्याम्येतयोरपि बोधस्तेनैवेति निश्चयः । असधातोस्सामान्यतश्चास्तित्वमवगम्यते, सत्तार्थकत्वात्तस्य । तेनैतच्चतुर्णामेकत्वं विज्ञेयम् । सत्तायाश्चैकत्वात्स्यामस्म्यासं भविष्यामीत्येतेषामभेद एव ।

अकारोकारमकाराणामभेदादोमित्येतत्सन्धियोगाच्चाभेद-स्सर्वत्र विज्ञेयो भवति । अत एव "योऽयमस्तन्मा यन्मा तदेव उः यन्मा तदेव मः" इत्युक्तम् । एवमेव "यामिति सः, स इति याम्, असित्येतन्मिसमुच्चितम्, यन्मि तदस्, सत्तैका, आसित्येतदस्संयुतम्, अमित्येतदास्, सत्तैका, भविष्यन्मि प्रयुक्तम्, मीत्येतद्भूप्रयोजितम्, भविष्याम्यासं समस्म्येवं स्याम-स्म्यासं विधिस्थितम्, भविष्याम्यस्मि स्यां बद्धं भवनम्, सत्तैका वियुज्यते"इत्यादि वचनम्। तस्मात् "कामनेच्छा काङ्क्षाशा,आशा काङ्क्षा च कामना, काङ्क्षाशा कामनाचेच्छा, इच्छा कामना कांक्षाशा"इत्यपि चोक्तम्। वस्तुतस्त्वेकत्वात्क्रमो व्यतिक्रमश्चेति तदाशयः। क्रमपद्धत्या हि कामनेच्छा काङ्क्षाशा । अतः कामनायास्सर्व-मूलत्वं सूचितम् । कामना तु कालानुरूपा चानाद्यनन्ता भवति । इच्छाकाङ्क्षाशा तु भूतो वर्त्तमानः भविष्यन्निति त्रयम् । अत एव

"यच्च भूतं हि तद्भाव्यं भाव्यमेव भवत्तथा ।
भविष्यदपि तद्भाव्यं त्रितयं भाव्यमेवच ॥"

इत्यादि वचनम् । "यच्च भूतं भाव्यं भवति भविष्यति तत्त्वम्" इत्युक्त्या वा । वस्तुतस्त्वेकत्वाच्चतुर्णामनाद्यन्तत्वं विज्ञेयम् । अत एवात्मविषये, लघुत्वं महत्वं तयोर्भिन्नत्वं, संख्यासंख्या सांख्यं चोपस्थीयते ।

यद्यपि "सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्" इति श्रुतिः, तथापि सहस्रशब्दस्य न संख्या शब्दार्थः, सहस्रादपि संख्याया विद्यमानत्वात् । आत्मनः सर्वस्वरूपत्वात्सहस्रस्यानन्तत्वं विज्ञेयम् । एवञ्च अनन्तशीर्षा पुरुषः अनन्ताक्षः अनन्तपादिति तच्छ्रुतेरर्थः । यद्यपि नियतसंख्यायाः सहस्रत्वमुच्यते, तथापि आत्मनो योगेन तस्याद्यन्तरहितत्वमनाद्यनन्तवर्जितत्वं चेहोच्यते इत्यर्थो ग्राह्यः । दशाङ्गुलत्वमप्यस्य चोच्यते । तेनाप्रमेयं तत्स्वरूपमिति बुध्यते । दशशब्देन संख्यामूलमात्रोपस्थित्या नान्यप्रदेशादिति तदर्थः । अत एव सहस्राक्षपादित्यादि बीजमवधार्य तस्य नामरूपरहितत्वं व्याख्यातम् । संख्याया विद्यमानत्वे एव नामरूपे परिकल्प्येते । ततो भिन्नत्वात्तदप्रयोगः । संज्ञारूपरहितेऽपि त्रितयत्वम् । अकारेणात्मरूपा संज्ञा, उकारेण संसाररूपा, मकारेण निषिद्धसंज्ञा च । अस्यैवाक्षिशिरःपादाद्यङ्गं व्यवस्थितम् । अत एव

"अनाद्यन्तमशून्यञ्च शून्यं सर्वत्र संस्थितम् ।
असर्वं सर्वरूपञ्च सहस्रं लक्षसंयुतम् ॥
अनन्तञ्च ततो भिन्नं सहस्राक्षसहस्रपात् ।
व्यक्षपादशिरस्तच्च सर्वभिन्नमनुत्तमम् ॥
सन्धिस्थं तदसंन्धिस्थं सन्धिजं सन्धिकारणम् ॥

स्वतस्सिद्धं स्वभावस्थं स्वात्मनः प्रेरकं स्वयम् ॥
शाश्वतं शुद्धरूपन्तत्सच्चिद्वृत्ति स्वतः परम् ।
स्वतः पूर्णं स्वतो मेध्यं स्वयमेव स्वयंभुच ॥
स्वयं काम्यं कामयिता कामना काम एव च ।
सुखं स्वयमनुत्पन्नमुत्पन्नञ्च स्वकर्तृकम् ॥
कारणं कार्यरूपञ्च स्वयमेव दशाङ्गुलम् ।
स्वयं भूतं स्वयं भाव्यं स्वयमेव भवत्स्वयम् ॥
भविष्यदभविष्यञ्च स्वयमेव ह्यभेदजम् ।
स्वयं कर्तृ स्वयं भोक्तृ स्वयं वस्तु प्रकाशकम् ॥
स्वयं ददाति गृण्हाति त्यक्तं त्यजति सर्वथा ।
त्यज्ये ग्राह्ये स्वयं कर्तृ स्वयमेव समुद्धृतम् ॥
स्वयं पिता स्वयं पुत्रः स्त्री स्वयं पुरुषस्तथा ।
स्वयञ्च स्वात्माधिष्ठानं विश्लिष्टं संयुतं स्वयम् ॥
अपायावधिभूतञ्च निरपायमपेक्षितम् ।
निरपेक्षं स्वयं विद्धि ब्रह्मतत्त्वं सुनिश्चितम् ॥"

इत्यादि वचनम् । तस्मात्कामनानन्ता भवति । इच्छा काङ्क्षाशा च तत्र तादृशी प्रशस्ता बोध्या । कामनेच्छा काङ्क्षा चैकसत्तायोगात्पृथक्त्वाच्चात्मनस्संसारस्य च समवायरूपा भवति । अनयैव हि संसारे भेदाभासः । अस्या एव च सुखदुःखप्रतीतिः ।

काङ्क्षापूर्तौ सुखम्, तदपूर्तौ दुःखमिति सुखदुःखार्थः। "आत्मा तु च सुखी प्रोक्तः सच्चिद्वै सार्वकालिकः" इत्युक्तम्। तेन दुःखमात्रे तदारोपः, दुःखञ्च संसारसंज्ञकमित्युच्यते । संसारे सुखदुःखे च समाने इति व्याख्यानाद्वा । तस्मात्सुखरूपश्चात्मा, तमकारेण विद्धि, दुःखरूपः संसारः, तमुकारेण विद्धि, तयोः परमानन्दरूपं मकारेण विद्धि इति फलितार्थः ।

यदहमिति तत्सुखरूपम् । स्याम्, अस्मि, भविष्यामीति, दुःखरूपम्; यथा अहमेवं करोमि, अहमेवमस्मीति। अत्र चास्, कारणरूपं सुखरूपम्। अहमेवं करिष्यामि, भविष्यामि च सन्दिग्धे; तन्मात्रं दुःखरूपम्। यदहमस्मीत्येतद्बोधस्त्वसन्दिग्धः, तदन्तर्गतत्वात् । यदसन्दिग्धमेकं तदेव सुखरूपम्। यत् सन्दिग्धं पृथग्भूतं तदेव दुःखरूपम्। यद्यपि संदिग्धं न किंचित् सर्वान्तर्गतत्वात्, तथापि तत् पृथग्भानमात्रं दुःखरूपम्। पृथक्त्वमेकत्वं चात्मनः संसारस्य च निषिद्धरूपस्य चोच्यते, त्रयाणां पृथक्त्वमपृथक्त्वञ्चेति निरूपणात्, पृथगपृथग्भिन्नमभिन्नं चेति विशेषणाच्च । पृथक्करणमात्रस्य दुःखरूपत्वमिहोच्यते। वस्तुतस्तु त्रयाणामेकीकरणं स्थितं सुखमिति बोध्यम् ।

यद्यपि वस्तुतः कामनैव सर्वमूलं, न तस्याः पूर्त्यपूर्त्योस्संभवः, तत्र हि केवलसुखमेव, तथापि काङ्क्षाया विरुद्धरूपावश्यकत्वेन

फलाश्रयत्वं तत्रैव पूर्त्यपूर्ती इति बोध्यम्। यस्य वा कार्यस्य करणे प्रवृत्तिः, तस्य भवनं पूर्तिः। तत्र योऽनिश्चयः निषिद्धरूपः स एव दुःखरूप इति व्याख्यानं फलम्। यद्यप्यसंभवोऽनिश्चयो न कश्चिदित्यनावश्यकव्याख्यानेन स्पष्टमुक्तम्, तथापि तस्यावश्यकत्वोक्त्या तद्युक्तमेव। स्वप्रयोजनारोपेण भाव्यस्य विनाशपरिचिन्तनजं दुःखम्। भवनं तु भाव्यस्यावश्यकमेव। तत्र पृथक्त्वेन मदीयमिदमित्यादिप्रवचनं दुःखमूलं भवति। यो ह्येवं वेत्ति, भाव्यमस्ति, सर्वं भवति, सर्वमिदं ममेति, अहं सर्वस्येति, तदर्थश्च भवत्यानन्दस्त्रितयात्मकः। अत एव सुखदुःखानन्दानामेकत्वमुक्तं भवति। यच्च सुखं तदेव दुःखम्। दुःखमपि च सुखम्। आनन्दस्सर्वमूलम्। कामना च सर्वकारणम्। अत एव "काङ्क्षां परित्यज्य सुखं दुःखञ्च लभस्व" इत्युपदेशः। तेन भवनमात्रं सुखम्, एवं भवामीति दुःखमिति च ज्ञेयम्। अत एव

"भवति न भविष्यामि न भूतो हि यदा कदा।
न तदा चैतदा किञ्चिन्नासन्नास्मीह किञ्चन॥
न युक्तञ्च ततो भिन्नन्नायुक्तं सुखमुत्तरम्।
न सुखी न च दुःखार्थी न दुःखी दुःखदो न च॥
सुखप्रदो न सौख्यञ्च नेह किञ्चित्सुखास्पदम्।
सर्वथा सर्वदा नैव सर्वं सर्वसमाश्रितम्॥"

इत्यादि वचनम्। तस्मात् स्यामित्येवेति सिद्धम्। भवनमात्रे च यो व्यापारः स एव दुःखरूपो वोध्यः। वस्तुतस्त्वानन्दरूपमेव त्रितयं भवति, न सुखाद्बहिरानन्दो न दुःखाच्च बहिरिति व्याख्यानात्। सर्वमानन्दमयमित्युक्त्या, सर्वान्तर्गतं दुःखमिति प्रवचनतया च सुखमानन्दः, दुःखमानन्दः, तयोः पर इति सिद्धम्। अत एव

"अकारञ्च सुखं विद्धि चोकारं दुःखरूपिणम्।
मकारन्तु तयोर्भिन्नमानन्दास्त्रितयात्मकः॥
ओमित्येतत्स्वरूपं हि परमानन्दवाचकम्।
इदमेव महामन्त्रं तज्जपन्ब्रह्मविद्भवेत्॥
आनन्दास्त्रितयश्चैव शब्दः प्रणवसंज्ञकः।
सर्वारम्भावसानस्थस्सर्वमूलान्तवाचकः॥"

इति वचनम्। एवमेव

"मन्त्रादौ मन्त्रमध्ये च मन्त्रान्ते प्रणवः स्मृतः।
स्वयमेतन्महामन्त्रं ब्रह्मभूयाय कल्पते॥"

इति च। त्रितयात्मकत्वाद्यत्तच्छब्देन ब्रह्मणो वचनम्। त्रयाणां पृथक्त्वादिदं ब्रह्मेत्युक्त्या चेदं नेत्यनुमानसंभवनिवृत्तये यत्तदित्येष प्रयोगः।

अत एव तत्सवितुर्वरेण्यमित्युच्यते। यः सर्वं प्रचोदयात्, प्रचोदितं प्रचोदयति वा, तस्यापि सर्वान्तर्गतत्वात्तद्-

ह्येति व्याख्यानम् । तस्य सवितुः यो ह्येवं प्रचोदयात् । तं वयं धीमहीति तद्व्याख्यानफलम् । यदपि धीमहीति क्रियया वयमित्युक्त्या च पृथक्त्वसूचनम् , तदपि बहुत्वस्य चैकत्वेन व्याख्यानात् ध्यातृध्येययोरभेदाच्च अयुक्तम् । यः प्रचोदयादित्युक्त्या यच्छब्देन सर्वस्य ग्रहणम् । सर्वं प्रचोदयात् , प्रचोदितं सर्वेण प्रचोदयत्यपि । सर्वं सर्वेण चेति तद्भावः । सर्वं सर्वस्मिन्धीमहीत्येकैव च वृत्तिः, एकस्या एव सत्तायाः प्रधानत्वात् , वयं धीमहीति बहुवचनान्तात् न बहुभिन्नं किञ्चिदन्यादिति सुस्पष्टं व्याख्यानाच्च । वयमिति सर्ववाचकः । बहुत्वमात्रे चैकत्वप्रदर्शनाय वयमित्युक्तिः । एवमेव तादृशं क्रियापदमित्यपि बोध्यम् । स्यामित्यस्याभेदरूपत्वात् , स्यावः, स्यामः, इत्यस्याप्यस्मद्रूपोक्तोत्तमपुरुषत्वात्सर्वस्याप्यभेदसूचनाच्च , धीमहीत्युक्तम् । ध्यानकरणं हि केवलं बोधमात्रम् । अत एव प्रचोदनकर्तृविशेषणं भर्गो देवस्येति । ऐश्वर्यं सर्वं संसारमात्रम् , तत्र यो दीव्यति , विजिगीषति , क्रीडति , स्तौति . स्वपिति, मोदते , व्यवहरति , गच्छति , प्राप्नोति , जानाति, मुञ्चति , शोभते, स देव एवेति तदर्थः । एतस्य ण्यन्तेनापियोगः—देवयतीत्यादि , कर्तृकरणकार्याणामभेदात्सर्वस्य सर्वरूपाधिकाराद्वा । भर्गो देव इति संज्ञा ह्यात्मसंसारविशिष्टस्यैवेति बोध्यम् । भर्गो देवस्यात्मनः

संसारस्य चेति तद्भावः, आधेयग्रहणेनाधारग्रहणात्तयोस्समान-स्थितेः । यद्यपि भर्गो दीव्यतीत्युक्त्यात्मन एव ग्रहणम्, तथापि तदभिन्नत्वेन तत्सहितस्यैव ग्रहणमिति फलितम् । वरे-ण्यमित्युक्त्यापि आत्मसंसारनिषिद्धानां ग्रहणम् । भर्गो देवस्येति विशेषणेनात्मनस्संसारस्य च पृथक्त्वमपि सूच्यते । तयोस्सं-बन्धस्यैकरूपत्वं युक्तं वरेण्यमिति बोध्यम् । वरेण्यमित्यस्य सर्वतो रहितमित्यर्थः । वरं श्रेष्ठं तदयमात्मा, इणिति स्यामिति युक्तं जगत् । यमित्यक्षतिः । तेन वरेण्यं ब्रह्मसंज्ञकम्, आत्मा, जगच्च प्रसिद्धम् । तयोस्संबन्धरूपाक्षतिरिति तदाशयः । अत एव "सत्यं ब्रह्मामृतं परं वरेण्यं ब्रह्म निर्गुणम्" इति प्रव-चनम् । एवमेव "सत्यं विद्धि, वरेण्यं विद्धि परं विद्धि परा-त्परम्" इत्यप्युक्तम् । अत एव सत्यार्थस्तु यत्स तदमृतं यत्ति तन्मृतं यद्यं तदक्षतिरिति स्पष्टमुक्तम् । सवितुरित्युक्त्यापि त्रितयं गृह्यते । यदिदं वरेण्यं तत्सत्यं तदेव त्रिकस्यैकत्वञ्च । सविता तस्य सवितुर्वरेण्यं भर्गः देवः धियः प्रचोदयात्, सर्वं प्रचोदित प्रचोदयति, प्रचोदयिष्यति, प्रचोदति, प्रचोदिष्यति धीमहीति तद्भावः । सवितारं सर्वानुगतमेकस्वरूपम्, वरेण्यं त्रितयात्मकं भर्गः । देवं संसारात्मानं चेति क्रमः । तेन सर्वावश्यकत्व सूचनम्, विशेषणत्रितयस्य एकेनैव शब्देन चोमित्यनेन प्रव

चनम्, तत्रैव संसारात्मनिषिद्धरूपमिति व्याख्यानात्तदेकत्वस्य स्पष्टतया च सुखदुःखानन्दानामेकत्वमेवेति निश्चितं भवति ।

कामनेच्छाकाङ्क्षाशानामप्यभेदो दृश्यते । यद्यपीच्छाकाङ्क्षाशानां क्रमेण भेदः, तथापि तदारम्भावसानान्तयोगेन क्रममात्रं बुध्यते । वस्तुतोऽभेदात्कामनारूपं सर्वमेकमेवेति वेदितव्यम् । आशाकाङ्क्षेच्छा निवर्त्य सर्वं कामनेत्यवधार्यताम् । अत एव

"सर्वं सर्वत्र सर्वेण सर्वथा सर्वकामना ।
तत्सार्वकालिकं प्रोक्तं तद्ब्रह्मेति विदुर्बुधाः ॥"

इत्यादि प्रवचनम् । तस्मात्सुखसमीकरणमपि युक्तम् । तत्सुखं तदेव दुःखं सुखमिति समो बोधः । तस्मात्

"सर्वमेवं समं कृत्वा विचरन्ति सुखाश्रयाः ।
न बाधा विद्यते तेषां महद्रूपावधारणात् ॥
न सुखं न विरोधश्च न च दुःखं न चान्वयः ।
आनन्दः सर्वसंपन्नश्चोमेतज्जपतां परः ॥
ओमिति स्मरणेनैव ब्रह्मज्ञानं परावरम् ।
तदेव मोक्षसिद्धञ्च तदेवामृतमश्नुते ॥
ओमेतच्चजपन्नित्यं ब्रह्मविद्ब्रह्मसंज्ञकम् ।
सर्वं तद्वेद्यमेव स्यात्स महात्मा महान्परः ॥"

इत्यादि वचनम् । सर्वथानन्दमयं सत्यस्वरूपम् वरेण्यं प्रणव-संज्ञकमोमित्येतद्ब्रह्म विद्धीत्युपदेशः । कामनेच्छा काङ्क्षाशा सुखं दुःखमानन्दश्च सर्वम्, सर्वं ब्रह्मसंज्ञकमिति व्याख्यानादकारो-कारमकारान्तर्गतमिति निश्चितं भवति ।

यद्यपि कामनेच्छाकाङ्क्षाशानामभेदेऽपि तदन्तरे भेदवा-चका अपि दृश्यन्ते, तथापि प्राधान्यात्सत्तायाश्चैकत्वेन तदैक्यं विज्ञेयम् । यथा—आशायान्निराशा दुराशेति भेदद्वयम् । तयोरपि तदन्तर्गतत्वं वेदितव्यम् । आशाया निषेधभवनन्तु भाव्यमिति बुद्धिरेव । भवितव्यं भवत्येव, न पूर्वापरे तत्वेत्यभेद-विज्ञानेन हि निराकाङ्क्षा निराशेति च बुध्यते । दुराशाशब्देन दुर्गमाशाया ग्रहणम् । काठिनं हि दुर्गमं विज्ञायते । तेनाशायाः काठिन्यमनिश्चय एव । "सुलभं हि सर्वं सर्वथा" इत्यादिवच-नात्सान्दिग्धस्य भ्रमबुद्धावेवात्यन्तं दुर्गमत्वम् । भ्रममूलत्वाद्दुःखस्य "नैराश्यं परमं सुखम्" इत्युच्यते । "इच्छाकाङ्क्षाशास्सर्वा अपि परित्यज्य परमानन्दमधिगच्छति" इति च प्रवचनं भवति। अत एव

"निराशस्समाशो भवेद्वृत्तिरेषा
प्रसिद्धा प्रकाशो गुणानां दुराशा ।
सदा निश्चितानिश्चितं ब्रह्मरूपं
समावश्यकं सत्यसंसाररूपम् ॥

न सिद्धं प्रसिद्धं सदैवास्ति साध्यं
महासाधनं दुर्गमञ्चातिदुर्गम् ।
न दुर्गं वितर्क्यं सदा सुप्रलभ्यं
सदा निर्गमं निर्विकल्पं प्रयुक्तम् ॥"

इत्यादि प्रवचनम् । तस्माद्दुराशा निराशेत्यपि यत्तत्तादृशावश्यकं तदोमित्यन्तर्गतं भवति । एवमेव च

"आशामात्मेति तां विद्धि निराशां तन्निषेधिकाम् ।
दुराशां सर्वसंसारः त्रितयञ्च परन्त्विदम् ॥
आशा निराशा चैवं स्याद्दुराशा च ततः परा ।
सर्वा ह्यैक्येन वेद्याः स्युः संसारस्त्रितयात्मकः ॥
सन्दिग्धं निश्चितं चैव तयोस्संबन्धमूलिका ।
एकैव सत्ता प्राधान्याद्ब्रह्मैवैष भवः स्मृतः ॥
आशापाशेन बद्धस्य दुस्तरन्तन्निवर्तनम् ।
एष बोधो हि विज्ञानं तद्ब्रह्मेति विधीयते ॥

इत्यादि प्रवचनम् । अत्राप्याशाशब्देनात्मनः ग्रहणम् । पाशः संसारः, ग्राहकः बन्धः निषिद्धश्चेति तदर्थः, आत्मसंसारनिषेधानामेव हि सार्वत्रिकत्वात्, सत्ताप्राधान्याच्च । आशा दुराशा निराशेत्यपि तादृशी । संसरणं संसार इति तच्छब्दार्थेनैव सर्वत्र प्रतिशब्देन त्रितयशब्देन प्रयोगः । अत एव "नैराश्येन कर्म

कर्तव्यम्" इत्युपदिश्यते । "निष्काम्यं कर्म मुक्तिसाधनम्" इत्यपि च ।

यद्यप्याशायाः सङ्कल्पो विकल्पश्च दृश्यते, तथाप्यभेद एवेति तयोर्बोध्यम् । सङ्कल्प एव हि सर्वथा सार्वकालिकश्चेति विज्ञेयम् । विकल्पस्तु न तादृशः, स च निषिद्धरूपः, विगता कल्पना यस्मिन्निति तदर्थात् । कल्पनायाः विगतत्वञ्च तद्भव-नानाद्यन्तत्वेन विज्ञेयम् । तेन तन्निषिद्धरूपत्वमनिश्चितत्वमेवेति विज्ञेयम्, विकल्पो न कश्चनेति व्याख्यानात्, सम्यक्कल्पनं सङ्कल्प इति तदर्थाद्वा । समस्तसर्वार्थकत्वं कल्पनञ्च करणं सर्वकरणञ्चेति तदर्थः । सर्वतो भिन्नञ्च किञ्चिदिति स्पष्टतया सर्वथा सर्वदा चेति गृह्यते, "सङ्कल्पस्सर्वतःपरः" इति सूत्रात् ।

यद्यपि विशेषतः कल्पनं विकल्प इति तदर्थः, तथापि सामान्यद्वयेन विशेषकल्पनामिति व्याख्यानात्, सामान्यस्य सार्व-त्रिकत्वमुक्तम्, विशेषोऽपि सामान्यान्तर्गत इत्युक्त्या वा । विशिष्यते अनेनेति करणव्युत्पत्त्या विशेषतोऽन्यत्किञ्चिदिति नोपयुक्तम्; किन्तु सामान्यमेव सर्वमिति सिद्धम् । तस्मात्स-ङ्कल्पान्तर्गतो विकल्प इति बोध्यम् । सङ्कल्पस्यावश्यको विकल्प इति निश्चयः । सङ्कल्पोऽयमात्मा, विकल्पस्संसारः । तयोर्भिन्नश्चानु-कल्प इति वेदितव्यम् । सङ्कल्पविकल्पाभ्यामन्यत्संबन्धरूपम् ।

यद्यपि लोकोदाहरणेन इदङ्करोमि करिष्यामीति सङ्कल्पः भवति, तत्र कार्यकारणकालवशाद्वितीया बुद्धिरुदेति—अनेनेदमकर्तव्यं नेदं करिष्यामि तत्स्थानापन्नमिदमेव युक्तञ्चेत्यादि; तथापि तदिदं भ्रमरूपम्। करोमीत्यतस्सङ्कल्पसिद्धिः। करोमीत्यंशे सङ्कल्पश्च भवति। सर्वत्रानिश्चय इति व्याख्यानेन, भाव्यमेव सर्वं भवतीति प्रवचनेन च सङ्कल्पावरोधो भवति। भाव्यस्य तु भवनम्। कार्यस्यैव हि करणम्। भाव्यकार्ययोश्चाभेद एव। तर्हि करिष्यामीत्यारोपः भ्रममूलकः। करिष्यामीत्यारोपमात्रस्यापि सविकल्पकत्वं वक्तव्यम्, यच्च सामान्यतया भाव्यं, तत्र स्वाभिप्रायेणावरोधकरणं विशेषकल्पनामिति तदर्थात्। निषिद्धरूपस्थितत्वेन विकल्पोऽवधेयः। नाभावः कश्चित्पदार्थ इत्युक्त्या विकल्पश्च न कश्चित्। भाव्यान्तर्गतान्येव सङ्कल्पविकल्पानुकल्पनानि भवन्ति। तेन त्रयाणामभेद एवेति सिद्धान्तः।

अहमित्येतत्सङ्कल्पः, बह्विति विकल्पः, स्यामित्यनुकल्पः। त्रयाणामेतेषां सत्ता त्वेकैव। सं अहं कल्पः करणमिति व्याख्यानात्, संसारात्मनोः पृथगनुपस्थितेश्च, आत्मसंसारस्सङ्कल्पः। एवं विगतं निषिद्धं कल्पनं करणं संसारात्मरूपं। एवमन्विति श्रेष्ठोऽयमात्मा, कल्पनं करणमिति त्रितयार्थः। विकल्पस्य विशेषार्थोऽपि, विशेषोऽयमात्मा कल्पनं संसार इत्याद्यभेदसूचकः।

करणमात्रे करिष्यामीत्यस्य हानन्तु भाव्यं सर्वमिति ज्ञानेनैवेति बोध्यम्, हानस्यापि निषिद्धरूपत्वात् । तत्रावश्यकत्वाद्विकल्पोऽपि चोच्यते । यश्च ह्येकस्य सङ्कल्पः, तद्विकल्पोऽप्यन्यस्य सङ्कल्प इति दृष्टया सर्वस्यानन्यत्वादभेद एवेति सिद्धान्तः। अत एव

" यस्सङ्कल्पो विकल्पश्च तयोर्भेदो न कश्चन ।
अनुकल्पेन बद्धोऽय त्रितयं ब्रह्मयोजितम् ॥
अकारो ह्यस्ति सङ्कल्पो ह्यात्मरूपस्य वाचकः ।
उकारस्तु विकल्पोऽयं विशेषो गतकल्पनः ॥
निषिद्धं शून्यरूपञ्च मकारेणानुकल्पनम् ।
संबन्धमात्रं तद्विद्धि त्रितयं ब्रह्मणि स्थितम् ॥ "

इत्याद्युक्तम् । तस्मात्सङ्कल्पविकल्पानुकल्पनामभेदः । एतत्त्रितयं ब्रह्मेति वेदितव्यम् ।

सङ्कल्पस्य तु कामनया स्यामित्यनेन संबन्धः । विकल्पस्तु इच्छया बह्विति रूपेण संबध्यते । अनुकल्पस्तु काङ्क्षयास्मीतिरूपेण संबध्यते।वस्तुतस्त्वभेदाद्विकल्पः,काङ्क्षा,सङ्कल्पः,कामना, अनुकल्पश्चेच्छा भवति । अनुकल्पः कामना, सङ्कल्पः काङ्क्षा, विकल्पश्चेच्छा चेत्यपि । एवमाशायामपि सङ्कल्पविकल्पानुकल्पव्यवहारः। अहमित्येतद्भवनकामना संङ्कल्परूपा भवति । इदमित्थमेवेति भवनं विकल्पस्वरूपम् । अहमित्थं बहुरूपश्चैकरूपो

वा स्यामित्यनुकल्पस्वरूपम् । वस्तुतस्तु अहमित्थं स्यामित्येक-रूपमेव । अहमित्यस्यैव इत्थं भवनम् । अतः सङ्कल्पान्तरो विकल्पो भवति । अत एव

"स संयुक्तसंकल्परूपोऽयमात्मा
　स्वयं सत्यसङ्कल्परूपोऽयमात्मा ।
गुणस्सर्वगौणो विकल्पोऽयमात्मा
　स्वतस्सर्वसिद्धानुकूलोऽयमात्मा ॥
परस्थो लघुस्थो महान्सोऽयमात्मा
　स मुख्यस्सदा तत्स्वरूपोऽयमात्मा ।
स संसारभिन्नो न भिन्नोऽयमात्मा
　ह्यनाद्यन्तवेदान्तसिद्धोऽयमात्मा ॥
स शास्ता तथा शास्तृयुक्तोऽयमात्मा
　स शिष्यो गुरुस्संप्रतिष्ठोऽयमात्मा ।
स सम्यक्कृतः कल्पनस्थोऽयमात्मा
　विशेषेण सङ्कल्पयुक्तोऽयमात्मा ॥
विविक्तोऽगतः कामरूपोऽयमात्मा
　सदासच्चिदानन्दरूपोऽयमात्मा ।
भवेत्तत्वमोङ्कारशब्दोऽयमात्मा ॥"

इत्यादिप्रवचनम् । तस्मात्सङ्कल्पविकल्पानुकल्पा अपि अकारोका-

रमकारबोध्या भवन्तीति सिद्धम् । एवमेव मनस्सङ्कल्पविकल्पादिकं निरुध्य योगयुक्तो भव इत्युपदेशः ।

" मानसी या द्विधा वृत्तिः सङ्कल्पात्मपरावृता ।
द्वितीया तद्विकल्पस्था परित्याज्ये ह्युभे च ते ॥
त्यक्त्वा ब्रह्मासि च त्वन्तु तत्त्वमस्यादिलक्षणात् ।"

इत्युक्तम् । यस्त्वं ब्रह्मासीः , तदेवासीति मन्यताम् । न तत्र महत्त्वलघुत्वव्यापारेण, अहमन्योऽयमन्यः, अन्यदन्यदिति बोधयुक्तो भवति । सङ्कल्पविकल्पयोर्द्वयोरपि त्याज्यत्वोक्त्या भाव्यमेव मन्तव्यमिति निश्चयः । अत एव

" भजन्ति योगिनस्सर्वे सङ्कल्परहितास्तथा ।
विकल्परहिता ब्रह्मनिदिध्यासनमन्वहम् ॥"

इत्युक्तम् । ब्रह्मनिदिध्यासनञ्च, सङ्कल्पविकल्परहितमिति विज्ञेयम् । " योगोऽन्यस्सङ्कल्पात् " इति योगप्रवचनेन युज्यते सर्वत्र सर्वं सर्वधा सार्वकालिकञ्चेति योगशब्दार्थप्रवचनेनैव, सङ्कल्पविकल्पयोस्त्यागोऽनुमीयते । अहं त्वमन्यदयमिति विना प्रपञ्चभेदं न सङ्कल्पविकल्पसंभवः । अहमेवं करिष्यामि, तेनैतत्सिध्यति, तच्च फलम् , ततोऽहं महान् , अतोऽहं लघुः, इति बोधः प्रपञ्चरूपः ।

यो ह्येवं मन्यते—सर्वं सर्वथा भवत्येव, सर्वञ्च फलं सर्वथा

सर्वस्य सिध्यत्येवेति; स योगी, ब्रह्मवित् , विद्वान् , ब्राह्मणः, मुक्तः भवतीति विज्ञेयम्। ब्रह्म जानातीति ब्राह्मण इत्यर्थाद्ब्रह्मज्ञानञ्च त्रयाणामेतेषामैक्यविज्ञानरूपमेव भवति। स एव विज्ञानी ब्राह्मणो भवति। यश्चाभेददृष्टिर्भेदत्रयान्मुच्यते स मुक्तो भवति। इत्थंभूतस्सर्वयोजनरूपो योगो यस्यास्ति स वै योगी भवति। ब्राह्मणमुक्तयोगिनां तदावश्यकनियमेन, एकावस्थया च परस्पराभेदोऽपि विज्ञेयः। ब्रह्मविद्यः स ब्राह्मण इति निश्चितम्। तन्नाम विज्ञानफलम्। मुच्यते सर्वस्माद्भेदरूपादित्यर्थे भेदज्ञानं संभवाभिप्रायेण। वस्तुतस्तु युज्यते सर्वं ब्रह्मेति बोधमात्रं प्रशस्तं भवति। एवमेवान्यद्विशेषणमपि तदनुसारेण भवतीति ज्ञातव्यम्।

सर्वेणापि च संकल्पविकल्पत्याग एव कथितो भवति। सङ्कल्पविकल्पानुकल्पव्यवहारस्तु, भेदाभासे सत्येव भवतीति विज्ञेयम्। अत एव मानससंकल्पविकल्पयोरेव विकार उच्यते। विशेषः कारः करणं सामर्थ्यं विकारः, विगतं कार्यं विकारः, इति तदर्थद्वयं दृश्यते। विशेषेण करणं सङ्कल्पः। अर्थान्तरमप्यवगम्यते। तेन विगतस्वभावरूपार्थोऽप्यत्र भवति। योगेन हि द्वयोर्विकार इत्यभिधीयते। त्यक्त्वा हि विकारं सुखी भवेत्युपदेशः। सङ्कल्पविकल्पपरित्यागार्थकमेव हि सर्वोपदेशवचनम्।

योगी तु निर्विकल्पक इत्यपि चरितार्थम्। सङ्कल्पविकल्प-

योरेव सुखदुःखकारणत्वमप्युक्तम् । सिद्धे हि सङ्कल्पे सुखम्, तद्विकल्पेऽतिक्रमे च सिद्धे दुःखम् । असिद्धस्य व्यतिक्रमस्य निषिद्धत्वोक्त्या, संकल्पस्यावश्यकत्वोक्त्या च सुखदुःखे च न चिन्तनीये इति विज्ञेयम्। भवनञ्च सुखदुःखयोर्भाव्यत्वमेवेति निर्णेयम् । सुखदुःखानन्दानामेकत्वोक्त्या, सर्वं भाव्यमेवेति मन्यतामित्युपदेशः । यद्यपि काङ्क्षा सुखार्थमेव भवति, "सुखाश्रयिणी काङ्क्षा च" इति वचनात्, तथापि सुखदुःखयोरेकसत्तात्वाद्द्विधाकरणमयुक्तम् । काङ्क्षा ह्यानन्दाश्रयिणी । आनन्दश्च तयोर्युक्त एव । आत्मा चानन्दरूपः । अतस्सर्वत्रानन्द इत्यभिकाङ्क्षति । यद्यप्यहमिति स्यामाश्रितो भवति, तथापि नाश्रयाश्रयिभावस्संबन्धः, तयोरेकत्वात् । यद्यप्येवं सुखस्याकाङ्क्षा हि दृश्यते न दुःखस्य, तथापि भाव्यनियमेनानन्दरूपा काङ्क्षैव बोध्या भवति । तदनुसारेणैव सुखं दुःखमिति भेदद्वयं भवतीति काङ्क्षाश्रयार्थः । अत एव

"आनन्दः कामनारूपः काङ्क्षारूपं सुखं भवेत् ।
तदिच्छारूपञ्च दुःखमास्थितोऽयं क्रमो विधौ ॥"

इत्यादिवचनम् । एतेषां पृथक्त्वमपृथक्त्वञ्चोक्तं भवति । कामनाकाङ्क्षेच्छाशानामानन्दसुखदुःखरूपत्वं तदभाववत्त्वञ्चोक्तं भवति । क्रमस्तु, कामनाकाङ्क्षाशाः, आनन्दसुखदुःखरूपाः । कामना-

नन्दबद्धा । सुखेन च काङ्क्षा बद्धा । आशा तु दुःखेन संबद्धा । इच्छा चात्र त्रिसङ्गिनी । इच्छाया अकारत्वोक्त्या निषिद्धरूपत्वात्सर्वान्तर्गतत्वम् । तस्मात्सुखरूपा चेच्छा, दुःखरूपानन्दरूपा चेति त्रयं भवति । एवं परस्परव्यतिक्रमस्सर्वार्थितत्वाद्भवति । अत एव

"इच्छाशाकामनाकाङ्क्षास्त्यक्त्वा योगात्सुखं लभेत् ।
सङ्कल्पश्च विकल्पश्च द्वयं त्यक्त्वानुकल्पकम् ॥
साक्षादिदं ब्रह्म विद्धि सर्वयुक्तं सनातनम् ।
सर्वोदयं सर्वसंस्थं सर्वगं सर्वसंज्ञकम् ॥"

इत्याद्युक्तिः । तस्मात्सङ्कल्पविकल्पानुकल्पानां त्रयाणां चैकत्वं तादृशाकारादिक्रमेण ओमित्यन्तर्गतमिति बोध्यम् । अत एव

"ओमित्येतद्धि सङ्कल्पो विकल्पः प्रणवाभिधः ।
अनुकल्पस्तथा नित्यं सर्वाद्यो मध्यमोऽन्तिमः ॥"

इति वचनम् । तस्मात्सर्वारम्भावसानान्तयुक्तं सङ्कल्पविकल्पानुकल्पसिद्धम्, ओमित्येतत्स्वरूपं विद्धीति फलितार्थः ।

अत्रैव सङ्कल्पविकल्पानुकल्पयोगविचारोऽपि सर्वथा भवति । विचारपदार्थस्तु ज्ञानरूपः । यद्यपि विचारं विना सङ्कल्पविकल्पयोरसंभवः, तथापि तस्य ज्ञानरूपत्वमुक्तम्, ज्ञानेन सङ्कल्पविकल्पानुकल्पवृत्तिरिति प्रवचनात् । तस्मात्सङ्कल्पविक-

ल्पानुकल्पेभ्यो भिन्नो विचारो न दृश्यते । एतदन्योन्यसंबन्धेऽपि तदावश्यकत्वादभेदः । सङ्कल्पविकल्पानुकल्पेषु विचारश्च सार्व-कालिकः । अत एव विचारात्सङ्कल्पोऽयुक्तः विकल्पश्चानिश्च-यादित्युक्तम् । तन्निश्चयकारणीभूता या शक्तिस्सैव बुद्धिरिति विज्ञेयम् । बुद्धेः कार्यं विचार इति स्पष्टतया निश्चयकरणप्रकारः विचार इति वेदितव्यः । यथा हि इदमित्थमेवेति सति निश्चये सङ्कल्पो भवति; तदिदमित्थं कर्त्तव्यमिति सङ्कल्पस्वरूपत्वोक्त्या निश्चयकरणप्रकारस्यैव विचाररूपत्वमित्यवधेयम् । यद्यपि सर्वस्य निश्चयसाधनत्वमुक्तमनिश्चितस्यानावश्यकत्वात् , तथापि निश्चय-साधनमात्मसंसारयोः संयोग एव । तयोस्संबन्धरूपस्सन्देहोऽपि तत्रेति व्याख्यानात्सन्देहनिश्चययोरप्यावश्यकत्वम् । बहुधा प्रसङ्गे सत्येव निश्चयसन्देहप्रयोजनम् । संसारस्तु बहुळसंसरणस्वरूपः । तस्मादत्र निश्चयकरणं सन्देहकरणं भाव्यमेवेति बोध्यम् । बहुधा प्रसङ्गे तदेकत्वरूपसिद्धान्ते येन भ्राम्येत् , स च सन्देहः । यदिदं बहुळं तदेकमेवेति तु सिद्धान्तः । विचारेणैव चैकत्व-निश्चयो भवतीति भावः । यदिदं संसारे बाहुळ्यं तत्रात्मसंसा-राविति रूपद्वयं तयोस्संबन्धश्चेति त्रयम् । एतेषां सत्ता त्वेकैवे-त्यादिप्रकारस्वरूपो विचार इति विज्ञेयम् ।

एतद्विचारस्य त्रिधा भेदश्चोक्तः , अस्मृतिः, विस्मृतिः

अनुस्मृतिश्चेति । स्मरणं स्मृतिरिति तदर्थः। विचाररूपा स्मृतिशक्तिस्तु बुद्धिः, निश्चितानामेव स्मृतिः सर्वथा भवतीति व्याख्यानात्। यच्च वा निश्चितं सर्वैः प्रकारैः इदमित्थमिति, तदेतद्धारणं सार्वकालिकम्, नातोऽन्यस्य संभवः, इत्येतत्स्मरणस्वरूपम्। स्वाशे इदमित्थमासीत्, इदमस्ति भविष्यति वा न वा इति तु विस्मरणस्वरूपम्। तदेव विस्मृतिः। विस्मृतेः कारणं हि भ्रम एव। विस्मृतिरूपा शक्तिरबुद्धिरनिश्चयात्मिकेति बोध्यम्। अनुस्मृतिश्च स्मृतिविस्मृतिभ्या भवति। पूर्वं यदभूत् तद्विस्मृतं स्मृतञ्चाद्यकालिकम्, अनेनैवाद्यकालिकेनान्यदपि भविष्यतीत्याशाविशिष्टमनुस्मरणस्वरूपम्। अनुस्मृतिरूपा च या शक्तिः सा सुधीरिति बोध्या भवति। तेन विस्मृतिर्भूतकालिकी, स्मृतिस्तु वर्तमानकालिकी, अनुस्मृतिस्तु भविष्यत्कालिकी चेति बोध्यम्। अत्रापि प्रत्यक्षानुमाननिर्णयानुसन्धानं भवति। विस्मरणं निषिद्धरूपम्, स्मरणन्त्वात्मरूपम्। अनुस्मरणं संसाररूपम्। एतत्त्रितयात्मकरूपो विचार इति सिद्धान्तः। विस्मरणं यत्तदेवाप्रयुक्तम्, न तेन किञ्चित्कार्यसाधनं भवति। विस्मृतमिदन्न ज्ञायते, आसीदस्ति वा नासीदस्तीति विस्मृतिस्वरूपत्वोक्त्या तस्याप्रयोजनत्वं निषिद्धरूपमभावात्मकं वेदितव्यम्। स्मृतम्, इदमेवासीत्, एवमस्त्येव, इत्यादिस्मृतिस्वरूपत्वोक्त्या कार्यं

भवति । स्मृतमिदमस्मिन्नंशे, इदं कर्तव्यम्, इदं भवतीत्यादि-प्रयोगादात्मनः कार्यकारकत्वात् स्मृतोऽयमात्मा । स्मरणेन भवनरूपव्यापारः। भवत्येवेदमित्येतत्संसारस्वरूपमित्युक्त्या, अनु-स्मृतं संसारस्वरूपमित्युक्तम् । वस्तुतस्तु स्मृतिरेव सर्वम् । अनुस्मरणविस्मरणे च तदन्तर्गते । सत्ता तु तत्त्रयाणां विचार-रूपा। अतस्त्रितयात्मको विचारश्चैकस्वरूप इति विद्धीत्युपदेशः।

शक्तिश्च बुद्धिरबुद्धिस्सुधीश्चेति त्रिविधा भवति । अत एव "बुद्ध्या स्मृतिस्सुधिया चानुस्मृतिः" इति प्रवचनम् । विस्मृतमबुद्ध्या चेति तत्फलम्। विस्मृतिस्मृत्यनुस्मृतीनां त्रिसृणां स्मरणरूपो व्यापारस्त्वेक एव । विगतं स्मरणमिति विस्मृतिः । यदस्ति तस्यैव स्मरणमिति व्याख्यानात्, सर्वमस्तीत्युक्तत्वाच्च स्मरणस्य विगतत्वं न किञ्चित्; किन्तु तन्निषेधमात्रम्। तदप्य-स्तीत्यस्यान्तर्गतम्। तस्माद्विस्मरणमपि स्मरणं भवति । यदस्ति तत्स्मरणं तदेव स्मृतिः । सर्वमस्ति सार्वकालिकन्तादृशानाद्यन-न्तम् । अनुस्मरणमपीदं भवति—यदस्ति, तदेवासीत्, तदेव भविष्यति, इत्यप्यनुस्मृतिः । पश्चाद्बोधेनापरबोधः ।

कालस्य सार्वत्रिकत्वात्सर्वस्य कालिकत्वाच्च, तयोश्चाप्यना-द्यन्तत्वम्। अतः त्रयाणामभेद एव । यद्यपि विस्मरणं भूतकालि-कमित्युक्तं। पूर्वस्यापि भूतकालिकस्य स्मरणं संभवत्येव, तथापि

तस्य निश्चयरूपत्वात्सत्त्वैकत्वाच्च तद्भूतकालिकमपि वर्तमानकालिकं भवति। विस्मरणन्तु केवलमनिश्चयात्मकम्, स्मरणन्तु निश्चयात्मकन्तदेव वर्तमानम्। अनिश्चयो भूतः, अभावस्वरूपत्वात्, निश्चयप्रतिवचनत्वाच्च। विस्मरणन्तु भूतकालिकं स्मरणं वर्तमानकालिकमिति सिद्धम्। यत्पूर्वमासीत् तस्यैवं ममानुस्मरणं न तत्र सन्देह इत्युक्तेः अस्तीत्येष प्रयोगः निश्चितः पूर्वेण बद्धः। पूर्वं परञ्च न किञ्चिदिति व्याख्यानात् तयोर्भ्रमरूपत्वाच्च निश्चयरूप एव स्मरणव्यापारः। स तु वर्तमान एव। एवमासीद्वा नासीद्वेति सन्दिग्धप्रवचनमनिश्चयात्मकम्; तदेव विस्मरणरूपम्। तत्रानिश्चयरूप एव विस्मरणव्यापारः। तन्न किञ्चित् सर्वमस्ति सर्वदेति व्याख्यानात्। आसीदित्येषः अनिश्चयरूपः भूतकालिकोऽभावरूपः। अयमेव विस्मरणस्मरणभेदः, पूर्वाद्यतनकालवचनेन संबद्धः। पूर्वाद्यतनयोस्त्वनुपस्थितिः। य एवमद्यतनः स त्वन्यस्मिन्पूर्वो भवतीति दृष्ट्या न पूर्वो नाद्यतन इति च व्याख्यानफलम्। सर्वत्राद्यकाल एव बोध्यः।

सर्वथास्त्येवेति प्रवचनात् यदद्यास्ति तदेवान्यस्मिन्नपीति अनुस्मरणव्यापारः। तत्राप्यस्तीत्येतन्निश्चयरूपम्, आत्मनस्संसारस्य चाभेदादन्योन्याश्रितत्वाच्च। अनुस्मरणन्तु संसारस्य, तच्च स्मरणेन बद्धम्, स्मरणमनु इति तत्समासात्। यद्यप्यनुस्-

रणेऽपि सन्देहः, तथापि सन्देहस्य संबन्धरूपत्वात् सर्वान्तर्गतत्वाच्च तयोरभेद एव विज्ञेयः । अनुस्मरणन्तु स्मरणाधीनम्, स्मरणञ्चानुस्मरणाधीनमिति आत्मसंसारनिष्ठव्याख्यानेन बोध्यम्। भवनमात्रस्यानाद्यनन्तत्वात्, सत्ताप्राधान्याच्च स्मरणं सार्वकालिकं भवति। यच्च स्मरणं तदेव धारणम्। स्मरणं साधनरूपं धारणं सिद्धिरूपम्। अनेन च स्मरणं क्रियारूपं तत्फलञ्च धारणरूपामिति बुध्यते।

यदिदानीं दृश्यते, ज्ञायते वा, तदेव सर्वथा निर्धारणकार्यं भवति। इदानीं तदानीमित्यभेदात्, सर्वं सर्वत्र सर्वथा इति व्याख्यानाच्च, धारणं सार्वकालिकमिति विज्ञेयम्। तस्माद्धृतिस्मृत्योरभेदः। धारणं धृतिः। स्मरणं प्रकारज्ञानम्। तेन यल्लब्धं तस्य स्थापनमात्रं धृतिरिति तु तत्फलम्। "सर्वं सर्वेण बद्धम्" इत्युक्त्या यो हि दृश्यते श्रूयते ज्ञायते, स पदार्थस्सत्ता, श्रोतृज्ञातृद्रष्टया सत्ता त्वेकैवेति बीजात्। दृष्टस्य श्रुतस्य ज्ञातस्य च तत्र स्थितिः। सर्वसत्ता प्राधान्यात्त्वेकैव, "कालाधिष्ठितञ्च सर्वं सर्वाधिष्ठितश्च कालः" इति प्रवचनात्। धृतिमात्रे न कालत्रयस्य स्थितिर्विज्ञायते, "धृतिरेव हि सार्वत्रिकी" इत्युक्तेः। यथा—वर्तमानभूतभविष्यदारोपणं कालमात्रे क्रमानुसरणादारम्भावसानान्तबीजाद्भवति। एवं स्मर-

णमात्रेऽप्यनुप्रयोगः भवति। तत्त्रयाणां सत्ता तु कालस्यैव स्मरणस्यैव वा भवति। न तत्र भेदः। एवं धृतेरेव स्मृतिरिति व्यवहार इति बोध्यम्। स्मृतिमात्रे त्रितयत्वञ्च भेदपरिभाषितादेव। धृतिस्तु त्रितयैकरूपा, सार्वकालिकी, सार्वत्रिकी चेति बोध्यम्। अत्र च धृत्यंशः न भविष्यन्निति नियमः। केवलं सर्वधा स्मृतानां धारणमेव कार्यम्। धृतिस्वरूपन्तु समसत्ताप्रवचनार्थकम्। विस्मृतिः स्मृतिरनुस्मृतिश्च त्रयाणां विचाररूपा इत्युच्यते। यथा आत्मा संसारः निषिद्धरूपञ्च त्रितयं ब्रह्मसंज्ञकम्, तथैवेति विज्ञेयम्। आत्मा संसारः इत्यनयोर्मध्ये, यच्च ज्ञानं संसारदृष्ट्यात्मनः, आत्मदृष्ट्या संसारस्य इति तत्स्मृतिः। अस्ति च संसार इत्यात्मनः ज्ञानम्, अस्मित्येतद्द्वाभ्यां बद्धं स्मृतिसंज्ञकम्। आत्मसंसारयोस्संयुक्तावस्था धृतिरिति बोध्यम्, आत्मना संसारधारणं संसारेणात्मधारणमिति व्याख्यानात्। संसारश्चात्मनो भिन्नः, आत्मा च संसारभिन्नः, न कदापि तिष्ठतीत्येतत्तयोर्वृत्तिस्वरूपम्। संसारात्मनोश्चानाद्यनन्तत्वात्सार्वकालिकत्वाद्धृतिः सार्वत्रिकीति सिद्धम्। यच्च भूतम्, भवति, भविष्यति च, तत्संसारात्मकमिति बुद्ध्यात्मनः संसारस्य चाभेदात्स्मरणमात्रस्य त्रैकालिकस्य धारणमेकस्वरूपमिति सिद्धान्तः। एवमेव हि धृतिस्मृत्योर्भेदः। अत एव विचारस्य धृतिस्वरूप-

त्वमप्युक्तम्, विचारात्मितयात्मक इति प्रवचनात् । अत एव विचारः स्मृतिरूपः । एवं विस्मृतिरनुस्मृतिश्चेति व्याख्यानम् । मिळितमेव त्रितयं विचारप्रवचनोपयुक्तम् । "सर्वस्याना-द्यनन्तत्वमाद्यन्तभिन्नत्वञ्च" इत्युक्तेः, "आत्मनः संसारस्यावश्य-कत्वात्तयोरपृथक्त्वाच्च मध्यवर्तिनी परस्परासिस्येतज्ज्ञापनकर्त्री स्मृतिः" इत्युक्तेश्च, स्मरणञ्च द्वयोः समाहाररूपं भवति । यद्यप्यसिस्येतदुक्त्या तयोस्सत्तामात्रमित्येकमसिस्येतत्कार्यं भवति, तथापि तयोरावश्यकत्वादेवामिदमस्त्येवेति प्रदर्शनात्पृथक्त्वम् । तत्रैव पृथग्रूपमेकसत्ताविशिष्टज्ञानं समाहाररूपञ्चैकसत्तायाः । वस्तुतस्तु पृथक्त्वाभावविशिष्टानामपि समाहारो भवतीति शब्द-शास्त्रसिद्धान्तः । तस्मादात्मसंसाराभिन्नं स्मरणमन्यदिति यत्सू-चनम्, तदपि सर्वं ब्रह्मेति व्याख्यानाद्ब्रह्मैव सर्वमिति वक्तुमु-चितम् ।

आत्मनः संसारस्य निषिद्धस्य च बहुरूपत्वात्, अस्यैव सार्वत्रिकत्वाच्च, स्मरणस्यान्यत्वन्न वक्तव्यम्, किन्तु केवलमात्मसं-सारयोस्संयोगमात्रम् । एकसत्तास्थानाम्, वस्तुतः भिन्नानाम्, पृथगुपस्थितानाञ्च योगेन या चावस्था, सा स्मरणरूपा परस्परापे-क्षारूपेति च बोध्यम् । तयोः पृथक्त्वेऽपि परस्परत्वं प्रत्येकं वर्तते । तस्मादावश्यकत्वेन द्वयोः आत्मसंसारयोः परस्परसंयोगरूपं स्मर-

णमित्युच्यते । संयोगस्तु द्वयोरुपस्थितो भवति। अतो न त्रितयभिन्नं च ज्ञानं स्मरणम् । अत एव "विज्ञानमानन्दं ब्रह्म" इति, "ब्रह्मविचारेण ब्रह्म लभेत" इत्यपि च सिद्धं भवति। यदेतात्त्रितयभूतम् आत्मा, संसारः, तयोर्योग इति, तन्निश्चयकरणं ब्रह्मविचारो भवति । निश्चितो ब्रह्मलाभ इति तदर्थः । तस्मात्त्रितयात्मकं स्मरणमित्युच्यते । यद्यपि स्मरणं कालनिष्ठमस्मादारभ्य चैतत्पर्यन्तमद्यैवं दृश्यते पूर्वं दृष्टमित्यादि तत्स्वरूपन्त्वयुक्तम्, तथापि स्मरणमात्रं सार्वकालिकं भवति । तत्क्रिया च दृष्टम्, श्रुतम्, ज्ञातम्, दृश्यते, श्रूयते ज्ञायते, इत्यादिरूपा । यद्यप्यत्र च संसारे इन्द्रियैरेव ज्ञानसंभवः, तदेव स्मरणमन्तरात्मनि, तथापि तत्र स्मरणरूपा सत्ता सार्वकालिकी, अनाद्यनन्तभिन्ना, आद्यन्तरहिता चेति बोध्या । तस्माद्दृष्टम्, श्रुतम्, ज्ञातम्, ज्ञायते, दृश्यते, श्रूयते वा, इत्येतच्छ्रावणदार्शनज्ञाननिष्ठश्च विषयः । तद्दर्शनज्ञानश्रवणव्यापारः स्वयञ्च सार्वकालिकः, पृथगुपस्थितोऽनुपस्थितश्च भवति ।

अतः स्मृतेरपि शक्तिप्रधानतया सत्तात्वेन सार्वकालिकत्वम्, सर्वोपकारकत्वम्, आत्मनस्संसारसंयुक्तत्वं त्रितयात्मकत्वञ्च वेदनीयम् ।

दृश्यतामिह पदार्थयोर्द्वयोरेकत्रोपस्थितौ सत्यां ज्ञानं भवति ।

ज्ञानन्तु पदार्थयोर्द्वयोरेकत्वात्पूर्वमप्यस्ति । पदार्थस्यास्तित्वमपि ततः पूर्वं विज्ञेयम् । संबन्धश्चैकीभवनरूपः । तेनैव परस्परापेक्षा, सैव स्मरणरूपा भवति, तयोः पृथग्भवनेऽपि द्वयोरस्तित्वादेकस्थत्वरूपप्रयोजनस्यास्तित्वाच्च । तदनुपस्थितस्यापि परस्परं स्मरणम् । अंशे चात्र यदर्थं तयोरेकीभवनन्तदेव कारणं स्मरणस्येति बोध्यम् । पदार्थत्रयस्याभावादनाद्यन्तत्वाच्च स्मरणम्, सत्ताप्राधान्येन त्रितयात्मकं सार्वकालिकमेवेति च विज्ञेयम् ।

यद्यपि स्मरणव्यापारे पूर्वत्वं वर्तते यच्च पूर्वमेककालेन कृतम्, तथापि तत्करणस्य स्मरणं सार्वकालिकं परस्मिन्नधिष्ठितञ्च भवति । तत्कृतकालात्पूर्वस्य न तदंशे भावना । तन्मानञ्च केवलं सत्तैवेति बोध्यम् । कारणरूपा च या शक्तिः, सा तु सार्वत्रिकत्वेन स्वस्मिन्नपि विद्यते । कर्त्तव्याधीनतया तत्करणञ्च सार्वत्रिकम् । कर्तव्यस्यापि सार्वत्रिकत्वं प्रत्यक्षसिद्धम् । केवलतत्कालवृत्त्या च कर्तव्यकारकयोस्संबन्धः । संमुखीभवनं स्मरणं दृश्यते । तयोर्विद्यमानत्वञ्चाकालिकं सर्वस्वरूपविशिष्टं भवति । तस्मात्पराधिष्ठिता स्मृतिरित्युच्यते । कृतिकालात्पूर्वमपि तयोरुपस्थितिः । संबन्धस्याभावादेव न तत्स्मरणम् । अंशे चास्मिंन्सम्मुखीभवनमेव कारणम् । स्मरणञ्च द्वयोस्संबन्धरूपं वेदितव्यम् ।

एवमेवात्मसंसारयोस्संमुखीभवनं बोध्यम् । तत्कारणन्तु सत्तामात्रमेवेति निश्चयः । ब्रह्मदृष्ट्या स्मरणं सार्वत्रिकम् । तदेव स्मृतिः । अस्मिंश्च संसारे सर्वस्य प्रत्येकं पृथगुपस्थित्या क्रमरूपेण कालेन प्रवचनम् । जीवस्य क्रमिकत्वमेव कालः । अनाद्यनन्तञ्च क्रमिकत्वम् । तस्यातीतत्वञ्चोच्यते । अतीते एव च क्रमदर्शनम् । सत्तायोगेन क्रमोऽप्यतीत एव । अनेन ज्ञानमप्यतीतम् । क्रमिकत्वञ्च स्मृतिरूपं वेदितव्यम् । तस्मादात्मसंसारयोः स्मरणं पृथगेवेति न विज्ञेयम् । परस्परमसित्येतन्मात्रं स्मरणरूपम् । द्वयोरप्यसित्येतदेकरूपमेव । किञ्चासित्येवात्मा, असिन्येव संसारश्च इत्यपि च विज्ञेयम् । असित्येतत्प्रवचनञ्च परस्परत्वात्तयोरेकरूपत्वाच्चोच्यते । अन्यथा यदस् तदात्मा, यश्चात्मा स संसार इत्यर्थः स्यात् । एवमेव क्रमिकत्वेऽपि पदार्थानामस्तित्वं सार्वकालिकं त्रिधाभूतञ्च परिदृश्यते । असित्येतन्मात्रमेव त्रितये प्रयुज्यते । त्वमिति सत्तारूपम्, तदावश्यकञ्च स्मरणं स्मारकं स्मार्यञ्चेति बोध्यम् । संबन्धभवनन्तु अस्तित्वेनैव । अतः स्मृतेरुत्पत्तिः सार्वत्रिकी, सार्वत्रिकत्वात्तदतीतत्वाच्च । यद्यपि स्मृत्यन्तरे स्मृत्युत्पत्तिः, तथापि तस्यानवस्थात्वकल्पनं नोपयुक्तम्, सृष्टिमात्रे चैतदावश्यकत्वात् । यद्यप्यनवस्थायुक्ता चेति वक्तुं शक्यते, तथापि न युक्तञ्च किञ्चिदिति व्याख्यानादनवस्थाया

अप्ययुक्तत्वं न वक्तुमुचितम् । "युक्तं सर्वं युक्तम्" इति प्रवचनात् अनवस्था नायुक्ता, किन्तु सावश्यकत्वेन बोध्या । तस्मात्स्मृत्यन्तरे स्मृत्युत्पत्तिरिति सिद्धम् । यथा—वीर्यान्तरे वीर्यमिति प्रत्यक्षदर्शनम् । सर्वत्र च सृष्टिमात्रे चैकाभ्यन्तरगतमेकं परिदृश्यते । एवं यदिदानीं स्मृतम्, तत्तदानीन्ततः परञ्चेत्याद्यनाद्यनन्तप्रयुक्तं विज्ञेयम् । अतः पूर्वस्योत्तरोत्तरस्मरणम्, एवमुत्तरस्यापि पूर्वोत्तरोत्तरस्मरणं भवति, पूर्वोत्तरयोरभेदव्याख्यानात्, "कालेऽप्यनवस्था कार्येऽप्यनवस्था वाक्येऽप्यनवस्था ज्ञानेऽप्यनवस्था" इत्यादिप्रवचनाद्वा, "अनवस्थाप्यावश्यकी परा" इति सूत्राच्च । तस्मात्स्मृत्यन्तरा स्मृतिरेव पूर्वोत्तररूपा ज्ञातव्या भवति। यद्यनवस्था दोषरूपत्वेन चोच्यते, तथाप्यवस्थायाः क्रमिकत्वात्, अतीतस्य अनवस्थात्वप्रवचनाच्च न दोष इति सिद्धान्तः । अवस्थैव दोषयुक्ता, नानवस्था भवति ।

आत्मसंसारयोः सत्ताप्राधान्यात्सर्वं सर्वस्य खल्विति प्रवचनात् सर्वस्य भावरूपत्वात् आवश्यकत्वाच्च, न गुणदोषौ विज्ञेयौ भवतः । दोषादोषकथनम्, तज्ज्ञानञ्च भ्रममूलकमेव । अतो गुणदोषौ परित्यज्य, स्वतस्सिद्धमावश्यकञ्च मत्वा तिष्ठ इत्युपदेशः । एषैवमुक्तिः । दोषादोषौ, अवस्थानवस्थे इत्यनयोर्भेदज्ञानमेव बन्धः । अत एव "द्वित्वेन बन्धः एकत्वेन मुक्तिः"

इत्युक्तम् । "द्वाभ्यामेवायमात्मा बद्धः द्वित्वं हि परित्यज्य चैकत्वं परिदृश्य सन्धानं ब्रह्मस्वरूपमुलभ्यताम्" इत्युपदेशश्च । अत एव सर्वमवस्थैव, नानवस्था च सर्वावश्यकतया चेति सिद्धम् । अतः स्मृतेरपि स्मृतिः, धृतेरपि धृतिः, तयोस्सार्वकालिकत्वञ्च युक्तम् । यद्यप्येकस्मात्कालादेव सर्वारम्भः, तथापि तत्सत्तायाः सर्वत्र स्थितत्वात्स्मरणरूपव्यापारमात्रस्य सर्वत्र विद्यमानत्वात्संमुखीकरणबीजात्संमुखीकरणस्य कालाबाध्यत्वाच्च स्मृतेरपि सर्वस्वरूपत्वं विज्ञेयम् । नानवस्था तत्र दृश्यते । अनवस्था तु केवलज्ञानस्याल्पत्वभ्रमेणैव । अत एव

"सर्वावस्था च सर्वस्य नानवस्था च कस्यचित् ।
नैकत्र विद्यते कश्चित्सर्वं सर्वत्र विद्यते ॥
यत्र तत्र तदेकत्र प्रत्येकं नैव भासते ।
सत्तामात्रन्तु सर्वत्र सर्वस्थं सर्वलक्षणम् ॥"

इत्याद्युक्तम् । अत एव स्मृतिः सृष्टिरपि च वेदैः स्पष्टमुच्यते । " मानससृष्टिरन्तरेऽपूर्वा " इत्याद्युक्त्या वा ।

आसामेव स्मृतिविस्मृत्यनुस्मृतीनां मानसविचाररूपत्वमपि चोच्यते । अनवस्थैव संसरणामिति स्पष्टतया मानसविचाररूपा सृष्टिः । एवं भूतवर्तमानभविष्यद्रूपं त्रितयात्मकं त्रितयसिद्धञ्चोच्यते । मानसविचारस्य क्रमिकत्वेऽपि यदतीतभासनं

तदेव ब्रह्म त्वं विद्धीत्युपदेशः। स्मृतिस्त्वात्मवाचकेनाकारेण ग्राह्या। अनुस्मृतिस्तूकारेण । विस्मृतिश्च मकारेण। स्मरणव्यापारश्च संसरणरूप एवेति बोध्यम्। स्मृतिसृष्टयोश्चापि ओमित्येतद्ब्रह्मवाचकशब्देन बोधः । अत एव

"अकाराच्च स्मृतिर्ज्ञेया चानुस्मृतिरुकारतः ।
विस्मृतिस्तु मकाराच्च विचारस्त्रितयात्मकः ॥
स्मरणाच्चानुस्मरणात्तथा विस्मरणादपि ।
ब्रह्मभावञ्च संप्राप्य ब्रह्मजिज्ञासया सदा ॥
आत्मनः स्मृतिमात्रेण सर्वमेतदनुस्मृतम् ।
विस्मृतञ्च तयोर्योगः स्मृतिसृष्टिः परावरा ॥
सङ्कल्पञ्च स्मृतं विद्धि विकल्पो विस्मृतं भवेत् ।
अनुस्मृतञ्चानुकल्पं त्रितयांशे व्यतिक्रमः ॥"

इत्याद्युक्त्या वा। स्मृतिर्विस्मृतिरनुस्मृतिश्च, आत्मा संसारः निषिद्धरूपञ्च भवति। क्रमश्चात्र विस्मृतिः स्मृतिरनुस्मृतिश्चेति त्रितयं विचाररूपं तदावश्यकं ज्ञेयम् । तच्छक्तिरत्र बुद्धिः । यद्यप्यत्रात्मसंसारयोर्योगेन स्मरणोत्पत्तिः,तथापि न तत्तयोरन्यत् , किन्तु तदेवेति व्याख्यानात्। अत एवात्मनः ज्ञानस्वरूपत्वमुक्तं भवति।

"प्रतिष्ठापरज्ञानमिद्धोऽयमात्मा
स च ज्ञानरूपप्रतिष्ठोऽयमात्मा ।

स संसारसिद्धान्तवेद्योऽयमात्मा
सदा विस्मृतस्संस्मृतोऽभेदरूपः ॥
अनुष्ठानयुक्तस्तथा दानयुक्तः
प्रसिद्धःपरस्सर्वरूपोऽयमात्मा ॥"

इत्यादिप्रवचनम्। तस्मात्स्मृतिर्विस्मृतिरनुस्मृतिश्च, क्रमशः आत्मा संसारः निषिद्धरूपश्चेति बोध्यम्। एवमेव

"अकारो ज्ञानरूपश्च ह्युकारोऽज्ञानसंवृतः।
मकारश्च तयोर्भिन्नः विचारो ब्रह्मतत्वजः ॥

इत्यपि च। सर्वं ब्रह्मजं सर्वञ्च ब्रह्म इति सिद्धं भवति। तस्मात्स्मृतिविस्मृत्यनुस्मृतीनां भेदोऽयुक्तः।

अत एव महावाक्यप्रवचनेऽपि, अहं बहु स्यामित्यत्रापि च योगविभागेन, अहमित्येको योगः, स्यामित्येको योगः, बह्वित्येको योगः। अहमित्यात्मा। बह्विति संसारः। अहमित्यस्य बह्वित्येतन्मात्रं स्मरणम्। अहमित्येकत्वमात्रबोधकः। तेन बहु स्यामित्यपेक्षावश्यकं स्मरणं भवति। यावद्बह्विति स्मरणन्न, न तावत्स्यामिति प्रवचनम्। बहुत्वस्योपस्थितिरपि सार्वत्रिकत्वेन बोध्या। तस्मात्स्मरणस्याप्यनाद्यनन्तत्वं तदभाववत्वञ्च विज्ञेयम्। बह्वित्येतद्वचनमात्रं बहुत्वोपस्थितिज्ञापकञ्च भवति, तदेव स्मरणमिति तन्निर्धारणम्। यद्यप्यहमित्यत्र शक्त्याद्यारोपो नास्ति,

तथापि अहमित्येतद्रूपमस्मीत्याकांक्षितं भवति । अस्मीति प्रवचनेन स्थलापेक्षा । कुत्रास्मि, किमस्तीत्याद्यवधारणं विद्यमानस्मरणरूपमेव । अहमेवमेतं विनापि बहु स्याम्। अत्र बह्वित्युपलक्षणम् । तच्च बहुत्वं विना नोपयुक्तम् । अहमेव स्यामिति प्रवचनेन बहुत्वलाभः । तत्र बहुत्वं स्मरणप्रदर्शकं भवति, यदयमहं स बहु स्यामित्यत्र भवनमात्रेण स्यामित्यर्थयोगात् बहुत्वविशिष्टन्तत्स्वरूपज्ञानमिति वेदनीयम् । यदहं बहुरूपः तत्स्यामिति वाक्यार्थः, अहमित्यस्य बहुत्वेन योगात् । बहुरूप एवाहमिति युक्त्या स्यामित्यपि । अहं बह्विति तद्वृत्तिः । अत एव इदमित्थमासीत् , इदमित्थं स्यात् , इदमित्थं भवति , इत्येतन्मानवेन प्रत्यक्षज्ञानादनुमीयते । अहमित्थं करोमि, अहमित्थमस्मि, इति बुद्ध्या भवनमात्रे बहुत्वस्यायमेवार्थः । तत्राहमित्यत्रेत्थमिति रूपं यत्किञ्चित् , तत्स्मरणमिति स्पष्टैवसंज्ञा । तदिदञ्च बहुत्वमेव । अनाद्यनन्तत्वेन तत्सिद्धिः । एवमेवात्र वृक्षर्वार्ये सर्वत्र द्रष्टव्ये । यदित्थमहं तत्स्यामिति वृक्षोऽनुमानवचनाद्भवति । वृक्षस्य तत्फलबाहुल्यात्तदन्यकालिकः स्यामिति प्रयोगः बहुत्वविशिष्टश्चेत्युदाहृतः । अत एव स्मरणं सर्वत्र विद्यते इत्युदाहृतम् । एवमेव

"स्मरणं श्रवणञ्चैव कीर्त्तनं ज्ञानमुत्तमम् ।<br>
प्राप्तं तत्प्रेक्षणञ्चैव बहुभावाय कल्पते ॥

स्मरणात्कीर्तनाद्वापि श्रवणाच्च जपादपि ।

ब्रह्म तत्प्राप्यते नित्यमोमित्येतत्परायणम् ॥ ”

इत्यादिवचनम् । अत एवात्मविषये “ श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ” इति श्रुत्युक्तम् । श्रवणं शब्दमात्रम्, शब्दरूपं ब्रह्मेति व्याख्यानात् । श्रोतुरपि ब्रह्मस्वरूपत्वात् श्रुतश्रोत्रोस्संबन्धाच्च स्मरणम् । ततो मननम् । अस्तीदम्, किमहम्, किमस्ति, कस्संबन्धः, किं प्रयोजनम्, इत्यादिमननेन निश्चयः भवति । अहमिदमहञ्चेत्यादि निदिध्यासनम् । “ तत्रैव प्रतिष्ठितो मोक्षः ब्रह्मभवनञ्च ” इत्यादिप्रवचनमिति तदर्थः ।

अत एव श्रवणे कीर्तने स्मरणे च फलमुक्तं भवति । श्रवणं दर्शनञ्चेत्यादीन्द्रियकार्यम् । तदेव संबन्धमूलं भवति । तेनापि स्मरणरूपं तत्र स्थितञ्चोद्धरति । तदेवोद्धरणं विचारादिफलं भवति । तच्च साक्षाद्ब्रह्मस्वरूपं, त्रयाणां पृथक्पृथगनुपस्थितमिति व्याख्यानात् । अत एव

“ महतां दर्शने पुण्यं कीर्तने श्रवणेऽपि च ॥

तद्ध्यानेन महत्पुण्यं भवेन्मोक्षस्य कारणम् ॥ ”

इत्युक्तम् । महतामित्यनेनात्र महत्वलघुत्वयोगो न गृह्यते । सर्वो महानिति बुद्ध्या येषां भेददृष्टिर्नास्ति, किन्तु एवं यैः ब्रह्माभेद एव बुध्यते, तेषां दर्शनेन स्मरणेन च तत्सत्ताप्राधान्यात्तदनु-

करणचेष्टाभवनरूपं पुण्यं भवति, सर्वेषामेतद्बोधस्य मुख्यत्वात्। कीर्तनं श्रवणञ्च, अनेनेदं कृतम् एतदेवं कर्तव्यमिति। तादृशावश्यकनियतं युक्तञ्चेति श्रवणफलं भवति । इदञ्च स्मरणम्, किमिदम्, कस्मात्, कुत्र, किं प्रयोजनम्, इत्यादिरूपम् तदवधार्य ब्रह्मस्वभावं प्राप्नोतीति तु पुण्यं भवति । कीर्तनञ्च ब्रह्मणः कार्याणां शब्देन, मनसा, वाचा, अवधारणम् ।

इदमेव चरित्रगानम्, गुणानुवादश्च, सर्वं ब्रह्मेति बुद्ध्या स्मरणकीर्तनश्रवणमनननिश्चयाश्च । सर्वं सर्वस्य सर्वदा इति पुण्यशब्दार्थः । अत एव

"सद्वृत्तमश्लोकगुणानुवादा-
स्त्सत्यं समं दृष्टिमनोभिरामात् ।
तत्त्वं तदाद्यन्तविहीनगानात्
महत्त्वमाप्नोति सदा मनुष्यः ॥"

इत्युक्तम् । अतोऽत्र उत्तमश्लोकः ब्रह्मेति बोध्यम् । उत्तमोऽयमात्मा श्लोकोऽयं संसारः, ताभ्यां युक्तमुत्तमश्लोकं सदिति निषिद्धरूपं त्रितयात्मकं सर्वं पश्येदिति, गुणानुवादेन उपगानेन महत्त्वमाप्नोति । तद्गानमेव महत्त्वमिति बोध्यम् । एवमेव

"स्मरणञ्च स्वयं ब्रह्म कीर्तनं ब्रह्मसंज्ञकम् ।
श्रवणं निदिध्यासनं मननं यजनं तथा ॥

सर्वं ब्रह्म समाख्यातं प्रत्येकञ्च तथा युतम् ।
ओमित्येतत्स्वरूपेण वेदितव्यं यथाक्रमम् ॥"

इत्यादि वचनम् । तस्मात्स्मरणं हि नात्मसंसारयोर्भिन्नम्, किन्तु तदुपस्थितं तत्स्वरूपं ब्रह्मसंज्ञकं भवति ।

प्रणवशब्देन च अकारोकारमकारान्तर्गतं स्मृतिविस्मृत्यनुस्मृत्यादिकं सर्वं वेदितव्यं भवति यथाक्रमम् । यद्यपि स्मरणं कालनिष्ठमिति व्याख्यातम्, तथापि ज्ञानस्मरणयोर्भेदो द्रष्टव्यः । आत्मनिष्ठञ्च ज्ञानम् । स्वयमेवात्मा ज्ञानस्वरूपो भवति । एवं संसारोऽपि ज्ञाननिष्ठः । एवमेतयोः पृथक्त्वेन ज्ञानमेव वक्तव्यम् । तयोर्योगमात्रं स्मरणम् । योगस्तु कालेन भवति । अतः स्मरणस्य कालनिष्ठत्वं विज्ञायते ।

यद्यपि स्मरणेऽपि ज्ञानांशः, तथापि ज्ञातपदार्थानां दृष्टपदार्थानां श्रुतपदार्थानाञ्चैव स्मरणं पुनरुद्धरणं भवतीति विज्ञेयम् । तेन ज्ञानस्य पूर्वत्वं सिद्धम् । ज्ञानस्यैव द्वितियावस्था स्मृतिरिति सर्वत्र विज्ञायते । सत्याञ्च वर्तमानकालिकपदार्थप्राप्तौ, तदा केवलं तत्पदार्थज्ञानमेव, न तत्र स्मरणमवगम्यते । अन्यकाले च तादृशज्ञानस्य स्मरणरूपत्वेन निर्वचनम् । तस्माज्ज्ञानस्य विद्यमानत्वं सार्वत्रिकं भवति । प्रत्येकमपि तस्यैवावस्थायोगमात्रं स्मरणमिति ज्ञानस्मरणयोर्भेदः । ज्ञानञ्चानाद्यनन्तं सार्व-

कालिकमिति वेदितव्यम् । स्मरणस्य हि क्रमिकत्वं साद्यन्तत्वं विशेषकालिकत्वञ्चोच्यते । यदित्थञ्च ज्ञानं सार्वकालिकम्, तदंशस्य क्रमोऽप्यावश्यकः । तस्मात्तदंश एव स्मृतिरित्युच्यते ।

यद्यपि या चैककालिक्युत्पत्तिः सा सार्वकालिकी भवति, तथापि ज्ञानस्य सार्वत्रिकत्वं तत्रैव क्रमस्य विद्यमानत्वञ्चाभ्युपगम्यते । क्रमश्चारम्भावसानसहित इत्युक्तः स्मरणस्यापि क्रमिकत्वमारम्भावसानयुक्तत्वञ्च विज्ञेयम् । यो ह्येककालविशिष्टत्वेनारभ्यते, तस्य सार्वकालिकत्वमाद्यन्तसहितत्वञ्च भवति । स्मृतेः कालातीतत्वं न कदापि युक्तं भवति । दृश्यतामिह—अस्त्येकः पुरुषः, सत्वेकस्मिन्काले जज्ञे, तदुत्पत्तौ सत्यामाजन्मामरणञ्च तस्य स्मृतिर्धारणा क्रियाचेत्यादि तर्वते । जन्मान्तरे न तस्य स्मृतिर्नायाति । अतश्चास्यानाद्यनन्तत्वं न वक्तुमुचितम् । क्रमदृष्ट्या हि स्मृतिः सादिः सान्ता चैव भवति ।

यद्यपि जातिस्मराश्च भवन्ति जन्मान्तरीयस्यापि तेषा जन्मान्तरेऽपि स्मृतिः, तथापि तस्याः विशेषदृष्ट्या तथा प्रवचनम् । सामान्यतस्त्वेकमेव, एकजन्मकृताना न जन्मान्तरे स्मृतिर्भवतीति । विशेषविधिना तु स्मरणं विस्मरणमनुस्मरणञ्च सर्वं निरर्थकमेव । योगिनान्तु न स्मृतिः, न विस्मृतिः, नापि चानुस्मृतिः । योगिनाञ्च ज्ञानं सार्वकालिकं प्रत्यक्षमिति विज्ञेयम् ।

योगिनामेव त्रिकालज्ञत्वं दिव्यदृष्टिमत्वं चोच्यते। तस्मात्सामान्य-विधिना स्मृतिस्तु न सार्वकालिकी; किन्त्वाद्यन्तविशिष्टा ज्ञानवि-शेषरूपा च भवति । ज्ञानं हि पुनः सार्वकालिकमिति फलि-तार्थः। अत एव स्मृतेर्वर्तमानरूपत्वमुक्तं भवति। आरब्धापरि-समाप्तक्रियोपलक्षितः कालो वर्तमानः इति नियमात् स्मरणमा-जन्म चान्तमेवेति बोध्यम्।

यद्यपि एकस्मिन्जन्मनि बाल्याद्यवस्थायाः स्मृतेः संभवः, तथापि श्रुतप्रकारेण ज्ञानसंभवः। तच्च स्मरणं तादृशमेवास्ति। आरब्धायाः क्रियायाः यावत्तत्समाप्तिर्न भवति तावद्वर्तमानव्यव-हारः। ततः पूर्वश्च भूतः। ततः परो भविष्यत्कालः। कार्यदृष्ट्या हि किल कालत्रयनियमो विज्ञायते। कार्यमेव क्रमनियामकं भवति। अतः कालस्य त्रितयत्वं क्रमिकत्वञ्चोक्तं भवति। अन्यथा तु न वर्तमानो भूतो भविष्यंश्च न स्मृतिः विस्मृतिरनुस्मृतिश्च भव-तीति सिद्धान्तः।

दृश्यतामिह—पदार्थश्चैकः इदानीं दृश्यते, इदानीमिति त्वस्माकं वर्तमानरूपः कालः। अस्तित्वं सत्येव भवति। यावदेतच्चा-स्तित्वम्, तावत्पदार्थारभ्यमाणा क्रिया तिष्ठति। अतस्तदारभ्य यावत्स्वपरिसमाप्तिक्रियोपलक्षिता वर्तमानस्वरूपा स्मृतिः। सा च सार्वकालिकी आद्यन्तसहिता च भवति। सर्वशब्दो हि स्वास्ति-

त्वपर्यन्तवचनः । यद्यपि विनाशः न केषाञ्चिदास्ति, तथापि तादृशकालक्रमनिरूपणमारंभावसानरूपमिति व्याख्यातम् । तेनैव चास्तित्वं नास्तित्वञ्च बुध्यते । वस्तुतस्तु न नास्ति, नैवास्ति, नानस्ति, इत्यादि स्पष्टमवगम्यते । तस्मात्स्मृतिर्वर्तमानरूपा, विस्मृतिर्भूतपरा, अनुस्मृतिर्भविष्यद्रूपा चेति विज्ञायते । वर्तमानभूतभविष्यन्तश्च कार्यपराः । कार्यन्तु संसरणं क्रमरूपमारंभावसानयुक्तञ्चेति वेदितव्यम् । अत एव तस्य भूतभविष्यद्वर्तमानेषु न नियतत्वमस्ति । अत एव

"क्षणो मुहूर्तोऽथ घटिर्महाघटिः
दिवा तथान्हः प्रतिपक्षमासजाः ।
ऋतुस्तथा वर्षमुपोषणञ्च त-
द्युगान्तरः कालपरः समीयते ॥
स वर्तमानश्च स एव भूतको
स चैव कार्येण भविष्यरूपकः ।
क्रियापरा कालगतिर्विधीयते
चिदन्तरा सा स्मृतिरेव बुध्यते ॥

इत्याद्युक्तिः । नियमेनैव हि कार्यस्य वर्तमानभूतभविष्यदारोपणम् । तेन त्वारभ्य जननादामरणं ह्येकमेवायुरिति विज्ञायते । कार्यानुसारेणैव तत्तत्कालस्य वर्तमानत्वम् । तत्रैव हि स्मृतिरिति

बोध्यम् । यद्यपि तत्रापि भूतवर्तमानभविष्यद्गतिः, तथापि प्रति मुहूर्त्तं तत्तद्घटिकायां वा तेन तदस्तित्वमात्रे न भेदः। किन्तु कार्याणामपि कार्यान्तरत्वं क्रमिकत्वं च विज्ञेयम् । अत एव

" क्रमान्तरे क्रमं विद्यात्कार्येष्वस्तीह कार्यता ।
वर्तमानेऽपि भूतोऽयं भूते तस्यापिसंगतिः ॥
भविष्यत्यस्ति भूतश्च वर्तमानोऽपि तत्र हि ॥"

इति प्रवचनम् । दृश्यतामिह—मयाचैतत्कृतम् , एवं करोमि, करिष्यामि वा, अत्राहमित्येतद्रूपे वर्तमानता कारणरूपा च वर्तमानक्रिया; तत्र स्थितो भूतः भविष्यंश्च इत्युदाहृतम्। नाहमित्येतच्छब्दे भेदः । या हि यदा यस्यान्तर्गतः सोऽपि तदानीं तदेवेति बोध्यम् । अत एव कालस्य महागतिकत्वमुक्तं भवति ।

यद्यपि सर्वशब्देन त्रयाणा ग्रहणम् , तथापि सर्वशब्दो ज्ञानाधिष्ठितः । यावच्च ज्ञानमस्ति, तावत्तस्यैव सर्वत्वेन विवक्षा भवति । ततोऽन्यस्य नकारेण प्रवचनं संभवति । नकारस्याप्यनन्तत्वात्तस्य सर्वान्तर्गतत्वं विज्ञेयम् । अत एव संसारमात्रस्य वर्तमानता । यावत्संसरणरूपक्रियायाःसमाप्तिर्न भवति तावद्वर्तमानत्वम्। एतत्समाप्तेश्चानन्तत्वादनादित्वादसंभवाच्च सर्वं वर्तमानरूपमेव । एतदन्तर्गतं हि भवति मुहूर्तादिकं सर्वम् । भूतभविष्यद्वर्तमानभावना हि नियमेनानेका भवति। अत एव चान-

वस्थादोषोऽपि न भवति । किञ्च "एकाभ्यन्तरे त्वेकः एकस्मादेकः प्रजायते" इत्यादिवचनानां चरितार्थता । अत एव

"कालान्तरेऽपि कालःस्याद्रूपं रूपान्तरेऽपि च ।
कार्यान्तरेऽपि कार्यस्यात्सर्वं सर्वान्तरेऽपि च ।
महाकालभवं सर्वं कालात्परमगोचरम् ।
अनन्तानादिसंबद्धं तयोर्भिन्नं ततः परम् ॥
न शब्दविषयो विद्यान्न ज्ञानविषयस्ततः ।
अनिर्वाच्यमसक्तं च सर्वसक्तं समास्थितम् ॥
संसारस्यान्तरेऽप्येवं संसारोऽपि च लक्ष्यते ।
ब्रह्मान्तरे भवेद्ब्रह्म तद्विद्धीति परात्परम् ॥

इत्यादि वचनम् । तस्मादेव कालातीतत्वमुच्यते ब्रह्मणः । अतीतशब्देनापि तद्यथाप्रवचनं न स्यात् । अत एव कालाकालानकालातीतानतीतभिन्नमज्ञेयमतर्क्यं सर्वशब्देभ्यः परमोमित्येतदुक्तं भवति । दृश्यतामत्र—अकाराभ्यन्तरेऽप्यकारादयः, एवं ह्रस्वदीर्घप्लुतभेदेन, उदात्तानुदात्तस्वरितभेदेन, अनुनासिकाननुनासिकभेदेन च पुनः तेषां प्रत्येकमनन्ता गतिर्विज्ञायते ।

तत्सर्वमोमित्येतत्स्वरूपान्तर्गतं भवति । एवं लोकेऽपि एकनामवतः पुरुषस्य, कार्यपराः विद्वानविद्वानित्यादिसंज्ञाश्चोच्यन्ते, यथा—नामैकं विधीयते कस्यचिदिदमेव विद्वानविद्वान्धार्मिकोऽ

धार्मिकइत्यादिविशेषणविशिष्टं प्रतिपाद्यते । एवमेव वर्तमानेऽपि भूतादिव्यवहारः । तस्याप्यायुर्योगेन वर्तमानत्वमेव वक्तव्यम् । अत एव जन्मान्तरीयं ज्ञानं न मानवानाम् । केषांचित्तदपीति विज्ञायते । अतस्मरणं वर्तमानकालिकं चेति सिद्धम् । विस्मरणं च भूतकालिकम् । यदिदानीं दृश्यते, श्रूयते, ज्ञायते, तज्ज्ञानं नान्यजन्मनीति तद्विस्मरणं भवति । अनुस्मरणं च केवलमेतज्ज्ञानमात्रम् ।

यदिदानीं प्राप्यते, दृश्यते, ज्ञायते, श्रूयते; एवमाशाप्यन्यथा मन्यते, तदाशांशज्ञानमनुस्मरणमित्येवं बीजेनैकजन्मन्यप्येतत्त्रयाणां कार्यत्वं विज्ञायते । स्मरणविस्मरणानुस्मरणानि च तत्तज्जन्मक्रियानुसारीणि भवन्तीति विज्ञेयम् । यथा—अस्मत्पित्रा चैवं कृतम्, तत्काले ममैवमवस्थासीत्, न तदा मम पूर्णतया च वक्तृत्वशक्तिः, कीदृशी सा इति विस्मरणव्यापारः । परन्तु तत्करणमात्रस्मरणं किञ्चिद्रूपेणास्त्येव । पुनरेवं यथेदानीं दृश्यते, तथान्यदपि भविष्यति, तत्स्मरणानुरोधेन बोधकरणं विस्मरणव्यापारः भवति । स्मृतिस्तु साक्षादिति विज्ञेयम् । "ज्ञानस्यावस्थैवस्मृतिः" इति वचनम् । ज्ञानन्तु इन्द्रियैरेव भवति । यच्च दृष्टं तच्छ्रुतमित्यादि कथञ्चित्प्रकारेणैव चैकजन्मारम्यमाणस्य स्मरणं भवत्येव । यद्यप्येतादृशान्यपि कर्माणि वर्तन्तेत्वेकजन्मनि,

तथापि यन्न दृष्टं न श्रुतं च न तस्य स्मरणं भवति, अज्ञानपरत्वात् । तेन ज्ञानावस्थारूपा स्मृतिर्वर्तमानपरा विज्ञेया । विस्मृतिर्भूतपरा । अनुस्मृतिर्भविष्यत्पराचेत्यादि सिद्धम् । कामनांशभूतं ज्ञानम् । इच्छांशभूतं विस्मरणम् । कांक्षांशभूतं स्मरणम् । आशांशभूतमनुस्मरणं भवति ।

विचारस्य व्यवस्थया त्रित्वमवगम्यते । अत एव "लोककर्ता पितामहो ब्रह्मा सर्वं जानाति एवं शिवो विष्णुश्च सर्वं जानाति" इत्युक्तिः । अत्रायमाशयः ब्रह्मणः कालस्य वृत्तिर्ह्यनेकयुगान्तरा भवति, तस्मान्नित्यं स्मरति ब्रह्मा स्वजनम्, एवं शिवो विष्णुरपि चेति । अत्र स्मरणमात्रं वर्तमानपरम् । वर्तमानं च कार्यपरमिति मत्वा ज्ञानस्यावस्था स्मरणं भवति । तच्चात्मसंसारयोर्योगरूपम् । योगस्त्वेककालिकः । एतद्युज्यमानमपृथक्त्वम् । एवंकृते स्मरणस्याप्यतीतकालता वक्तव्या । अन्यथातु स्मरणं ज्ञानस्यावस्थारूपमिति न स्यात् । वस्तूनामस्तित्वानुरोधेन सार्वकालिकत्वं वक्तुमुचितमिति सिद्धम् ।

यद्यपि स्मरणं वर्तमानपरम्, तथापि वर्तमानान्तर्गतः भूतः भविष्यंश्चेति नियमेन प्रत्यक्षानुमाननिर्णयानामावश्यकत्व भवति । यदिदं वर्तमानं वर्तमानान्तर्गतं तत्प्रतिभासमात्रं प्रत्यक्षम् । तदन्तर्गतो यो भूतः सोऽनुमानम् । एवं भविष्यदन्त-

र्गतो निर्णयश्चेति बोध्यम् । स्मृतिप्रत्यक्षयोरप्येवं भेदः । यथा-युर्मध्ये क्षणादयो भवन्ति, तथा स्मृतौ प्रत्यक्षादयो भवन्तीति विज्ञेयम् । स्मृतिश्च ज्ञानरूपा । तत्साधनत्वेन प्रत्यक्षादयो भवन्तीति विज्ञेयम् । यद्यपि प्रत्यक्षेणैव स्मरणमस्ति दृष्टस्यैव स्मरणं भवतीति व्याख्यानात्, तथापि स्मरणस्य ज्ञाननिष्ठत्वात्, पदार्थानां दर्शनस्य कालिकत्वात्, तस्य क्रमिकत्वाच्च, क्रियाया आरंभस्तु जन्मनः तत्समाप्तिरन्तश्चेति व्याख्यानाद्वा प्रत्यक्षादिना स्मरणं न वक्तुं युक्तम्; किन्तु स्मरणसाधनतया प्रत्यक्षादिकमिति बोध्यम् । यदिदं पदार्थदर्शनं तत्प्रत्यक्षम् । दर्शनसाधनी शक्तिस्तु दर्शनात्पूर्वमपि द्रष्टुर्वर्तते । तज्ज्ञानन्तु तत्क्रियायाः योगेन स्मृतिसंज्ञकं भवति । तन्निश्चयार्थं प्राधान्यबोधनार्थं च प्रत्यक्षादिकमिति बोध्यम् । अत एव क्षणिकं प्रत्यक्षम् । तदपि ज्ञाननिष्ठमिति बोध्यम् । अत एव प्रत्यक्षानुमाननिर्णयज्ञानं यत्तदेव स्मरणमिति फलितम् । दृश्यतामिह–एवं पूर्वं ज्ञातं मया, तेनैवमनुमीयते, एवं ज्ञायते वा, तेनैवानुमीयते इति । एवमेवानुमान-प्रत्यक्षकृतः निर्णयः । तस्मात्तत्कालमात्रे भेदः । न तेषां कार्ये भेद-दर्शनम् । अत एव वर्तमानान्तर्गतौ भूतभविष्यन्तौ, स्मृत्यन्तर्गताः प्रत्यक्षानुमाननिर्णयाः, अनवस्थाविशिष्टाः अनन्ताः आद्यन्तरहिता बोद्धव्याः ।

त्रुट्यन्तरेऽपि कालत्रयनियमः । एवमायुषोऽन्तरेऽपि कालत्रयनियमः । स्थूलसंज्ञाभाषितेन त्रयाणां ग्रहणं भवति । तस्मात्स्मृतिपराः प्रत्यक्षानुमाननिर्णयाः बोद्धव्याः । महत्वाल्पत्वबीजेन संसारप्रदर्शनम् । इदमेव हि संसरणम् । तदेवानवस्था । तत्रैवावस्था काल्पनिकीति विज्ञेयास्ति । वर्तमानभूतभविष्यद्व्यवहारबीजन्तु विभुः काल एव । क्रमश्च तत्रैव संस्थितः । तत्क्रमस्यैवातीतानुरोधेन चैतत्त्रयव्यवहारः । वस्तुतस्तु सर्वं सर्वातीतमिति स्पष्टम् । यथा आत्मसंसारयोगेन सर्वस्य भासनम्, तथा सर्वत्र पृथक्त्वं भासते । अयमिदम्, त्वमिदम्, अहमिदम्, इत्यादि प्रत्यक्षेणैकत्वं पृथक्त्वञ्च बोद्धव्यम् । तदेवेति सर्वं सर्वत्र विज्ञेयम् । तथा स्मृतिविस्मृत्यनुस्मृतय इति विज्ञेयञ्च भवति । तस्या चाप्यतीतानतीतशब्देन ओमित्येतत्स्वरूपेण बोधो भवतीति विज्ञेयम् । तस्मादेव स्मरणप्रत्यक्षयोश्चैकवृत्तित्वं सूचितं भवति । स्मरणस्यापि प्रत्यक्षत्वेन वक्तव्यत्वमस्ति । यथा "स्मृतं हि प्रत्यक्षं प्रधानं तदन्तर्गतमनुस्मृतं विस्मृतञ्च" इत्यादिप्रवचनम् । एवमेव स्मरणं सार्वत्रिकं वर्तमानपरं तदायुर्निबद्धं विहितं युगान्तराणामन्यदापि " इत्युक्तम् । अत एव स्मरणविस्मरणानुस्मरणानि प्रत्यक्षानुमाननिर्णयपराणीति विज्ञेयानि भवन्ति ।

यद्यपि वर्तमानकालेऽप्यल्पकालिकानां दृष्टानां श्रुतानाञ्च

स्मृतिर्भासते, तथापि तज्ज्ञानं ज्ञानस्वरूपमेवेति विज्ञेयम्। दृष्टे श्रुते कृते ज्ञाते च पदार्थे तात्कालिकः यादृशश्चात्मनो ज्ञानप्रकाशः, तादृशं तदुद्धरणमपि भवतीति विज्ञेयम्। आत्मनश्च ज्ञानसंबद्धेन पदार्थेन स्मरणसंसरणं भवति। तज्ज्ञानानुसारिणी च स्मृतिर्विस्मृतिरनुस्मृतिश्चेति वेदितव्यम्। दृश्यतामिह—ध्यानावस्थितानां सर्वेषां पदार्थानां तदाश्रयत्वान्न तत्र संसारानुकरणमित्युदाहरणात्सर्वं खल्वात्मनो योग एवेति विज्ञेयम्। अत एव

"अनन्तवृत्तिर्हि स आत्मयोगस्संभावनायां हि यथानुचेष्टते।
तत्तादृशं ज्ञानमवस्थितं भवेत्ततः परं सर्वमनन्तपूर्वम्॥"

इत्यादि वचनम्। एवमेव "ज्ञानं यथा पुरुषोद्भवं विस्तृतं तथात्मनः प्रतीतिः पूर्वाय पूर्वस्मै अन्यथान्यस्मै वर्तते आसीत् तदन्तरं वा" इत्युक्तम्। तस्माज्ज्ञानस्वरूपानुसारिणी स्मृतिर्विस्मृतिरनुस्मृतिरिति सिद्धान्तः।

अस्य च प्रत्यक्षानुमाननिर्णयपरत्वे ज्ञानव्यापार एव मानं भवति। यद्यपि सर्वमपि ज्ञानमस्य हि सार्वकालिकञ्च स्मरणं, तथापि तन्न वक्तुमुचितं सर्वशब्दस्यातीतत्वात्। सर्वत्वेन प्रवचनमपि कालक्रमप्रयुक्तम्। अवस्थानियमेन हि सदृशतमदृष्टिः। तयाचैतत्सर्वमिदमेतत्पर्यन्तमिति विज्ञायते। तस्मात्सर्वशब्दोऽपि क्रमेण संबद्धः, न तत्रातीतता भवति। तस्मा-

त्सर्वज्ञानीत्यपि स्मृतिविस्मृत्यनुस्मृतीनां प्रयोजनं भवति । तच्च तत्राप्यावश्यकत्वेन तिष्ठतीति विज्ञेयम् । अत एव

"भवेद्युगान्तरं ज्ञानं स्यान्महायुगधीस्तथा ।
तथाकल्पान्तरज्ञानं महाकल्पान्तरस्य च ॥
मन्वन्तरस्य विज्ञानं महामन्वन्तरस्य च ।
ततः परः प्रसिद्धश्च कालसंख्याक्रमस्तथा ॥
अनुमानेन विज्ञेयं प्रत्यक्षं निर्णयावृतम् ।"

इत्याद्युक्तम् । एवमेव "कालानुभवो देशाभ्यन्तरे नानन्तप्रवचनः नातीतप्रवचनः अवशिष्टं सर्वस्मिन् क्रमे" इत्यादि श्रुतिभिश्च स्पष्टमुक्तं भवति । तस्माद्योगिनामपि सार्वत्रिकत्वमतीतत्वञ्च न वक्तुं शक्यम्, किन्तु प्राधान्यात्तत्तत्कालविज्ञानमेव । तत्रापि स्मृतिविस्मृत्यनुस्मृतयोऽपि भवन्तीति सिद्धान्तः ।

यद्यपि "त्रिकालज्ञं सर्वज्ञम्" इत्याद्युक्तम्, तथापि त्रिकालशब्देन कालत्रयस्यैकत्वबोधमात्रं वेद्यम् । यदेतद्वर्तमानभूतभविष्यद्रूपं तदेकमेवेति तज्ज्ञानफलं भवति । परन्तु तत्कालभवनमात्रस्य विज्ञानस्यासंभव एवेति निश्चयः । अत एव

"त्रिकालज्ञञ्च त्रितयं पूर्वमेकं परायणम् ।
अपरञ्च द्वितीयं च तृतीयञ्च ततः परम् ॥
यो न वेत्ति ब्राह्मणोऽपि स नवेत्ति च केवलम् ।

ब्रह्म च ब्रह्मणः कार्यं ब्रह्मतत्वात्मभावनाम् ॥"

इत्याद्युक्तम्। एवमेव "अभिसंविशन्ति पूर्वं परमुत्तरं ततः परमन्यच्छब्दभिन्नं परिगण्यश्च" इत्यप्युक्तम्। तस्मात्त्रिकालज्ञादयोऽपि तादृशाः स्वज्ञानानुष्ठितवर्तमानकाला इव कालपरा बोध्याः।

यद्यपि ब्राह्मणानां योगिनाञ्च सर्वस्मादपि पूर्वत्वमुच्यते, तथापि पूर्वोत्तरानियमाभावात्सार्वत्रिकमहंरूपमेवेति विज्ञेयम्। न पूर्वन्नापरन्नोत्तरमिति हि निश्चयः। तस्मात्त्रिकालज्ञं ब्रह्म। तच्चाद्यन्तरहितं क्रमाक्रमविशिष्टमनक्रममोमित्येव सिद्धं भवति। यद्यपि "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः" इत्याद्युक्तम्, तथापि अस्येत्यस्यार्थेन तत्सार्वत्रिकत्वं नोपयुक्तम्। ब्राह्मणः अस्य मुखमासीदित्यन्तर्वृत्त्या चास्येति प्रकरणावबोधकं भवति। पूर्वं ब्रह्मविषयस्याख्यातत्वात्, ब्रह्मणः मुखमासीदिति तदर्थमङ्गीकृत्य ब्राह्मणो मुखं ज्ञानमेवेति निर्णेयम्। "ज्ञानमात्रेण ब्रह्मणोऽजायत, आसीत्, अस्ति, भविष्यतीति च व्यवहारः। "ब्राह्मणन्तत्परं पूर्वोदयञ्च" इत्यादि श्रुतेरप्येवमेवार्थः। ब्राह्मणो मुखमासीत्, मुखमस्ति, मुखं भविष्यतीत्यपि च कालसाम्याद्गृह्यते। एवमेव राजन्यश्च योगभृत्, राजयोगावस्थितो राजन्य इति तदर्थात्। "बाहुः संसारः" इति वचनात्, बहुस्याम् "इति सङ्कल्पप्रवचनाच्च संसारकृदेव बाहुरित्यर्थो मन्तव्यः। संसारमा-

त्रस्य पृथक्त्वेन ज्ञानेऽप्यधिकारो विज्ञायते । यद्यपि युज्यते सर्व-मिति योगार्थः, तथापि तद्योजनकरणरूपव्यापारतः पृथक्त्वं सूच्यते । एवमेव वैश्योऽपि "जानुभ्यामजायत" इत्यत्र स्मरणार्थकः जानुशब्दो भवति, "स्मरणार्थको जानुशब्दः" इति प्रयोगात् । "वैश्यन्तामिन्द्रियाणां वशे यो न तिष्ठति" इति वचनात् दमदयादानाभियोगोक्त्या वैश्यशब्दार्थोऽवधेयः । एवम् "पद्भ्या शूद्रोऽजायत" इत्यत्र पादशब्दस्य सेवार्थप्रतीतिर्भवति । सर्वमिदमहमस्मीत्येवं मत्वा यत्सेवनम्, सर्वस्य संसारमात्रस्य; तदिदं शूद्रत्वम् । एवम्, "चन्द्रमामनसो जातः" अत्र मननं मनः इति व्युत्पत्त्या विचारपरो मनश्शब्दः । तस्यैव प्रकाशभवनत्वम्, विचारेणैव प्रकाशसंभवात् । तस्माचन्द्रमाः प्रकाशरूपः । सर्वान्तर्गतं त्रितयमेकं ब्रह्मैवेति ज्ञानं चन्द्रप्रकाशः । एवम्, "चक्षोस्सूर्योऽजायत" इत्यत्र चक्षुश्शब्दस्य प्रकाशपरत्वं वेदितव्यम् । प्रकाशात्स्वं प्रकाशं प्राप्य सर्वं स्वज्ञानपरिमितांशं प्रकाशयतीति तदर्थः। तदेवं ब्राह्मणो, राजन्यः, वैश्यः, शूद्रः, चन्द्रमाः, सूर्यश्च सर्वे तादृश ब्रह्मज्ञानपरा विज्ञेयाः ।

न तत्रातीतता वाच्या; किन्तु साक्षाच्छब्देन बद्धा । स्वात्मानं सर्वत्र जानातीति तद्भावः। न तेन ज्ञानात्परं तज्ज्ञानमतीतावस्थितमिति सिद्धम्, ज्ञानस्यानन्तत्वाद्ब्रह्मणोऽनन्तत्वाच्च ।

यद्यपि अनन्तं ब्रह्म विद्धि त्वमप्यनन्तः अन्यदप्यनन्तं सहितं समानं गुणकर्मयुक्तञ्च" इत्याद्युपदिश्यते, तथापि तदतीतत्वन्नोपयुक्तम्, किन्तु अन्तरतमदृष्ट्या चैतत्स्वरूपमुच्यते। आन्तर्येण हि सर्वो महान्, सर्वो लघुरिति सर्वज्ञत्वं किञ्चित्वञ्च सर्वत्र विद्यते। तस्मात्स्मरणस्यातीतत्वं सर्वत्रानुपयुक्तम्। ज्ञानमेवातीतमनतीतं समस्थं सर्वस्थमिति तु युक्तम्। कालक्रमसंख्यानुरोधिन्यान्तर्यं दृष्ट्या, त्रिकालज्ञोऽयं सर्वज्ञोऽयमल्पज्ञोऽयंप्रत्यक्षमिदं चेत्याद्युच्यते। अन्यथा तु ब्रह्मापि ब्रह्म न जानाति, ब्रह्मणश्चाज्ञेयत्वात्। अत एव

"अणोरपि सहस्रांशे तस्याप्येवं सहस्रके।
अंशेऽपि वर्तते सर्वं ज्ञानं तत्रापि दृश्यते॥
संसारो वर्तते तत्र ब्रह्मव्याप्तिश्च तादृशी।
संसरणमिदं नित्यं कालातीतं ततः परम्॥
योह्येवं वेत्ति तन्नित्यमिदं ब्रह्म सनातनम्।
सर्वत्रैवं सदावश्यं सर्वान्तर्गतमेव हि॥
तद्वृत्ति भासते नित्यं यत्किञ्चित्प्रतिभासते।
अनन्तमव्ययं विद्ध्यहमेतन्नेतिदुस्तरम्॥
आत्मानन्तमनाद्यन्तं तद्वियुक्तं परावरम्॥
यदेतद्भासते विश्वं तदप्येवं परोदयम्॥"

इत्यादि वचनम् । एवमेव "आत्मानात्मानौ दृश्यादृश्यौ निषेवस्थौ ब्रह्म विद्धि च सर्वथा" इति श्रुतिः । एवमेव

"एवं ज्ञानमिदं सर्वं प्रपञ्चस्त्रितयात्मकः ।
स्मृतिश्च विस्मृतिश्चैव रूपैरेवमनुस्मृतिः ॥

इत्युक्त्या च । तस्मात्स्मृतेः स्वरूपं सार्वकालिकमिति तदर्थदृष्ट्या बोध्यम् । अन्यथा तु "सादिस्सान्ता स्मृतिः" इति सर्वत्रोक्तम् । कालनिष्ठा चेत्यादि तद्विशेषणम् ।

यद्यपि ज्ञानमात्रस्याप्युत्पत्तिसंभवः, तथापि ज्ञानस्य क्रमिकत्वरूपावस्था स्मृतिरिति संज्ञान्तरेणोच्यते । अन्यथा तु यच्च स्मरण तदेवज्ञानं यच्च वा ज्ञानं तदेव स्मरणमिति वा चोदाहृतं भवेत् । वस्तुतस्तु ज्ञानमेव सर्वमिति सिद्धम् । उत्पत्तिकालमात्रैव स्मृतिरिति सिद्धान्तः । स्मरणविस्मरणानुस्मरणव्यापारोऽपि क्रमिकसंबन्धेन विज्ञेयः । विना च योगं पदार्थानां तदुत्पत्तेरसंभवात् , न सर्वत्र सार्वकालिकी तदुत्पत्तिरिति विज्ञेयास्यात्; किन्तु ज्ञानावस्था ज्ञापिकैवेति निश्चयः । अतएवाभावोऽपि "स्मृतेरेवं विस्मृतिर्नानुस्मृतिस्सर्वं खल्वाश्रयं स्वयम्" इत्याद्युक्तम् । अत्रापि स्मृतेरभावत्वेन प्रतिवचनम् । अभावप्रवचनतया ज्ञानावस्था मात्रस्यैव बोधः, ज्ञानस्यासंभवात् । ज्ञानमात्रेत्वतीततायाश्चामन्तव्यत्वेन स्मरणमात्रस्य साद्यन्तत्वमारंभाव-

सानविशिष्टत्वञ्च विज्ञेयम्। योह्यनादिः सोऽनन्तः, यश्चानन्तः स-चानादिरिति न्यायात्, सादेःस्सान्तत्वम्। सान्तस्य सादित्वञ्च बोध्यम्। यदिदमनाद्यनन्तं कालातीतं संसरणम्, तत्र क्रमा-ख्यानं साद्यन्तं आरंभावसाने च विद्धीत्युपदेशफलम्।

यद्यप्यभावस्यानादित्वं सान्तत्वेन भासते, तथापि भावा-भावयोरप्येकदेशित्वादनन्तत्वप्रवचनम्; यश्च भवति स एव विनश्यतीति लोकोदाहरणात्, भवनमात्रे एवाभावस्य गतार्थ-त्वात्। "शर्वशक्तिमद्ब्रह्मसदनम्" इति श्रुतेः, निषेधस्यापि शक्तिविशिष्टत्वेन वक्तव्यत्वं भवति। तस्मान्निषेध एवाभावः इति बीजात् भावाभावयोरेकदेशित्वमावश्यकमिति विज्ञेयं भवति। न भवतीत्यभावः भवतीत्येवमङ्गीकृत्य निषेधप्रवचनसमासः। तस्माद-स्तित्वमात्रं द्वयोरेकमेवेति निश्चयः। यद्यपि पदार्थद्वयस्य चैकका-लिकत्वमप्युक्तम्, तथापि भवनमात्रसत्तात्वेकैव। न भवतीत्य-नेन भवनाभ्युपगमः। एवं नास्तीत्युक्त्या च, अस्तीत्यभ्युपग-मेन यदस्ति तन्नास्तीति यत्तच्छब्दाभ्यां कालविशिष्टप्रवचनम्। शब्दमात्रस्यापि कालपरत्वमुक्तं भवति। तस्माद्द्वयोरनाद्यनन्तत्वं तदतीततायामप्युक्तं भवति। क्रमिकत्वे हि भावाभावयोस्सादित्व-सान्तत्वप्रवचनमिति विज्ञेयम्। अत एव

"भावाभावौ क्रियाख्यातौ द्वावेतावेककालिकौ।

अनाद्यनन्तौ विख्यातौ निर्विशेषणसंस्थितौ ॥ ”

इत्याद्युक्तिः। एवमेवास्तित्वमनस्तित्वञ्चास् प्रवचनतया तयोरन्यतरं भवति। तस्मात्स्मरणस्याभाववत्वं तद्भाववत्वञ्च युक्तं भवति। ज्ञानसत्ताप्राधान्यात्स्मरणभवनाभवने ज्ञाननिष्ठे। ज्ञानञ्चाद्यन्तरहितमनाद्यनन्तयोरपि परं भवति। तस्मात्स्मरणस्यापि ज्ञानान्तर्यतया नाद्यनन्तत्वं वक्तुमुचितम्। दृश्यतामिह—स्मरणन्त्वन्यपदार्थविषयकं भवति। अहमेतदोः स्मरणन्त्वतीतमेव। अस्मात्कालादहमास्मि एतदा नाहं भविष्यामीति नात्मनो बोधः। यद्यप्यहमत्रासामित्याद्युक्त्या चास्मात्कालादत्राहमस्मीति भवति, तथापि अत्र स्थानमात्रेणाहमर्थो बद्धो भवति। अहमेतदोश्चास्तित्वमनाद्यनन्तराहितमाद्यन्तयोः परं वेदितव्यम्। तस्मादेवातीतानतीतं तयोः परं ज्ञानम्, स्मरणविस्मरणानुस्मरणव्यापारम्, प्रत्यक्षानुमाननिर्णयाश्च, कामनादिकम्, कालप्रकाराः क्रमावश्यकत्वञ्च सर्वमोमित्येतत्प्रणवसंज्ञया बोध्यं भवति। त्रितयञ्च सर्वमोमित्यन्तर्गतं वेदितव्यं भवति। अहमित्यादिबोधस्तु पदार्थेन सह सर्वथा दृश्यते। तदेवाद्यन्तसहितं भवति। वस्तुतस्तु तस्यात्यतीतत्वमेव विज्ञायते। अत एवात्मानात्मनिषिद्धाश्च त्रित्वेन सर्वत्र चोक्तं भवति। आत्मा चाकारेण कथितः। अनात्मा च संसारस्तदुकारवाच्यः। मकारश्च तयोस्संबन्धनिषेधकः तयोः

परत्वेनावस्थितः । अत एव चैतयोः सन्धिमत्त्वमसन्धिमत्त्वञ्च सन्दिग्धं निश्चितं भवति ।

तस्मादकारोकारमकारान्तर्गतं सर्वं तदेव ब्रह्मेति व्याख्यानफलम् । प्रत्येकमप्येवं विज्ञेयम्, सर्वतः परम्, सर्वसहितम्, सर्वाभिरहितम्, सर्वस्वं विद्धीति । इदमेवोपदेशफलं भवति । एवमेव "स्मर्तव्यः श्रोतव्यो ज्ञातव्यो मन्तव्यो द्रष्टव्यो निदिध्यासितव्यः" इति हि श्रुतिर्वदति । तत्साधनायैव षडङ्गन्नियतम् । षड्भिरङ्गैः ब्रह्म वेदितव्यम्" इति श्रुतिः । तज्ज्ञानसाधनमिति तदाशयः । "षड्भिर्दृश्यते संसरणं षड्भिर्भासते ब्रह्म" इत्यपि च । तस्मात्सर्वमोमित्येतन्महामन्त्रस्थितं ब्रह्मात्मकं प्रणवसंज्ञकं भवतीति सिद्धान्तः ॥

॥ इति श्री महर्षिगार्ग्यायणप्रणीते प्रणववादे ॥

॥ द्वितीयं प्रकारयोगप्रकरणम् ॥

॥ संपूर्णम् ॥

ॐ



ॐ

॥ अथ तृतीयम् ॥

## ॥ क्रियाप्रकरणम् ॥



अथ प्रणवस्य योगप्रकारं विज्ञाय तत्फलं च क्रियारूपं ज्ञातव्यं भवति । प्रकारयोगश्चेच्छाज्ञानाख्यानरूपः । क्रिया च तद्योगफलं भवति । अतश्चात्र क्रिया व्याख्यायते । ओमित्य-न्तर्गतं भवति ज्ञानेच्छाक्रियात्रैविध्यम् । ज्ञानस्वरूपोऽयमात्मा भवति । इच्छा च निषिद्धप्रवचनरूपा । क्रिया हि कारणभूतव्यापाररूपा । संसारमात्रं हि विज्ञेयं भवति । कर्तुश्च क्रिया योगेनैव सर्वं प्रभासते । इति स्पष्टं भवति । विना च कर्तारं क्रिया ह्यनुत्पन्ना भवति । कर्ता च क्रिययाक्षि-प्यते । ता विना कर्तेति विशेषणं न कस्यापि भवतीति शब्द-शास्त्राभिमतं भवति । तस्मात्क्रियामात्रं कर्तृसहितमिति बोध्यम् । यद्यपि ज्ञानेच्छाक्रियास्वपि प्रत्येकं त्रित्वमुक्तम्, तथापि मुख्यं त्रितयमेवेति व्याख्यातम् । ज्ञानेऽप्येवं विज्ञायते । ज्ञाननिष्ठा क्रिया चेच्छा च भवति । एवमिच्छायामपि क्रिया ज्ञानञ्च । एवं क्रियायामपि ज्ञानमिच्छा च इति सर्वं त्रिविधं बोध्यम् । ज्ञान-

निष्ठश्च स्मरणादिव्यापारः । इच्छानिष्ठश्च कामनादिव्यापारः । क्रियानिष्ठश्च कर्तृकरणव्यापारः । एतेषां त्रयाणामात्मसंसारनिषिद्धानामेत्रावस्थाभेदेन नामभेदोऽपि विधीयते । यद्यपि त्रितयेऽवस्था नास्ति सर्वदा सर्वथा चानवस्थैव, तथापि तस्यारंभावसानान्तविशिष्टत्वहेतुना क्रमिकत्वं विज्ञेयम् । तस्मादेतज्ज्ञानेच्छाक्रियासंबन्धेन नवधा वृत्तिरिति वेदितव्यम् । दशमाङ्कस्तु तेषांसिद्धान्तप्रवचनार्थ इति पूर्वं निरूपितं ।

यदपि " षड्भिरंगैः ब्रह्म विद्धि षड्भिर्दृश्यते सर्वम् " इत्याद्याख्यातं भवति, तेनद्वादश प्रतीतिरिति, तन्न ब्रह्मणस्तज्ज्ञानस्य चानन्तत्वात्सांख्यं विज्ञेयं भवति । षड्भिरंगैरित्यस्यार्थस्तु, ज्ञानेच्छाक्रियाणां च प्रत्येकं द्विविधेन भेदेन ज्ञानक्रियादिनिर्देशेन च षट्प्रकारा भवन्तीति । निषिद्धमात्रन्तु तयोरंतर्गतं भवति, तस्य संबन्धरूपत्वात्, संबध्यमानानां ग्रहणेन तद्ग्रहणमिति नियमात्, समुदायग्रहणेनैकदेशग्रहणमिति न्यायाच्च । यद्यपि सत्ताप्राधान्यादेकदेशग्रहणेनापि समुदायग्रहणमित्युक्तम्, तथापि चैकदेशात्समुदायो बलीयानिति व्याख्यानात् समुदायान्तर्गत एव चैकदेश इति सिद्धम् । बहूनामेकदेशिनां समूहस्समुदाय इति समुदायशब्दार्थत्वात्समुदायान्तर्गत एव चैकदेश इति विज्ञेयम् । एकदेश इत्युक्त्या केवलं पृथग्रूपस्य तत्तद्देशस्यैव

ग्रहणम् । यद्यपि तत्तत्कार्यं पृथगेवास्ति, तथापि ज्ञानक्रियाभ्यां बद्धत्वात्तयोः पृथग्भूतत्वेन न तत्कार्यं भवतीति निश्चयः । षडङ्गैः पुनः ब्रह्मबोधोत्पत्तिरुच्यते । यद्यपि षड्भ्योऽन्यापि संख्या वर्तते, तथापि त्रितयात्मकत्वात्षडन्तर्गतं सर्वं वेदितव्यमित्युक्तम्, "ज्ञानं त्रितयात्मकं त्रितयात्मिका च क्रिया" इत्यादिवचनात्, पक्षद्वयेन ब्रह्म विद्धीत्युक्तेर्वा । तदिदं च पक्षद्वयं ज्ञानक्रियारूपम्, इच्छा तु संबन्धरूपिणी द्वयोर्मध्यवर्तिनीति निश्चयः । क्रियाज्ञानसंबन्धाश्चेति षट्प्रकाराः ब्रह्मबोधाय सर्वत्र स्पष्टमुक्ता भवन्ति। अन्यथा तु संख्याया इव प्रकारस्यापि अनन्तत्वमतीतत्वञ्च बोध्यं भवेत् । अत एव, "सर्वाणि शास्त्राणि च समाश्रितानि षड्भिः प्रकारैरेव भवन्ति चान्तर्विज्ञानतः" इत्युक्तम् । एवमेव

" अनन्तमव्ययं ज्ञानं तत्प्रकारश्च तादृशः ।
अनन्तं ब्रह्मविध्येवं सर्वं सर्वेण वेदितुम् ॥
षडङ्गं तत्प्रकारस्थं क्रियाज्ञानपरायणम् ।
षडङ्गैर्बुध्यते ब्रह्म षड्भिर्ब्रह्म प्रदृश्यते ॥
चत्वारस्तस्य सिद्धान्ताः क्रियाज्ञानपरावृताः ।

इत्यादि वचनम् । तस्मात्क्रिया ज्ञानमिच्छा चेति त्रयम्, एतेषामेकत्वरूपश्चतुर्थ इति च चत्वारो ब्रह्मसिद्धान्ता भवन्ति । एतेषां चतुर्णां ब्रह्मस्वभावप्रवचनपरत्वं विज्ञायते ।

ते च वेदाश्चत्वारो भवन्ति ऋग्यजुस्सामाथर्वाणश्चेति। ज्ञानप्रवचनपरो ऋग्वेदः। क्रियाप्रवचनपरो यजुर्वेदः। इच्छाप्रवचनपरं साम। एतत्त्रयाणामेकबीजत्वेन समाहारप्रवचनपरोऽथर्ववेदः। प्रत्येकं त्रैविध्येन मन्त्रब्राह्मणोपनिषदां प्रवचनम्। मन्त्रश्च ज्ञानप्रवचनपरः। ब्राह्मणन्तु क्रियाप्रवचनपरम्। उपनिषदश्चेच्छाप्रवचनपराः। त्रयाणामेकबीजत्वेन प्रवचनपरं तन्त्रमिति प्रतीयते। मन्त्रब्राह्मणोपनिषत्तन्त्राणां चतुर्णामपि प्रत्येकं चत्वारो भेदाः संभवन्तीत्यनन्तफलं भवति। तस्मात्सर्वेषु वेदेषु ऋग्यजुस्सामाथर्वसु मन्त्रब्राह्मणोपनिषत्तन्त्राणि च परिदृश्यन्ते। मन्त्रस्तावत्संहितारूपः। संहीयन्ते संक्षीयन्ते सर्वमस्मिन्निति संहिता। वेत्ति वेदयतीति वा वेदः। वेदश्च ज्ञानरूपः ब्रह्मनिष्ठः। अत एव ब्रह्म वेदस्वरूपमित्युच्यते "वेदवेत्ता भवेद्ब्रह्म" "सस्वयं ब्रह्म वेदवित्" इत्याद्युक्तम्। तस्माच्चतुर्णामेतेषामेव वेदत्वेन विवक्षा भवति। ऋग्वेदसंहिता इत्यस्य ऋच्यते ज्ञायते ब्रह्मतत्वं सर्वं संक्षिप्तं यया, सा ऋग्वेदसंहिताइत्यर्थः। यजते क्रियते ब्रह्मतत्वभासनं संक्षिप्तं यत्र सा यजुर्वेदसंहिता। साम्यते इष्यते ज्ञानक्रिया इति सामवेदसंहिता। तथा चार्थ्यते प्राप्यते ब्रह्मतत्वमेतत्त्रयफलमित्यथर्ववेदसंहितापदार्थः। चतुर्णामेतेषामेवमर्थाङ्गीकारेण ज्ञानक्रियेच्छाः, तत्फलञ्चवेदिव्यतम्। अत एव

"ऋग्यजुस्सामाथर्वणो ज्ञात्वाब्रह्म सनातनम् ।
आत्मानात्मनिषिद्धञ्च पृथक्कलितयात्मकं ॥
चतुर्भिर्वेदनीयं तद्ब्रह्मतत्वमनन्तरम् ।
अनाद्यनन्तं संपन्नं सर्वाद्यंतविवर्जितम् ॥
अतीतं वानतीतं वा तत्त्रयं वेदविद्भवेत् ।
ऋग्वेदश्च ज्ञाननिष्ठः यजुर्वेदः क्रियापरः ॥
इच्छापरः सामवेदः सिद्धान्तोऽथर्वसंज्ञकः ।
चतुर्णाञ्च समाहारः ब्रह्मसंज्ञा परावरा ॥
प्रत्येकं तत्र विज्ञेयं भ्रमदोषयुतान्तरम् ।"

इत्यादि वचनम् । एवमेव "ऋग्यजुस्सामाथर्वप्रतिष्ठितं ब्रह्म विद्धि" इति श्रुतिः । तस्माच्चतुर्णां समाहाररूपं ब्रह्मतत्वमित्यवगन्तव्यम् । यद्यपि "ज्ञानं ब्रह्मपरात्परम्" इति महावाक्यैः ब्रह्मस्वरूपं स्पष्टमुक्तं भवति, तथापि तत्र चत्वारः योगाः दृश्यन्ते, योगविभागात् । ज्ञानमित्येको योगः, ब्रह्म इत्येकः, एवं परात्परमिति योगद्वयात्मकं भवति । ज्ञानन्त्वात्मनिष्ठम्, ज्ञायते इति तदर्थात् । ब्रह्मेति निषेधपरमलक्ष्यम्, ब्रह्मते आच्छादयते इति तदर्थात् । परादिति संसरणार्थः क्रियानिष्टः, "संसरणं परमिदं विश्वं पूर्वमात्मा" इति वचनात् । द्वितीयञ्चपरमित्येतत्परमतत्वावबोधकं भवति । तस्माद्यदिदं ज्ञानं ब्रह्मपरञ्च, तदेव परं विद्धिति

तदर्थः, तस्माच्चतुर्भिः ब्रह्मतत्वमुपस्थीयते । अत एव " नायमात्मा प्रवचनेन लभ्यः " इत्याद्युक्तम् । न केवलेन प्रवचनेन लभ्योऽयमात्मेत्यादि तदर्थः । एवमेवायमात्मा केवलेन ज्ञानेन, कर्मणा, तदिच्छया वा लभ्यते । चतुष्टयं ब्रह्मविद्धीत्थमात्मानमित्यादि सिद्धम् । अत एव

"ऋग्वेदैर्वा यजुर्वेदैः तत्सामाथर्वसंज्ञकैः ।
प्रत्येकंतन्निरर्थस्याच्चतुर्भि र्ब्रह्मबुध्यते ॥ "

इत्यादिप्रवचनम् । एवमेव

" स ऋग्वेदसिद्धो विशुद्धोऽयमात्मा
यजुर्वेदमूलप्रयुक्तोऽयमात्मा ।
तथा सामगस्सामगीतोऽयमात्मा
ह्यथर्वस्थितो युक्तिमूलश्च वेद्यः ॥
सदा वेदवेद्यो निषिद्धोऽयमात्मा
विशुद्धः परश्चामृतस्थोऽयमात्मा ।
मृतः कार्यरूपो गुणस्थोऽयमात्मा
स ज्ञान विज्ञानसिद्धोऽयमात्मा ॥
तथा ज्ञाननिष्ठः प्रमेयोऽयमात्मा
क्रियावृत्तिसिद्धः प्रमाणोऽयमात्मा ।
प्रमाणः प्रमेयस्तथासंशयस्थः

स च व्यापकोऽव्यापकश्च प्रमोदी ॥
सदानन्दमूर्तिस्समानन्ददीप्तिः
स वाचामतीतः सबुद्धेरतीतः ॥"

इत्यादिप्रवचनम् । एवमेव

"न ज्ञानाल्लभ्यते ब्रह्म केवलेन च कर्मणा ।
नेच्छया लभ्यते ब्रह्म ब्रह्मतत्वं चतुष्टयम् ॥"

इत्याद्युक्तिः । तस्मादृग्यजुस्सामाथर्वणां वेदानां न प्रत्येकं ब्रह्मतत्वावबोधकत्वं संभवति ।

ब्रह्मतत्वपरिज्ञानार्थमेव हि सर्वेषां वेदानामावश्यकत्वं विज्ञायते । यद्यपि ऋग्वेदेन "ज्ञानान्मुक्तिः" इत्यभिहितं मुक्तिश्च ब्रह्मविज्ञानं ततश्चात्र मोक्षसाधनज्ञानस्य मुख्यत्वेनाव्यवहितत्वेन च प्रतिपादनं भवति, तथापि ज्ञानमात्रस्य सर्वान्तर्गतत्वमङ्गीकृत्य तदर्थोपयोगः। ज्ञानक्रियेच्छानामेव हि मोक्षसाधनत्वं मुख्यत्वेन विज्ञेयम्, "सिद्धमस्ति सर्वं सर्वाश्रये" इति व्याख्यानात् । "अण्वपि चैकं ज्ञानेन ब्रह्मज्ञानमुपलभेत" इत्यादिवचनानामप्येवमेवार्थः। आन्तर्येणैव हि अणुत्वमहत्वादिकं वेदितव्यम्, आन्तर्यदृष्ट्या सर्वस्याणुत्वं महत्वञ्च सिद्ध्यतीति "सर्वं खल्वणु-बृहत्" इति वचनाच्च । अतः सर्वमणु, सर्वं बृहत् इति स्पष्टमवगम्यते । एकैकस्याप्यणोरपि ज्ञानेच्छाक्रियाणां त्रिसृणां विद्य-

मानत्वेन ब्रह्मत्वं सिद्धम् । तस्मादेकस्याप्यणो दर्शनश्रवणादिभि-र्ब्रह्मज्ञानं भवति। तेन ब्रह्मत्वं सर्वातीतत्वानुसन्धानेन नोपलभ्यते; किन्तु सर्वेषामणूनां महताञ्च समुदायस्वरूपं चैकवृत्यतीतमनन्तञ्च ब्रह्मेति वेदितव्यम्। इत्थंभूतं बोधमात्रं ब्रह्मज्ञानम्, तदेव मोक्ष इति व्याख्यानं फलितं भवति । तस्माज्ज्ञानस्य साधनत्वं मुख्यत्वेनाव्यवहितत्वेनैकदेशिकत्वेन च नोपयुक्तं; किन्तुज्ञानेच्छा-क्रियासंबन्धस्यैव मोक्षसाधनत्वं विज्ञेयम्। अत एव

"ज्ञानेन कर्मणा सिद्धं ब्रह्मतत्वं तदिच्छया ।
त्रयात्मकमिदं सर्वं तद्विच्च ब्रह्मविद्भवेत् ॥
सा ज्ञानेच्छाक्रियारूपा शक्तिर्येन विभाव्यते ।
वेदवेत्ता भवेत्सोपि सर्वज्ञानपरायणः ॥
ऋग्यजुस्सामाथर्वभिरेवं ज्ञानं निरूपितम् ।
ज्ञात्वा वेदान्तसिद्धान्तं ब्रह्मरूपं स्वयं लभेत् ॥"

इत्यादिवचनम् । एवमेव "साङ्गान्वेदानधीत्यैवं ब्रह्मलोके महीयते" इत्याद्यपि च । तस्माच्चतुर्णां वेदानामृग्यजुस्सामाथर्वणां तत्वं चैवज्ञातव्यं भवति । यद्यपि

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अभिप्लुत ब्रह्मचर्यः गृहस्थाश्रममाविशेत् ॥"

इत्याद्युक्तम्, तत्र चैकवेदाध्ययनाधिकाराद्येकेनापि ब्रह्म

भसंभवः, तथापि तद्वाक्यार्थेन चतुर्णामेकतन्त्रत्वं सिध्यति । वेदानित्युक्त्या चतुर्णां वेदानां ग्रहणम् । एवमधीत्य ब्रह्मचर्यञ्च ब्रह्मवदाचरणं साक्षाद्ब्रह्मस्वरूपं भवति । वेदौ, वेदं वाधीत्य ब्रह्मचर्यादभिप्लुतो भवतीति तदर्थः । ब्रह्मचर्यादभिप्लुतभवनञ्च ब्रह्मतत्वाभ्यास एव, ब्रह्मचर्यादनभ्यस्तब्रह्मतत्वः गृहस्थाश्रमं नाविशेदिति फलितार्थः । गृहस्थाश्रमप्रवेशस्तु ब्रह्मचर्यादेवेति नियमात् । ब्रह्मचर्याभिप्लुते सत्यत्वमुक्तं भवति । यावद्वेदमात्रं ब्रह्मतत्वावबोधकं न जानाति, न तावद्गृहस्थाश्रमरूपं संसारकार्यं सम्यग्भवतीति निश्चयः

"संसारे त्रितयं कर्म ज्ञानेच्छाविहिता क्रिया ।
एवं संदृश्यते यत्र तद्गृहस्थाश्रमं भवेत् ॥
त्रयाणां हि समाहारः संसारस्सार एव हि ।
यः करोति विधानेन स गृहीपरमो मतः ॥"

इत्यादिवचनात् । यावत्त्रितयं ज्ञानेच्छाक्रियारूपम्, तत्संबन्धञ्च न जानाति; तावद्गृहकार्यमयुक्तं भवति । क्रमोऽप्येवमाश्रमाणाञ्च दृश्यते ·

"प्रथमं ब्रह्मचर्ये हि ब्रह्मतत्वनिरीक्षणम् ।
साङ्गोपाङ्गमधीत्यैवं ब्रह्मवेदं चतुर्विधम् ॥
गार्हस्थ्यञ्च लभेत्तेन वानप्रस्थ्यं लभेत्ततः ।

संन्यासं तत्परंविद्यात्त्रयाणां फलमेव यत् ॥ ”

इत्याद्युक्त्या ब्रह्मचर्यम्, गार्हस्थ्यम्, वानप्रस्थः, संन्यासश्चेति ह्याश्रमाणा क्रमो विधीयते। वेदानामेकस्य द्वयोस्त्रयाणां चाध्ययनेन ब्रह्मचर्यसाधनं न सम्यगुत्पन्नं भवति। अतश्चत्वारो वेदाश्चाध्येतव्याः। अधीत्यैवं ब्रह्मचर्यं प्राप्य ब्रह्मतत्वञ्च यथार्थं विज्ञाय ततश्च एवं गार्हस्थ्यं व्रजेत्। यावदात्मानात्मनिषिद्धानां त्रयाणां न भवति संबन्धः, न तावत्संसारस्य स्थितिर्भवति। तस्माच्चतुर्विधं ब्रह्मैकतत्वं वेद्यम्। तादृशार्थकाश्चत्वारो वेदाश्चाध्येतव्या भवन्तीत्युपदेशः। तस्माद्वेदचतुष्टयमधीत्य स ब्रह्मचर्यस्य पुरुषस्य ग्रहस्थाश्रमधारणम्। आश्रमे च तस्मिन् “सर्वं खल्वात्मवत्, ब्रह्मवत्, आवश्यकम्” इति नियमेन कर्म कर्तव्यम्। न तव, तवेदम्, ममेदं, तवायम्, ममायमिति। अन्यस्येदञ्चेत्यादि तु प्रपञ्चभासनं भवति।

“ सर्वं खल्विह सर्वस्य सर्वमावश्यकं भवेत्।
सर्वथा सर्वदा सर्वं ग्रहस्थाश्रमलक्षणम् ॥
ज्ञानेन क्रियया चैवमिच्छया सर्वसाधनम्।
ग्रहिणां परमोधर्मः सर्वस्यैवाभिपूजनम् ॥ ”

इत्याद्युक्तम्। अत एव “सर्वेषामाश्रमाणां श्रेष्ठोऽयं ग्रहस्थाश्र” इत्युक्तम्। अत एव

" त्यागार्थं ब्रह्मसिध्यर्थं गृहस्थाश्रमधारणम् ।
सर्ववेदफलञ्चैव स्वार्थं संत्यज मानसम् ॥
एवं परार्थं संत्यज्य परमार्थं हि चिन्त्यताम् ।
यत्स्वार्थं यत्परार्थं च ते स्याता बन्धनार्थके ॥
तस्मात्सर्वमुमुक्षूणां परमार्थं परायणम् । "

इत्याद्युक्तिः । किञ्च

" ब्रह्मचर्यमनुप्राप्य ज्ञात्वा ब्रह्म सनातनम् ।
त्वयात्मकमिदं सर्वं बुध्वा सर्वं परावरम् ॥
गृहस्थाश्रममास्थाय कार्या सेवा मनीषिणा ॥ "

इत्यादि वचनम् । एवमेव

" अतिथ्यभ्यागतानाञ्च तथा च ब्रह्मचारिणाम् ।
यतीनां कर्मशुद्धानां तथासंन्यासिनामपि ॥
वनस्थस्वाश्रमस्थानां सर्वं दत्वा तु भोजयेत् ।
पूजा कृत्वा तु सर्वेषां साक्षाद्ब्रह्मस्वरूपतः ॥
मुक्तो भूत्वा समानन्दं ब्रह्मतत्वात्मकं परम् ।
एतदेवाश्रमे युक्तं सर्वेषां परमाश्रयम् ॥
ब्राह्मणा योगिनो मुक्ताः महात्मानस्तथैव च ।
ईश्वरश्च महाविष्णुः गृहस्थास्सर्वतः पराः ॥
प्रवृत्तास्सर्वकार्येषु निवृत्तास्सर्

स्वयं सिद्धास्समात्मानः सर्वे स्वात्मनि पश्यन्ति ॥ "
इत्यादिवचनाद्वा । आश्रीयन्तेऽस्मिन्नित्याश्रमः इति तदर्थात् , ज्ञानेच्छाक्रियासंबन्धरूपेण च चतुर्णामाश्रमत्वमुक्तं भवति । ब्रह्मचर्यं हि ज्ञाननिष्ठम् , गार्हस्थ्यं, क्रियानिष्ठम, वानप्रस्थश्चेच्छानिष्ठः, संन्यासः संबन्धपरः । अत एव

" नाभिप्लुतो ब्रह्मचर्ये न गृहेऽभिप्लुतस्तथा ।
न वानप्रस्थे संन्यासे "

इति वचनम् । अभिप्लुतः सर्वथा सिद्धः इत्यर्थः । तस्मादनभिप्लुतवारणार्थं पूर्वश्लोकफलम् । वेदनामेकंद्वयं वा नाध्येतव्यम् ; किन्तु वेदान्सर्वानधीत्य गृहस्थाश्रमः सेव्यतामित्युपदेशः । ब्रह्मचर्याश्रमे च सर्वं ब्रह्मतत्वं ज्ञातव्यम् । तथा ज्ञातब्रह्मतत्वः गृही भवेत् । तत्र ममकारव्यापारत्यागो भवति । दृश्यतामिह—गृह स्थाश्रमे यश्च पदार्थः प्रथमं स्वात्मार्थ एवेत्यभिमन्यते तत्र कळत्रव्यवहारेणांशद्वयं भवति, ततः पुत्रादिव्यवहारेण त्रयः चत्वारः पञ्च इत्यादयः बहवः, एवं तद्भागे एव मित्रादयोऽप्यनेके संबन्धिनः प्रतिष्ठन्ते, सत्येवं कृते कृतेन सर्वं विश्वं स्वात्मेव बुध्यते सर्वस्यैकत्वात् , इति हि लोकोदाहरणम् । यो हि ब्रह्मचर्ये ब्रह्मतत्वं पूर्णं जानाति तेनैव कृतमस्ति सर्वैस्सह कौटुंब्यम्; स एव चैकवृत्तिः, भवतीति तत्फलम् । एवं कृत्वा वानप्रस्थाश्रमं

इच्छारूपं लभेत् । तत्र चैवं ज्ञानं यत्किञ्चिदस्ति, कृतं करोमि, करिष्यामि वा तत्सर्वमावश्यकम् । न मदीयम्, त्वदीयम्, अन्यदीयमिति, निषेधरूपं तत्फलम् । संन्यासे त्विदमपि न । सम्यङ्न्यस्यति कर्म सर्वं प्रागनुष्ठितम्, इति संन्यासशब्दार्थो ह्यव-गम्यते । नावश्यकं नानावश्यकञ्च न सर्वस्य नास्माकम्, यच्च किञ्चिदस्ति तत्त्रितयमेव, इति तदाश्रमबोधः। ब्रह्मचर्ये तु तादृ-शबोधमात्रम् । तदाचरणं गृहस्थाश्रमे, वानप्रस्थे हि तन्निश्चयः, तन्मन्तव्यत्वं संन्यासे, इति चतुर्णां भेदः । वस्तुतस्तु

"ब्रह्मचारी गृहीनैव वन्यसंन्यासिनौ न च ।
सर्वदा सर्वथा युक्तमावश्यकमिदन्ततम् ॥
इदं साक्षाद्ब्रह्मरूपं सच्चिदानन्दविग्रहम् ।
ओमित्येतत्त्रयाख्यातं वेदितव्यं जगन्मयम् ॥"

इत्यादि प्रवचनम् । ब्रह्मचर्यं गार्हस्थ्यं वानप्रस्थः संन्यासश्चेत्या-दीनांचतुर्णां समूहः, तद्भिन्नश्च वा न ज्ञेयः, तस्य सार्वकालि-कत्वादतीतत्वाच्च । अत एव

"नायं वर्णाश्रमी चात्मा तदन्यन्नैव मन्यते ।
स सर्वं खल्विदं सर्वं सर्वाश्रयमतः परम् ॥"

इत्याद्युक्तम् । तस्माद्वर्णाश्रमधर्मस्तु, यावत्संसरणमात्रम् । तत्सर्वं ब्रह्मबोधप्रकारकमेवेति विज्ञेयम् । अतः

"न ब्राह्मणक्षत्रियवैश्यशूद्राः नाहं तथेति प्रतिबोधवर्ती ।
आत्मा विरूपो निजबोधरूपो विज्ञानमूलो निखिलाश्रयश्च॥
न ब्रह्मचारी न गृही वनस्थः संन्यासरूपो न च धर्मरूपः ।
सर्वं परित्यज्य विहाय सर्वतः सर्वान्तरं विद्धि सनातनंमाम्॥"

इत्याद्युक्त्यावा । एवमेव

"ज्ञानक्रियेच्छाविहितं त्रयाणां ब्रह्मस्वरूपं हि च सत्यरूपम् ।
ज्ञानान्तरं ज्ञानमनन्तगम्यं वेदस्वरूपं परिचिन्तनीयम्॥"

इत्यादिप्रवचनाद्वा। तस्मात् वेदानामेकस्य द्वयोस्त्रयाणां वा चाध्ययनेन न ब्रह्मस्वरूपविज्ञानवान्भवेत्; किन्तु साक्षाद्वेदचतुष्टयमधीत्य सर्वान्तरं सर्वमूलं सर्वस्थं सर्वं ब्रह्मेति ब्रह्मज्ञानन्तादृशमाप्नोति । इदमेव मोक्षः परमानन्द इति वेदितव्यम् । तस्मादृग्यजुस्सामाथर्वणां चतुर्णां वेदत्वेन प्रवचनम् । तेषान्तत्त्वं हि ब्रह्मप्रवचनरूपम् । तच्चैकमेवेति सिद्धं भवति ।

सर्वार्थं हि वेदविधानमिति विज्ञायते । सर्वस्य सृष्टिमात्रस्य कार्यस्य, मूलभूतो विषयस्तत्र विज्ञेयः । यद्यपि संसारेऽप्यनन्तो भेदः, तथापि तत्र सर्वस्य भवनव्यापारस्वरूपमात्रं तथाख्यानम् । चत्वारो वेदास्तु स्वयमेव सिद्धाः, महाविष्णुसमुदिताः भवन्ति। ज्ञानेच्छाक्रियाः ,तत्समाहारश्च संसरणमेव । संसरणेऽपि तस्मिन्क्रमेण महत्वलघुत्वनियमात्, सर्वेषां साधिपतित्वं विज्ञेयम्

संसारस्य चानेकेऽधिपतयः; यो हि यस्याधिपतिः तदधीनं तादिति बीजात् । तदधीनाश्चारंभावसाननियमेन क्रमेण च भवन्तीति विज्ञेयम् । अत एव ब्रह्माण्डम्, विश्वं, जगत्, संसारश्चेति चत्वारो भेदाः । नियन्तारश्च तेषां चत्वारः महाविष्णुः, तथाविष्णुः, शिवः, ब्रह्माचेति । अणोरारभ्य तत्पर्यन्तं ज्ञानव्यापारश्चास्ति । अतः परमपि चैतादृशश्च क्रमोऽप्यस्ति । तस्माच्चत्वारो भेदाः; ज्ञानेच्छाक्रियासमाहाराः नियमेन बोध्या भवन्ति । महाविष्णौ हि सर्वेषां समाहारः । अतस्तद्ग्रहणं पृथगेव चोच्यते । अत्र ज्ञानेच्छाक्रियाः, ब्रह्मविष्णुशिवाश्चेत्युच्यन्ते । एतेषां त्रयाणां पृथगाख्यान नियमेन वेदः त्रयी विद्येति प्रसिद्धः । चतुर्थो वेदस्तु समाहाररूपः सिद्धान्ततत्वः । अत एव

"वेदत्रयमधीत्यैवं ब्रह्मतत्वं विचिन्त्यताम् ।
अथर्वणा समाहारं ज्ञात्वा विद्धि परावरम् ॥
परं परायणं तत्त्वं चतुर्थं ब्रह्मसंज्ञकम् ।
तज्ज्ञानेच्छाक्रियारूपं ज्ञात्वा मोक्षो हि लभ्यते ॥
भाव्यते जीवता मुक्तिः कार्यं तस्यापि तादृशम् ।
संसारोऽयमनाद्यन्तः ब्रह्ममूलो विधीयते ॥
त्यक्त्वा सर्वाणि कर्माणि नानाज्ञानावृतानि च ।
इच्छारूपाणि संत्यज्य धार्यतां परमं मतम् ॥

ऋग्यजुस्सामाथर्वभिर्ब्रह्मतत्वार्थबोधकैः ।
प्रमेयं ब्रह्म तत्तेजः कालातीतं जगन्मयम् ॥ ”

इत्यादिवचनम् । तस्माद्वेदानां साङ्गोपांगानां स्वरूपम्, तदध्ययनावश्यकत्वम्, तदध्येतृत्वरूपञ्च वेदितव्यं भवतीत्यवगम्यते ।

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे
क्रियाप्रकरणे वेदतदध्ययना-
ध्येतृस्वरूपनिरूपणन्नाम
॥ प्रथमस्तरङ्गः ॥

ॐ



ॐ

## ॥ अथ द्वितीयस्तरङ्गः ॥



अथ चतुर्णां ऋग्यजुस्सामाथर्वणां वेदानामधिपतयः, महाविष्णुविष्णुशिवब्रह्माणश्च विज्ञेया भवन्ति । महाविष्णोश्च संभूतः समाहारप्रवचनपरोऽथर्वणो वेदः । विष्णोस्सकाशाज्ज्ञान-

निष्ठश्च ऋग्वेदः ।यजुर्वेदः क्रियानिष्ठश्च ब्रह्मणः । शिवश्चेच्छानिष्ठः सामवेदः । यद्यपि ऋग्यजुस्सामाथर्वाणश्चेति क्रमः दृश्यते, तथापि प्राधान्यबोधनाय आत्मनिषिद्धसंसारदृष्ट्या तादृशं त्रितयत्वम्, चतुर्थः समाहार इति च वेदितव्यम् । अत एव

" ज्ञाननिष्ठो भवेद्विष्णुः क्रियानिष्ठः प्रजापतिः ।
इच्छानिष्ठः शिवस्साक्षान्महाविष्णुस्समाहृतः ॥ "

इत्युक्तम् । एवमेव

" ज्ञानेच्छे च क्रियाचैव महाविष्णुरितीरितम् ।
ज्ञानं विष्णुरिति प्रोक्तं क्रिया ब्रह्मा सनातनः ॥
इच्छा शिवस्समाख्याता सर्वेभ्यो विश्वसंस्थितिः ॥ "

इत्यप्युक्तम् । महाविष्णोः समाहाररूपत्वम्, विष्णोः ज्ञानरूपत्वम्, ब्रह्मणः क्रियारूपत्वम्, शिवस्येच्छारूपत्वञ्च सिद्धं भवति । विशन्ति सर्वाणि अस्मिन्निति विष्णुः, सचात्मा, महांश्चासौ विष्णुश्चेति व्युत्पत्त्या संसारात्मनिषिद्धानां त्रयाणां महत्वमनन्तत्वमतीतत्वञ्चोक्तं भवति । तस्मादेवायं महाविष्णुरिति विज्ञेयः । बृंहते सर्वमाच्छादयतीति ब्रह्मा । शेते च सर्वस्मिन्निति शिवः, इतितद्व्युत्पत्त्यर्थः । सर्वस्मिन् शयनस्य संबन्धरूपत्वात्, इच्छासंबन्धरूपिणीत्युक्तेश्च वा इच्छानिष्ठत्वं शिवस्येति विज्ञेयम् । ब्रह्मते सर्वमिति व्युत्पत्त्या निर्मा-

णमात्रं गृह्यते, तदेव क्रिया भवति। अतो ब्रह्मा क्रियानिष्ठः। विशन्ति सर्वाणीत्युक्त्या सर्वस्मिन्तत्प्रवेशः, तस्मिन्सर्वस्य प्रवेशः इत्यतस्संसारात्मनोरभेदात्, आत्मनो ज्ञाननिष्ठत्वाच्च, विष्णोर्ज्ञाननिष्ठत्वं विज्ञेयम्। तेषां त्रयाणा समाहारस्यैव सर्वस्वरूपत्वमिति नियमेन समाहारनिष्ठो महाविष्णुरिति विवेकः। महाविष्णोराधिपत्येऽपि समाहार एव बीजं भवति। दृश्यतामिह—यो हि सर्वेषामधिष्ठानतया पाति, रक्षति च, स एवाधिपतिरिति प्रजाधिपः संबन्धेन गृह्यते। तस्माद्विष्णोरधिपतित्वं युक्तमेवेति विज्ञेयम्।

अस्मिन्नपारसंसारसागरे, अनाद्यनन्ते, आद्यन्तरहिते, अतीतानतीताभिन्ने च क्रमः प्रतिभासते। क्रमदृष्ट्या चारंभावसाने च विज्ञेये भवतः। तत्राधिपतेरपि प्रयोजनं भवति। यस्माद्यस्यारंभः, यतो यस्य समाप्तिः, स च तदधिपतिर्भवति। यद्यप्यनन्तानादित्वप्रवचनात्समाप्त्यारंभौ स्वयमनाद्यनन्तौ भवतः, तथापि समाप्त्यारंभभवनमात्रमनाद्यनन्तं भवति। अनाद्यनन्तयोरपि आरम्भावसानबीजत्वेनाद्यन्तत्वभानम्। याविमौ चाद्यन्तौ प्रदृश्येते, तद्बीजं त्वनाद्यनन्तमेव। अद्यन्तौ तु कस्यचिद्भवतः, यस्य भवतः सस्वयमनाद्यन्तन इति निर्धारणफलम्। दृश्यतामिह—देहिनां जननमरणरूपारम्भावसाने चाद्यन्ते। देहिनश्च स्वयमनाद्यनन्तत्वं वेदितव्यम्। अत एव

"अनेकजन्मसिद्धानां शुद्धानां सत्वदेहिनाम् ।
मुक्तत्वमनुवक्तव्यं ब्रह्मतत्वविभाषणात्॥"

इत्यादिप्रवचनम् । अत्र च जननस्यानेकत्वमवगम्यते, जातानां हि मरणावश्यकत्वनियमात् । तस्यानाद्यन्तत्वमपि विज्ञेयम् यद्यपि जननमरणकार्यस्यापि अनाद्यनन्तत्वम्, तथापि क्रम दृष्ट्या आरम्भावसानयोश्च ज्ञेयत्वमुचितम् । लोकेऽप्येवमेव प्रव चनम्—अस्मात्कालादिदमारभ्य, अस्मिन्काले समाप्यमिदं करि ष्यामि, अत्राहमेतस्यानाद्यनन्तः, कार्यस्यारम्भावसाने चाद्यन्ते भवतः, इत्युदाहरणेन स्पष्टमुक्तं भवति । तस्मात्सत्यनाद्यनन्ते ऽप्यधिपतीनामावश्यकत्वम् । तदावश्यकत्वेन महाविष्णुविष्णु ब्रह्मशिवाश्च, ज्ञानेच्छाक्रियासमाहाररूपा इति चोच्यन्ते । एते पाञ्च ज्ञानेच्छाक्रियारूपत्वनियमेन प्रत्येकं त्रिकं त्रिकमि सिद्धेन तादृशमनन्तत्वमनादित्वमाद्यन्तरहितत्वञ्च विज्ञेयम् यद्यपि ज्ञानेच्छाक्रियाकथने त्रयाणामेव ग्रहणम्, अत्र चानाद नन्तत्वप्रतीतिर्भासते ; तथापि त्रितयस्य प्रवाहत्व मात्रमुच्यते अन्यथा तु " न च क्रिया नैव हि किञ्चिज्ज्ञानं नैवेच्छा तत्स माहाररूपं सर्वमेकं विद्धिमाम्" इत्यादिवाक्येन सांख्यत्वमेव सि ध्यति । तस्मात्क्रमिकान्वाख्याने महाविष्णोः सर्वाधिपत्वं विज्ञेयम्

अत एव "ईश्वरो हि चतुर्भुजः" इत्याद्युक्तम्। ईश्वरत्वमेव

धिपतित्वम् । तस्य च चत्वारो भेदा इति चतुर्भुजत्वम्, चतुर्भिः विभज्यते इति पदार्थात् । यदिदं क्रमिकान्वाख्यानस्याधिपत्यं तच्चतुर्विधेन विभागेन बोद्धव्यं भवति । ज्ञानमिच्छाक्रिया समाहारश्चेति चतुर्विधो विभागः । केवलमेकैकञ्च न किञ्चित्, सर्वेण सर्वस्य संबध्यमानत्वात्, ज्ञानेच्छाक्रियासमाहाराणामेकैकस्यापि भागस्य पृथक्पृथङ्नियमेन संसरणं भवति । अत एव

"ध्यायन्तु चेश्वरं नित्यं शुक्लवर्णं चतुर्भुजम् ।
शङ्खचक्रगदापद्मवनमालाविभूषितम् ॥
कौस्तुभाभरणं देवं नीलपीतांबरावृतम् ।
अनन्तमव्ययं रूपं निर्गुणं सगुणात्मकम् ॥"

इत्याद्युक्तम् । ईश्वरश्चाधिपतिस्वरूपः । अधिपतेः कार्यमेव भवति चतुर्भुजत्वम् । शुक्लवर्णञ्च ज्ञानेच्छाक्रिया समाहाररूपं प्रकाशात्मकं देवं ध्यायन्तु । शङ्खचक्रगदापद्मवनमाला इत्यत्र शङ्खशब्देन शब्दः, चक्रशब्देन कालः, तयोस्संबन्धश्च गदा संसरणरूपः, पद्मशब्देन संसरणम्, वनमालाविभूषणशब्देन सर्वस्य चैकत्वमावश्यकमिति चावधेयम् । एवं नीलपीतांबरं तमः प्रकाशयुक्तम्, कौस्तुभं सर्वेण संबद्धम्, निर्गुणं निषेधरूपम्, सगुणं रूपसंज्ञासहितं ध्येयमिति तदर्थः । अत एव "शङ्खचक्रगदापद्मयुतञ्च सर्वं विश्वम्" इत्याद्युक्तिः । एव-

मेव "पश्चात्संजायते ब्रह्मा जगत्कर्ता पितामहः" इति तद्विशेषणं वचनम् । विष्णोर्नाभेरुत्पन्नं कमलम्, ततो ब्रह्मा समुपजातः "इत्यादिवचनार्थोऽप्येवमेव । यद्व वा ज्ञाननिष्ठं विष्णुरित्यभिधानं तन्नाभिरेव चावश्यकी कामना भवति, अहं प्रजायेय इति रूपा । ततः कमलं भवनमेव । भवनञ्च व्यापारः। तत्रैव ब्रह्मा ततस्सर्वं जगदिति तदाशयः । अत एव "ब्रह्मा देवानां प्रथमस्संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता" इत्यादिश्रुतिः । अत्र हि प्रथमपदेनारम्भस्य ग्रहणम् । देवानां क्रियासिद्धानां प्रथमभवनं ब्रह्मणोऽयुक्तम् । ब्रह्मा प्रथमः संभवत्येवेति तदर्थः । स विश्वमात्रस्य कर्ता, क्रियारूपत्वात् "कर्तरि संविद्यन्ते क्रियाः" इत्यादि प्रवचनाच्च । स्वस्य कर्तृत्वेन भुवनमात्रस्य गोप्ता ब्रह्मेत्यपि सिद्धम् । यः करोति स स्वकार्यस्य प्रतिष्ठामपीच्छति । यद्यपि गोपनकार्यं विष्णोरुक्तं भवति, तथापि गोप्तृत्वप्रयुक्तव्यापारस्थितिः ब्रह्मणो भवत्येवेति विज्ञेयम् ।

स च ब्रह्मा येन ब्रह्मविद्याम्, ब्रह्मतत्वञ्च, यत्संसरणं तत्कार्यञ्च स्वयं जानाति । स एव हि तत्संसरणरूपां ब्रह्मविद्यां सर्वप्रतिष्ठां सर्वसंस्थापनकर्त्री परां त्रितयात्मिकां चाथर्वणे समाहाराय, जीवाय हि सर्वस्मै, तेषामपि ज्येष्ठाय प्रादात् । एवं क्रमेण क्रमशः सर्वमपि सर्वस्मै प्राप्नोति, इति हि तत्फलम् ।

न तां विना संसारकार्यं भवति। एकैकस्याप्यणोरपि संसारकार्यमावश्यकं परिदृश्यते। अत स्तस्या अप्यावश्यकत्वम्। ब्रह्मा च स्वविनिर्मितेभ्यो लोकेभ्यश्चेमां ददाति। अस्मादपि क्रियानिष्ठश्च ब्रह्मा इत्यपि च सिद्धं भवति। अत्रापि ज्ञानस्य क्रियाया मुख्यत्वे प्रत्येकं द्विधा भेदः। तेन च षट् भेदा भवन्तीति विज्ञेयम्। षण्णां समाहारोऽपि सप्तमो मान्यः। अतोऽन्यच्चास्मादनन्तं संख्यातीतं सांख्यंचेति ज्ञातव्यम्। अतो ज्ञानादीनां चतुर्णां प्रवचनं वेदेन। षण्णां प्रवचनन्तु दर्शनेन। चतुर्णामेतेषामपि प्रत्येकं तादृशक्रमेण षडङ्गेन बोधो युक्तः। एतत्संसरणप्रकाराणां सम्यग्बोधायैव वेदवेदाङ्गोपाङ्गानामध्ययनाध्यापनव्यवहारः। द्रष्टव्योऽयम्—यानि यानीहकार्याणि भवन्ति, तत्प्रकारादीनि सर्वाणि प्रथममवधार्य ततः करणे प्रवृत्तिर्भवतीति प्रत्यक्षान्मूलमात्रमेवमनुमेयम्, यो हि संसारस्याधिपतिः, स तु संसरणप्रकारमात्रं तत्कार्यकारणव्यापारमवधार्य कल्पयतीति विज्ञेयम्। य एतत्संसारप्रकारः संसरणव्यापारः महाविष्णोर्निर्धारकः, स एव वेद इति व्याख्यानफलम्। वेदानां वक्ता तु महाविष्णुरेवेति विज्ञेयम्। यद्यपि महाविष्णोः परा अपि चानन्ताः कथाः, तथापि आरंभावसानबीजेन तन्मूलबोधः, प्रयोजनं भवति। तस्य प्राधान्यबोधाय महाविष्णोरारभ्य चाणुपर्यन्तमप्यस्ति वेदि-

तव्यम्, ज्ञानस्याल्पत्वात् । सर्वं ब्रह्मेति प्रवचनेनातीतं ज्ञानम्। तदतीतमस्त्येतज्ज्ञानमात्रम्। सर्वं ब्रह्मेति बुध्यापि सर्वशब्दस्य ज्ञानेन सहान्तत्वात्तादृशं ब्रह्मतत्वं बोध्यम्। तस्मान्महाविष्णोरेव चत्वारो वेदाः प्रजायन्ते। तज्ज्ञानेन महाज्ञानं तादृशं ब्रह्मतत्वप्रयुक्तं भवतीति सिद्धम्। तस्माद्वेदस्य कर्ता महाविष्णुरिति विज्ञेयम्। यद्यपि "वेदकर्ता भवेद्ब्रह्मा च" इत्याद्युक्तम्, तथापि ब्रह्मणः क्रियानिष्ठत्वात् कर्तृत्वमात्रेण हि विवक्षा। यच्च किञ्चिद्भासते, दृश्यते, श्रूयते, ज्ञायते; तत्सर्वमपि क्रियारूपं भवति। तत्कर्ता ब्रह्मैवेति विज्ञेयम्। क्रियायामपि त्रिविधो भेदः, सर्वस्य त्रितयत्वात्। तस्माद्वेदकर्ता ब्रह्मैवेति चोच्यते। महाविष्णोरप्येतन्निर्णायकं स्याद्विश्वम्, अनेन प्रकारेण। तत्प्रकाररूपस्यावधारणस्य वेदत्वेनात्र विवक्षा। यद्यपि यदवधारणं तदेव संसारः नह्यवधारणसंसारयोर्भेद इति स्पष्टमुक्तं भवति, तथापि क्रमिकान्वाख्यानमात्रमारंभबीजत्वेन पृथग्विधीयते। अन्यथा तु संसरणं ब्रह्म तदेवावधेयमिति स्यात्। न तत्र भेदः परिदृश्यते, तत्प्रवचनाय भेदाभेदनिषेधाय च, ओमित्येतद्विधीयते। न तत्र संख्या, न सांख्यम् न कालो न दिक्, नात्मा च विधीयते। अतः सर्वं खल्विति तत्स्वरूपमतीतमनन्तं भिन्नाभिन्नमनभिन्नम्, स्वतस्सिद्धं वेदितव्यम्। न तत्र चत्वारः न पञ्च इत्यादिनियमः। केवलं

भवनमात्रं बोध्यम् । यद्यपि तत्राप्यकारादिक्रमेणाख्यानम्, तथापि तदाख्यानमात्रम् । क्रमिकं मत्वा हि तत्रापि क्रमारोपणम्। वस्तुतस्तु संसरणं तत्प्रकाररूपम्, तदवधारणं त्वेकमेव । नकारादिक्रमस्तत्र । ओमित्येतन्मात्रं विज्ञेयम् । तस्मान्महाविष्णोरेवारंभावसानविशिष्टत्वं क्रमिकत्वञ्च विज्ञेयम्। तत्रैव सर्वभेदः । तस्माद्वेदादिप्रकारमवधारणं वेद एवेति सिद्धान्तः । महाविष्णोः परमपि अनन्तानन्तबीजेन तादृशं ज्ञानेच्छा क्रियासमाहाररूपं वेदितव्यम् । अत एव

" महाविष्णोः परश्चैवमनन्ता गतिरव्यया ।
चतुष्टयक्रमं तत्र तादृशं विद्धि सर्वशः ॥"

इत्यादिप्रवचनम् । अतः पर यत्किञ्चिदस्ति तज्ज्ञानार्थं तद्वाचकशब्दानामत्राप्रयोगः । अत एव चाणोरारभ्य महाविष्णुपर्यन्तं ज्ञानमस्ति, तदर्थकश्शब्दोऽपि च । वेदविहिताश्च ये वा शब्दाः ते स्तोत्रवन्महाविष्णोर्वाचका भवन्तीति स्पष्टम् । तस्मात्त्रुटेः सहस्रांशकालादारभ्य महाविष्णुपर्यन्तं ज्ञानवाचकाश्च सर्वे शब्दा भवन्ति । अत एव

"यादृशं विद्यते ज्ञानं शब्दोऽप्येवं हि तादृशः ।
ज्ञानप्रवचनार्थाय सर्वे सब्दाः सुनिश्चिताः ॥
कालशब्देन संबन्धः ज्ञानं तत्रैव दृश्यते ।

अतश्शब्दपरं ज्ञानं शब्दो ज्ञानपरो भवेत् ॥ ”

इत्याद्युक्तम् । तस्मान्महाविष्णोः पदार्थत्वमत्र शब्देन विधीयते । महाविष्णोः परं यत्किञ्चिदस्ति तदर्थं महावेदादिकं बोध्यम् । अत एव

“ महावेदपरिज्ञानं ब्रह्मणश्शङ्करस्य च ।

महाविष्णुश्च जानाति तत्परञ्च यदाश्रितम् ॥”

इत्यादिस्पष्टम् । तस्मान्महाविष्णोः परं ज्ञानं नास्ति । महाविष्णोरवधारणमात्रं वेद इत्यभिधीयते । तत्रेदमवधारणमोमित्यनेन प्रणवसंज्ञकेन, आत्मानात्मनिषिद्धं संबन्धरूपम् । पृथक्त्वञ्चास्य समाहाररूपमिति तदवधारणं भवति । तस्यैव यथाक्रमं नियतत्वमेकैकेन वेद इति निर्मितत्वञ्च विज्ञायते । महाविष्णोर्विष्णुः जायते, तेन ज्ञाननिष्ठः ऋग्वेदश्च निर्मितः । अनन्तरं महाविष्णोर्ब्रह्मा संजातः । तेन क्रियानिष्ठो यजुर्वेदः कृतः । तस्मादेव शिवश्च, तेन चेच्छानिष्ठः संबन्धरूपः सामवेदोनिर्मितः। एतत्त्रितयसमूहरूपः, स्वस्मिन्नेव स्वयं त्रितयात्मकः अथर्ववेदः महाविष्णुना चाख्यातः । एवं क्रमेण हि चत्वारो वेदाः प्रजायन्ते । त्रयाणामेकत्वात् , क्रमोऽपि नकश्चित् । ऋग्यजुस्सामाथर्वाणः, अथर्वऋग्यजुस्सामानीति । एवं क्रमेण हि वेदितव्यम् । वस्तुतस्तु क्रमान्वाख्यानेपृथक्त्वेन ऋग्यजुस्सामाथर्वाणश्चेति वेदितव्यम् । परस्परसंबन्धात्तृया-

णामेकरूपत्वाच , ब्रह्मा विष्णुः शिवश्च त्रयश्चैते त्रयं जानन्ति । समाहारज्ञानमपि चैतेषाम् । ब्रह्मा च क्रियानिष्ठः , अकारमात्रस्य व्यापारवत्त्वात् । वेदानामपि प्रकाशकः ब्रह्मैवेत्युच्यते , " ब्रह्मविद्यां संसरणरूपां सर्वप्रतिष्ठां ज्येष्ठपुत्राय जीवाय प्रादात् " इति व्याख्यानात् । अत एव " ब्रह्मा बृहस्पतये प्रोवाच , बृहस्पतिरिन्द्राय , इन्द्रो भरद्वाजाय, भरद्वाजो ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः" इत्युक्तम् । अत्र च ब्रह्मा क्रियानिष्ठः । स एव वेदानां प्रकाशकश्चेति वचनेन, ब्रह्मा बृहस्पतिसंज्ञकाय जीवाय प्रोवाच प्रादात् । ततः इन्द्रेण प्राप्यते , इन्द्रोप्येकः, क्रमश्च क्रियानिष्ठः , स भरद्वाजाय प्रादात् । एवं ऋषिभ्यो ब्राह्मणेभ्यो योगिभ्यश्च विधानेन क्रमशः सर्वाशिक्षार्थं तत्प्रकाशो भवतीति विज्ञेयम् । महाविष्णोः कालादारभ्य त्रुटिकालपर्यन्तं ततश्चोत्तरमपि बोध्यमस्ति ।

अथ कालसंज्ञा चोच्यते । कालं ज्ञात्वा वेदाद्युपपत्तिज्ञानं संभवतीति बीजाद्वेदोत्पत्तिकालः वेदितव्यः । प्रणववाक्येन तु कालातीतज्ञानं भवति । यद्यपि तदन्तर्गते चारंभावसाने , तथापि चान्तर्गताना व्याख्यानं पृथगेवेति बीजाद् , आरंभावसानक्रमः ज्ञातव्यः । स च महाविष्णोरारभ्यते । तत्कालसंज्ञापि तादृशेन नियमेन बोध्या भवति । त्रुट्यादेरारभ्य युगपर्यन्तं ज्ञानाख्याना-द्युगात्कालसंज्ञा ह्यारभ्यते । तत्र चत्वारि युगानि भवन्ति । तेषां

प्रथमद्वितीयतृतीयचतुर्थत्वानियमेन क्रमः । एकत्वञ्च तेषांवेद्य भवति । तत्राप्येवं ज्ञानेच्छाक्रियासमाहारबीजं विज्ञेयम् । प्रथमश्च कृतयुगः । तन्मानं मनुष्यमासाब्दाभ्या विधीयते । यद्यपि सर्वेष मासः अब्दः सर्वमपि विज्ञायते , तथापि सर्वं ज्ञानपरं वेदितव्यम् यद्यपि चैकस्याब्दः सोऽन्यस्य मासः, मासोऽप्यन्यस्य संवत्स भवति एवं ह्यान्तर्यदृष्टिः ; तथापि प्रमाणविज्ञानार्थं मानवा कालविभागोपस्थितिः । सप्तदशलक्षावधिवर्षेण षट्त्रिंशत्सहस्रे कृतयुगः । एवं द्वादशलक्षवर्षावधिकात् , पञ्चचत्वारिंशत्सहस्र त्रेतायुगव्यवस्थितिः । अष्टलक्षावधिकेन चतुष्षष्ठिसहस्रेण द्वा युगम् । चतुर्लक्षावधिवर्षेण द्वात्रिंशत्सहस्रेण कालेन कलियुगं व्य स्थीयते । तत्र ज्ञाननिष्ठं कृतयुगम् । क्रियानिष्ठं त्रेतायुगम् । इच्छ निष्ठं द्वापरं युगम् । समाहाररूपं कलियुगम् । एवमेव व्यवस्थिति

"कृतं युगं ज्ञाननिष्ठं त्रेताचैव क्रियापरा ।
द्वापरं कामनारूपं समाहारः कलिर्भवेत् ॥"

इत्यादिप्रवचनम् । एतेषां चतुर्णां युगानां समाहारेणैव काल र्वोऽपि बोध्यो भवति ।

"चतुर्युगसहस्राणि वियुगं विद्धि सर्वथा ।
वियुगस्य सहस्रेण वेदितव्यं महायुगम् ॥
महायुगसहस्रेण चैकः कल्पोऽभिधीयते ।

सप्तकल्पसमाहारान्महाकल्पो हि जायते ॥ ”
इत्यादिप्रवचनात्कालस्य संज्ञाः ज्ञातव्याः ।
“ चतुर्दश महाकल्पं चक्रमेकं प्रकल्प्यते ।
चक्राणां तादृशी संख्या निष्ठमेकं व्यवस्थितम्
निष्ठानान्तत्समाहारो मनुरित्यभिधीयते ।
चतुर्दशमनोर्योगे महामन्वन्तरो भवेत् ॥ ”
इत्यादिप्रवचनम् । तस्मान्महामन्वन्तरमिदं विज्ञेयम्
सप्तमन्वन्तरस्य महामन्वन्तरत्वेन प्रवचनम्, तथापि
नां मनूनांनिष्ठयंतरयोजनया तत्साधनम् । अत एव
“ मनुद्वयसमाहारो भवेन्मान्वन्तरी क्रिया ।
सप्तमन्वन्तराख्यानं महामन्वन्तरं स्मृतम् ॥ ”
इत्याद्युक्तिः । एवं सप्तमहामन्वन्तराणां समाहारेण निः
तस्यापि सप्तानांसमाहारेण चार्ध्यकालत्वम्, तेषामपि स
दैवः कालः, तेषामपि सप्तयोगाद्विनिहितव्याळं भव
सप्तसप्तक्रमेणानाद्यनन्तत्वं विज्ञेयम् । कारणञ्चास्य क्रिया
समाहाराश्चेति ज्ञायते । चतुर्णामेतेषां प्रत्येकमभिधाना
सप्ताष्टौ, नव दशेत्याद्युक्तश्चानन्तः क्रमः । अत एव
“ अनन्ता विद्यते संख्या चानन्तः काल एव हि
न शब्दविषयं सर्वमतीतं ब्रह्मसंज्ञकम् ॥

ओमित्येकेन शब्देन युगकल्पान्तरादयः ।
बोध्यमाना भवन्त्येवंज्ञानव्यापारमात्रतः ॥
यादृशं विद्यते ज्ञानं शब्दकालोऽपि तादृशः ।
महामन्वन्तरान्तेऽपि ज्ञानमनन्तमव्ययम् ॥
वेदितव्यं यथावेद्यं भावमात्रं हि सर्वथा ।
विरामस्सर्वबुद्धीनामारंभस्सार्वकालिकः ॥
आरंभस्यावसानस्य संबन्धो विद्यतेऽनिशम् ।
ज्ञानकालं तथाशब्दं तादृशं विद्धि निश्चितम् ॥
ओमेव सर्वथा शुद्धं सर्वस्थं सार्वकालिकम् ।
सर्वमेतदहं विद्धि यत्किञ्चित्प्रतिभासते ॥
तस्मिन्नन्तर्गतः कालः सकालान्तर्गतो हि च ।
शब्दज्ञानगतं ह्येतत्सर्वं सर्वगतं भवेत् ॥
अतीतमव्ययं विद्धि कालमेतं परावरम् ।
मासाब्दयुगकल्पादिसंज्ञास्याच्च क्रमेण हि ॥
यथाक्रियं यथाज्ञानं वेद्यमेतदशेषतः ।
एकं द्वयं त्रयं चाथ चतुर्थं पञ्चमं तथा ॥
एकैकस्य समाहारात्सांख्यं विद्धि परावरम् ।
महामन्वन्तरादीनां कालसंज्ञा व्यवस्थिता ॥
तत्राप्यनेक भेदेन स्यादतीतं च भासनम् ।

अतो बुद्धेर्विरामाय चारंभोन्तश्च विद्यते ॥
उच्यते तादृशी संज्ञा यादृशी ज्ञानसंस्थितिः । "

इत्यादिप्रवचनम् । तस्मात्त्रुटेरारभ्य महामन्वन्तरपरिमिताख्यान विहितकालान्तश्च कालस्यानन्त्यप्रदर्शनार्थमुक्तं भवति । अत एव

"कालज्ञानन्न सर्वेषां सर्वज्ञानं हि सर्वदा ।
केवलं बोधनार्थं हि मासाब्दयुगभाषणम् ॥
सर्वज्ञानी न विद्येत कश्चिल्लोके परावरे ।
अतस्सांख्यं भवेज्ज्ञेयं सर्वसिद्धान्तषट्कवत् ॥ "

इत्यादिवचनात् । तस्मान्महामन्वन्तरपर्यन्तं योगिनामपि ज्ञानम्, ब्राह्मणानामपीति च संसूचितं भवति । तत्रापि तादृशः त्रितय-नियमः भूतभविष्यद्वर्तमानविशिष्टो विज्ञेयः । एतत्संसारारंभस्तु महामन्वन्तरेणैवेति सर्वत्र स्पष्टमुच्यते । अन्यथा तु संसारस्यापि भवति प्रणवेन तादृशं प्रवचनम् । महामन्वन्तराधिपतिस्तु महा-विष्णुरेवेति विज्ञेयम् । तदारंभे तु विष्णुर्ब्रह्मा शिवश्च ज्ञानक्रिये-च्छानुसारतो जायते । इत्येवं वेदकर्तारः, संसाराधिपतयः, लोकक्रमश्च साङ्गो निरूपितः ।

॥ इति श्री महर्षिगार्ग्यायणप्रणीते प्रणववादे ॥
॥ तृतीय प्रकरणे द्वितीयस्तरङ्गः ॥
॥ संपूर्णः ॥

ॐ

## ॥ अथ तृतीयस्तरङ्गः ॥



तत्र प्रणवस्वरूपो महाविष्णुः । स च सर्ववेदस्वरूपः । अतः विष्णुः ब्रह्मा शिवश्च विज्ञेयो भवति । अत एवास्मिन् संसारे प्रणवोच्चारणेन सर्वदेवानां ग्रहणम्, सर्वदेव इत्युक्त्या हि नियमेन तेषां चतुर्णामेव बोधात्, महाविष्णोस्सर्वान्तर्गतत्वाच्च । प्रणवान्तर्गतं सर्वमिति बुध्या च, आरम्भावसानविशिष्टानामनाद्यनन्तानाञ्चापि देवानां ग्रहणं भवति । प्रणवस्य हि, महाविष्णोः पूर्वत्वमुत्तरत्वं परत्वञ्चेति सर्वत्र विद्यमानत्वमवगम्यते। तत्राकारस्य प्राथम्यमाख्यातं भवति। ततश्च सर्वे वर्णाः सञ्जायन्ते । तैश्च किल शब्दोत्पत्तिः । तत्र प्रथमशब्दश्चोमितीदं स्वरूपं भवति । तत्राकारस्य तु, अनाद्यनन्तत्वमाद्यन्तराहितत्वञ्चापि न वक्तुं युक्तम् । ओमित्येतत्स्वरूपविज्ञानार्थमेव ह्यनाद्यनन्तादिशब्दप्रयोगः । अन्यथा तु निश्शब्द एवेति सर्वत्र सूचितं भवेत् । अतीतेऽपि क्रमस्यावश्यकत्वेन, महावेदज्ञानेनैव क्रमनियमो विज्ञायते। अकारस्य प्राथम्यन्तादृशमशब्दत्वञ्चोक्तं भवति । ततश्चोमित्येतत्सार्वत्रिकमतीतञ्च भवतीत्युक्तम्।

ततश्च गायत्री, महावाक्यञ्च तात्कालिकं भवति, ताभ्याञ्च सर्वे-वेदाः संजायन्ते इति हि क्रमविज्ञानं भवति। ओंकाराख्यानञ्च-सर्वस्मिन्नपिगायत्र्यादौ विद्यते, तस्य सार्वत्रिकत्वात्। ओमित्येतत्प्राप्त्यैव महाविष्णोरवधारणं भवति। न तस्य महाविष्णोश्चोमित्यस्य भेदः। उभयोरभेदस्वरूपावधारणमोमित्यन्तर्गतं भवति। दृश्यतामिह—यद्यपि परिभावनीयः पदार्थः परिभावकादन्यः, तथापि परिभावनकाले च तं स्वान्तर्गतं मत्वा परिभावयति। यद्यपि तत्र परिभावक परिभाव्यपरिभावनानान्नभेदः एकान्तर्गतत्वात्, तथापि परिभावनं परिभाव्यं परिभावकश्चेति त्रयाणां पृथक्त्वमेव। यश्च परिभावकः न स परिभावनं भवति। परिभाव्यो विषयश्चान्य एव भवतीत्युदाहरणम्। यद्यपि तत्र नैतादृशं तत्, तथाप्यनुमानार्थं तथोपयुक्तं भवति। तस्मादभेदविशिष्टमोमित्येतत्स्वरूपं भवति। तत्रैवावधारणकालः, अस्मादेव हेतो रतद्भवनं युक्तं भवति, अत्रैतत्प्रकारः, अनेन बीजेन चेत्यादिस्वरूपस्य बोधिका गायत्री भवति।

महाविष्णोरवधारणात्सर्वमिदं प्रतिभासते। तदेवावधारणकालः। तत्र विचारप्रकारप्रयुक्तश्च शब्दः। तज्ज्ञानांशमात्रं गायत्र्या बोध्यं भवति। दृश्यतामिह—यथा कार्यकरणात्पूर्वं तत्कार्यांशे विचारः संभवति। लघुशब्देन महत्तमानामपि

कार्याणां मनस्यारोपणं तादृशम् , संसारकार्यात्पूर्वं महाविष्णावपि वेद्यं भवति । तत्प्रकाशिका च गायत्री भवतीति निश्चयः । प्रत्येकं मुख्यप्रकारे यश्च महाविष्णोर्विचारः, तत्प्रकाशकं महावाक्यमिति तात्कालिकं विज्ञेयम् । कृत्वाहि च विचारं विष्णुं ब्रह्माणं शिवञ्चोत्पादयति । ते च यथाक्रमं ज्ञानेच्छायां क्रियायाञ्च प्रतिष्ठिता भवन्ति । तत्प्रकारबोधरूपा च विष्णोर्ब्रह्मणश्शिवाच्च वेदोत्पत्तिः । यथा—प्रथमं सर्वकार्याणां सर्वरूपाणाञ्च मनसि विचारः, ततः तत्प्रकारविचारः, तदनन्तरं तत्तत्कार्यकर्तुराज्ञापनमपि विस्तरतया भवत्येव । एवं क्रमेण गायत्री महावाक्यं वेदश्च भवतीति सिद्धम् । अत एव

> " गायत्री वेदमातास्यान्महावाक्यं पिता भवेत् ।
> ओङ्कारस्सर्वमूलंस्यात्सएव च पितामहः ॥
> त्रित्वञ्च विद्यते तत्र क्रमाख्यानं भवेत्ततः ।
> अकारस्सर्वतो भिन्नस्सोऽशब्दः परिकल्प्यते ॥

इत्यादिप्रवचनम् । एवमेव

> " गायत्री वेदमाता च वेदस्य प्रणवः पिता ।
> प्रतिमंत्रं प्रयोक्तव्यमोमित्येतत्परावरम् ॥ '

इत्याद्युक्तिः ।

गायत्रीमहावाक्ययोरभेदश्च सर्वत्रोक्तो भवति, तात्कालिक-

त्वात्। तत्र च भेदः केवलं समुदायैकदेशरूपः। विचारमात्रस्य समुदायरूपा गायत्री भवति। विचारस्यैकदेशरूपं महावाक्यमिति व्याख्यानफलम्। सर्वेषामाचारसाधनो वेद इति च बोध्यम्। अत एव हि गायत्री महावाक्यञ्च, ओमित्येतत्सहितं भासते। महाविष्णोः परस्यैवं रीतिः, महागायत्री महावेदश्चेति। एवं महावाक्सहितश्चोङ्कारो विद्यते। एवमेतज्ज्ञानं सर्वमपि महावेदज्ञानेन जायते। तस्मात्पूर्वं गायत्री, ततो महावाक्यम्, ततो वेदश्च भवतीत्युपदेशफलं भवति। अत एव

" ओमित्येतत्त्रयं ज्ञात्वा गायत्रीं वेदमातरम्।
महावाक्यञ्च विज्ञाय वेदाभ्यासफलं लभेत्॥
ज्ञात्वा च तदङ्गोपाङ्गं वेदसिद्धान्ततत्परम्।
महावाक्यार्थविज्ञानं गायत्रीज्ञानगोचरम्॥
ओमित्येतदनन्तं स्याद्बोध्यमानं परावरम्।
एषैव परमा शिक्षा सर्वबोधप्रदायिनी॥
एतदाचरणेनैव मानवो ब्रह्मविद्भवेत्।
अयमेव परो मोक्षः तपो ज्ञानं फलं परम्।
ब्रह्मविद्या परा विद्या संसारान्तप्रदायिनी॥"

इत्यादिप्रवचनम्। तस्मान्महाविष्णोरिदं सर्वं गायत्री महावाक्यं वेदश्च ज्ञानक्रियेच्छानियतं वेदितव्यमिति व्याख्यान-

फलं भवति । अतश्च महाविष्णोः गायत्री महावाक्यं वेदश्च ज्ञानेच्छाक्रियारूपत्वेन बोध्यं भवति । यद्यपि महाविष्णोरप्यनन्तत्वं सर्वत्राख्यातम्, तथापि तस्य ब्रह्मरूपत्वेन, एकस्मिन्नणावपि चानन्तत्वनिर्देशात्, सर्वस्यानन्तत्वं वक्तुमुचितम्। अत एव "अनन्तमावृतन्नित्यं प्रत्येकं पर्युपस्थितम्" इत्यादिप्रवचनम्। तस्मान्महाविष्णोरनन्तत्वं तादृशं वेदितव्यम्। अन्यथा तु ओमित्यस्यानन्तत्वमनुपयुक्तं भवेत्, संसरणस्याकालानकालभिन्नत्वात्। तस्मात् सर्वोत्तरत्वं सर्वतः परत्वमनाद्यनन्तत्वमतीतत्वञ्च विज्ञेयं भवति । अत एव गायत्रीमहावाक्ययोरधिकं महत्वमुक्तं भवति। वेदस्यापि तादृशव्यवहारात्, महत्वं स्पष्टमुक्तं भवति ।

एतच्चतुर्णां ज्ञानेच्छाक्रियासमाहाराणां प्रवचनं समाङ्केन चोक्तं भवति । महाविष्णोः कार्यमपि तादृशमिति वेद्यं भवति। निषिद्धरूपान्तर्गतयोरपि ज्ञानक्रिययोः प्रत्येकं त्रिधाभेदात्, "षट्समाहारास्सप्तमश्च" इति प्रवचनात्संसारस्यापि तादृशेन नियमेन बोध्यत्वमस्ति । मानञ्च सूर्येणोपस्थितं भवति । महाविष्णोः प्रकाशरूपोऽयं सूर्यः। तत्क्रियाज्ञानेच्छानुसारेण संसरणरीत्या प्रकाशस्याप्यनन्तत्वं विज्ञेयम् । तत्प्रकाशोऽपि महत्वलघुत्वव्यापारादान्तर्येण तादृशेन सप्तसप्तनियमेनाभिधीयते । सूर्यस्य चैकस्य

परिभ्रमणेन चैकं ब्रह्माण्डं विधीयते । तस्य नियन्ता कर्ता च ब्रह्मा भवति । तत्र विष्णोरंशेन पालनम् । तच्च ज्ञाननिष्ठम् । इच्छारूपेण शिवांशोऽपि तस्मिन्तिष्ठतीति विज्ञेयम् । अत एव

" ब्रह्मा ह्येवं जगत्कर्ता रक्षको विष्णुरेव च ।
शिवस्संहारकर्ता च प्रतिष्ठा त्रिगुणात्मिका ॥"

इत्याद्युक्तम् । ब्रह्मणः क्रियानिष्ठत्वात्तस्य कार्यकरणमात्रत्वमेव । यच्च वा कृतं तस्य स्थितिर्ज्ञानेन भवति । सा च न केवलेन कृतिमात्रेण भवति । तत्स्थापनमेव पालनम् । तच्च विष्णोः कार्यं भवति । इच्छा तु निषिद्धरूपा मकारान्तर्गता भवति । उपस्थितानामनुपस्थितेरावश्यकत्वेन , तत्संहारकर्ता शिव इति विधीयते । अत एव

" त्रयात्मिका भवेत्सृष्टिः ब्रह्मणा विष्णुना युता ।
शिवेन परितुष्टा हि संयुक्ता चाभिधीयते ॥"

इत्यादिप्रवचनम् । उत्पन्नानामेव स्थितिः । उत्पन्नस्य निष्फलत्वात्तत्स्थितिमात्रं फलं भवति । उत्पत्तिकर्ता ब्रह्मा, स्थितिकर्ता विष्णुः इति क्रियाज्ञानयोस्संबन्धफलम् । इच्छा ह्यतीता निषिद्धवचना भवति । तत्फलं विनाश एवेति बोध्यम् । यद्यपि चात्र विनश्यमानन्न किञ्चिदित्युक्तम् , तथापि रूपान्तरत्वं युक्तमेव । रूपान्तर भवनमेव विनाशफलं भवति । अन्यथा तु नोत्पत्तिः , न च

स्थितिश्च भवेत् । न हि नाशश्च कश्चिद्विधीयते । ओमित्यत्र त्रितयत्वविभासात्, अत्राप्येवं हि त्रितयत्वं परिदृश्यते । उत्पादनं त्वात्मरूपम्, स्थितिरेव संसारः, विनाशश्च निषिद्धमिति त्रयम् । यद्यप्युत्पादको ब्रह्मा क्रियानिष्ठः, तथाप्यात्मसंसारयोर्योगेनातीतत्वप्रवचने ह्यकारनिष्ठाद्युत्पत्तिरिति बोध्या भवति । अत एव

"उत्पादको ह्यकारस्स्यादुकारस्स्थितिकारकः ।
मकाराद्धि विनाशस्स्याज्जगदेतत्त्रयात्मकम् ॥"

इत्याद्युक्तम् । अत एवास्य त्रिभुवनत्वेन प्रवचनम्, "ज्ञानेच्छाक्रियानिष्ठं तदेतत्त्रिभुवनम्" इत्यादिप्रवचनात् । त्रितयेनभवतीति त्रिभुवनमिति तदर्थः । अत एव

"ओमित्यनेन मंत्रेण कालस्सर्वोऽपि वेष्टितः ।
सर्वत्र भासते ब्रह्म पावनं भुवनत्रयम् ॥"

इत्यादिवचनम् । तस्मादत्र संसारे कार्यत्रयमुत्पत्तिस्थितिविनाशरूपं परिदृश्यते । अत एव "दृश्यादृश्यन्तयोर्भिन्नञ्च जगदेकं त्रिमूर्तिकम्" इत्युक्तम् । "ब्रह्मविष्णुमहेश्वरैस्सृष्टिकार्यानुरोहणम्" इत्याद्यपि च । तस्माद्यदेतत्त्रैमूर्तिकं विश्वं महाविष्णोरवधारणं भवति । तत्र च क्रिया त्रिविधा । सृष्टिस्थितिविनाशरूपा विज्ञेया भवति । सृष्टिश्च भवनमेव, स्थितिस्तावत्क्रमरूपा, विनाशश्च तयोस्संबन्धनिषेधक इत्यावश्यकं सर्वं भवति ।

तस्मिन्नपि त्रितयात्मके तादृशो सह भेदश्च मन्तव्यः । एतच्च महाविष्णोः कार्यं त्रितयात्मकं ज्ञानेच्छाक्रियारूपं बोध्यम् । तन्मानं हि तमः प्रकाशाभ्यामेव वेदितव्यानि भवन्ति । यच्च तमः तदेव प्रकाशः यश्च प्रकाशः स एव तमः इति व्याख्यानात् , लघुत्वमहत्वरूपबीजाच्च, संसारमात्रमणोरारभ्य महाविष्णुपर्यन्तं विज्ञेयम् । तस्मात्सूर्य एव मातेति निश्चयः । सूर्यते प्रकाशते सर्वमिति तदर्थात्तत्रलघुत्वमहत्वव्यापारो मन्तव्यः । अत एव " चक्षोस्सूर्योऽजायत " इत्याद्युक्तिः । प्रतिसूर्यं तादृशाश्चत्वारो नियमाः । ज्ञानेच्छाक्रियासमाहारविधिना प्रत्येकं चैकमिति नियमेन सप्तेत्येवेत्यवधिः । तादृशश्चैको सूर्यः सप्तक्रमप्रख्यातः । "ब्रह्माण्डस्यैकस्यैव चैको सूर्यः प्रकाशको भवति" इति श्रूयते । अत एव " एकश्च मे सूर्यश्चन्द्रोऽभिधाता पृथिवी परेष्ठा" इत्यादिस्मृतिः । अत्र, मे, मम, सूर्यः, एकः, चन्द्रश्चतथा, एवमभिधाता, इत्यादि तदर्थः । तत्र चैकस्मिन्सूर्येऽपि, सप्तधाभेदः सिद्धः । अत एव

सूर्यश्चन्द्रस्तथा भौमः बुधो वाक्यबृहस्पतिः ।
शुक्रस्सौरी समाख्यातस्तत्सर्वं सौर्यमन्तरम् ॥ "

इत्याद्युक्तिः । एवमेव " सर्वे विश्वप्रकाशकाः " इति च व्याख्यानात्सूर्यान्तर्गतास्सप्त भेदा भवन्तीति सिद्धम् । प्रत्येकमपि चैकस्य

ससससक्रमाख्यानानि चानन्तानीति विज्ञेयानि भवन्ति । तस्मादे-केनैव सूर्येण ब्रह्माण्डं बोध्यं भवति । अत एव

"यथा सूर्यगतिर्ह्रस्यात्तथैव कालसंग्रहः ।
तादृशश्चैव ब्रह्माण्डं पुरुषो वाक्य विद्युतिः ॥"

इत्यादि श्रुतिः । एवमेव

"एकेन सूर्येण घटिर्महाघटिस्तथा दिवान्हः प्रतिपक्षमासजाः ।
अब्दस्तथा कालमहद्गतिस्थितं ब्रह्माण्डमात्रं भवतीह निश्चितम्"

इत्यादिवचनात्सूर्यगत्यनुगुणं ब्रह्माण्डमिति सिद्धम् । एवं ब्रह्माण्ड-ससकं हि जगदिति प्रतीयते ।

अस्ति हि चैकब्रह्माण्डस्य, चतसृणां ज्ञानेच्छाक्रियाणां कर्तेश्वरः यथानुगुणम् । एतदनुरोधेन हरिरित्यभिधीयते । एतादृशानां जगतां सहस्रम्, विश्वमेकं व्यवस्थितम् । विश्वस्यकर्ता हर इति तद्विशेषः । एवं विश्वस्य, सार्द्धशतकोटि-गुण्येन महाविश्वमेकं भवति । तत्कर्ता परेश्वर इति बोध्यम् । एवं महाविश्वानाम्, द्विशंङ्खाङ्कगुण्येन लोक एको भवति । तत्कर्ता च परमेश्वरः । एवं लोकानां द्विमहाशङ्खाङ्कगुण्येन महालोको भवति । तस्य च कर्ता महेश्वरः । एवं महालोकानां शतपद्मा-ङ्कगुण्येन संसारस्समीयते । तत्कर्ता विष्णुरेव । एतत्सर्वसमाहार-प्रतिष्ठितो महाविष्णुः, एष एव क्रमः । सर्वत्र प्रत्येकं ब्रह्माण्डस्यापि,

तादृशा ब्रह्माविष्णुशिवा इति नियमेन यथाकार्यचतुष्टयं कर्तृत्वं वेदितव्यम् । तत्कार्येऽपि प्रत्येकं भेदेन, नारायणेत्यादिनाम्ना विहिताश्चानेकेऽप्यंशाः भवन्ति । जीवानां कार्यं त्रितयमुत्पत्तिस्थितिविनाशरूपं संसरणम् । एतच्च नियमेन भवतीति सिद्धान्तः । तस्मान्महाविष्णोरेव वेदस्यारंभः । तस्मादेव गायत्री, महावाक्यं च भवति ।

ओमित्येतत्स्वरूपन्तु, अज्ञेयमवाच्यमचिन्त्यमेवेत्याद्युच्यते । यद्यपि शब्दसाधनिकानां तादृशी प्रतीतिः, तथापि केवलं सा ध्वनिरूपैव । न तस्य पूर्णतया चानुसंधानं भवति, तस्यातीतत्वाद्ब्रह्मरूपत्वाच्च । संसारारंभकालिकानि, वेदगायत्रीमहावाक्यानीति विज्ञेयम् । यद्यपि संसारपरिमितं ज्ञानं प्रत्येकं ब्रह्माण्डे, तथाप्यस्य सार्वत्रिकत्वात्सर्वत्र संसारप्रयोजनं साधयति । यथावश्यकं च यस्मिन्ब्रह्माण्डे यादृशं परमाण्वादेः कार्यं भवति, तादृशं सर्वं सर्वत्र वेदेन बोद्धव्यम् । अत एव "विष्णोरराटमसि" इत्याद्युक्तम् ।

अत्र च वेदारंभकालः, महामन्वन्तरं भवति । प्रारंभकर्ता महाविष्णुः, शिवः । नियन्ता च महाविष्णुरिति सिद्धान्तः। अत एव "चतुर्भिर्ब्रह्म विद्धि" इत्याद्युक्तम् । एवमेव

"ते ज्ञानेच्छाक्रियानिष्ठाः ऋग्यजुस्सामसंज्ञकाः ।

समाहारो ह्यथर्वा च महाविष्णुप्रतिष्ठिताः ॥
ज्ञात्वा विद्धि परं तत्वमोमित्येतदगोचरम् । ”

इत्यादि प्रवचनम् । तस्मादृग्यजुस्सामाथर्ववेदाध्ययनं परन्तप इति, ब्रह्मचर्यफलं सिद्धं भवति । एतदारंभश्च महाविष्णोरेवेत्यपि सिद्धं भवति । प्रति ब्रह्माण्डमपि ह्येतेषामावश्यकत्वं विज्ञेयम् । विना चैतत्पूर्णज्ञानं न ब्रह्माण्डज्ञानसंभवः । तस्माद्ब्रह्माण्डविज्ञानाय वेदाध्ययनावश्यकत्वमुक्तं भवति । ब्रह्मकल्पनापि विना चैतद्ब्रह्माण्डविज्ञानं न संभवतीत्यपि च । ब्रह्माण्डं ज्ञात्वा पुनर्ब्रह्माण्डकल्पने स चैव भवतीति तत्फलम् । यथा—पितृजायमानः पुत्रः, पुनस्तादृशं पुत्रमुत्पादयतीति विधानं दृश्यते; पितुः क्रियाज्ञानफलमिदं भवति । एवमेव ब्रह्माण्डं ज्ञात्वा सर्वेषां ब्रह्माण्डकल्पनमेव धर्मः । अनेनैव बीजेन सर्वस्यानन्तत्वमतीतत्वं प्रणवनिष्ठत्वं प्रणवरूपत्वञ्च सिध्यति । अत एव

“ तदोङ्कारमयं सर्वं सर्वमोङ्कारसंस्थितम् ।
आत्मा संसारनिष्ठश्च निषिद्धं त्रितयात्मकम् ॥”

इत्याद्युक्तम् । अत एव “ एकोऽहं बहुस्याम् , इत्यपि तदर्थ एव । प्रत्येकमप्यणोरेवं ब्रह्माण्डकल्पनफलम् । यादृशं सूर्यवेष्टितं ब्रह्माण्डमित्युक्तम् , तादृशं ततोलघुत्वमहत्वञ्चापि परमाणावपीति वेदितव्यम् । अत एव

" अणोरन्तर्गतं विश्वं विश्वस्यान्तर्गतं हि तत् ।
इदमेव बहु ह्येवमेकस्मादपि तादृशम् ॥
यदेकं भासते यत्र बहुत्वं तत्र दृश्यते ।
इदमेव परन्तत्वं धर्मश्चैवं सनातनः ॥
अहमन्यन्नेति ख्यातं त्रितयं हि सनातनम् ।
ओमित्येकेन शब्देन गृह्यते तत्परावरम् ॥
अहमात्मा समाख्यातश्चान्यदेतज्जगत्प्रभा ।
नेत्येतद्वितयोर्भिन्नं द्वयोस्संबन्धरूपकम् ॥
एवमेतदकारेण चोकारेण क्रमेण च ।
मकारेणैव वेद्योयमात्मानात्मा निषिद्धकम् ॥"

इत्याद्युक्तिस्संगच्छते । तस्मादेकस्माद्बहुत्वं हि प्रजायते, इति सर्वत्र दृश्यते। अत्र हि वीर्यवृक्षन्यायस्सर्वथा ह्युदाहरणं भवति । अतः

" प्रत्येकवीर्यं बहुवृक्षकामना
वृक्षस्तथा वीर्यपरः प्रकाशते ।
परंपरा चास्ति सनातनीयं
धर्मो हि लोकस्य परावरस्य ॥"

इत्यादि प्रवचनम् । दृश्यतामिह—वीर्येऽपि त्रितयक्रमः, द्वयोरन्तर्गतमंकुरं तृतीयम्, तेनैव सर्वे वृक्षादयः प्रजायन्ते। भवनमा-

त्रेऽपि तादृशो नियमो विज्ञेयः। अत एव चैकदेशेन समुदायानुमानंन्यायसिद्धं भवति। अत एव

" एकत्र दृश्यते यच्च बीजं सर्वत्र तस्य च ।
ओमित्यन्तर्गतं सर्वमतीतं ब्रह्मकल्पनम् ॥ "

इत्यादि प्रवचनम् । तस्माद्ब्रह्माण्डकल्पनार्थं सर्वेषामपि जिज्ञासा ह्युदेति । अत एव वेदाध्ययनं तज्ज्ञानार्थमावश्यकं भवति। प्रणवमात्रेण तु सर्वावधारणं संसाररूपम् , स्वयमपि तत्रान्तर्गतमितिच बुध्यते। तस्य क्रमिकत्वावधारणं पृथक्प्रतिभासनं गायत्र्यर्थेन बोध्यं भवति । इदमित्थमस्त्येवेति विचारमात्रार्थकः, आचरणार्थश्च वेदोऽध्येतव्यः ।

प्रकारप्रतिपादनार्थं तादृशञ्च महावाक्य चतुष्टयं वेदितव्यम् । चतुर्णां वेदानां हि मूलवाक्यं महावाक्यमिति तद्भावः । सर्वञ्च प्रकारमात्रमोमित्यन्तर्गतं स्थापनीयम् , मान्यञ्चेति तत्फलम् । चत्वारःप्रकाराश्च, ज्ञानेच्छाक्रिया समाहाररूपाश्चेति चतुर्भिर्वेदैर्ज्ञातव्याः, ज्ञात्वा च तथानुकर्तुमुचितमिति शिक्षाफलं भवति। अत एव

" तपस्तप्त्वा स्वयं ब्रह्मा संसाराख्यं प्रवर्तयेत् ।
एवं विष्णुस्तपस्तप्त्वा शिवोऽप्येवं सनातनः ॥
तपः कृत्वा यथायोग्यं पश्चात्संसारकल्पनम् । "

इत्याद्युक्तम् । अत्र हि तत्तस्य तपसः, प्रकाररूपज्ञानार्थमेवं

जगन्मूलकर्तृ प्रशस्तं हि चैतत् ॥
परं गोचरं ज्ञानगम्यं स्वरूपं
स्वतस्सिद्धमात्मा क्रमेणाभियुक्तः ।"

इत्याद्युक्तम् । वस्तुतस्तु

"स्वयं वेदान् स्वयं विद्यान्महावाक्यं स्वयं स्वयम् ।
स्वयमेव महामन्त्रं स्वयं मन्त्रं प्रयुज्यते ॥
स्वयमेव महायन्त्रं तन्त्रमेव स्वयं विधम् ।
अणोरारभ्य सर्वस्वमोमित्यन्तर्गतं विभुम् ॥"

इतिप्रवचनम् । तस्मादेतत्कार्यार्थं स्वाभाविकं कर्तव्यार्थं बहुत्वकल्पनार्थञ्च सर्वज्ञानं भवति । तस्मात्प्रणवादारभ्य, महावाक्यादिकं ज्ञात्वा ब्रह्मभावाय कल्पतामित्युपदेशः । अत एव सर्वाश्रयम्, सर्वं खल्विदं ब्रह्ममयम्, ब्रह्मतत्वम्, सर्वपरं सार्वकालिकं सत्यप्रतिष्ठितं त्रितयात्मकं समाहाररूपञ्च मान्यम्" इतिव्याख्यानफलम् । तस्मान्महावाक्यादिकम्, प्रकारज्ञानार्थमध्येतव्यमिति सिद्धान्तः । यद्यपिलघुत्वमहत्वव्यापारेण भेददर्शनं भवति, तथापि प्रणवान्तर्गतमन्तव्येन स्वात्मनो ब्रह्मत्वकल्पनेन तत्प्रतिभासः । आरम्भावसानबीजेन, सर्वमेतत्सदृशं बोध्यम् । यद्यपि चाणोर्दृष्ट्या महाविष्णोर्महत्वम्, तथापि ओमित्यस्यातीतत्वादनन्तत्वाच्च महाविष्णोरपि तादृशमणुत्वं वक्तुमुचितम्, दृश्यता-

मिह—लोके महतामपि महान्, लघूनामपि लघुः इति भासनात्।
भवनमात्रे बीजमेवमनुमेयम्। अत एव सर्वार्थे महत्वलघुत्वव्यापारं
त्यक्त्वा तत्सहितं प्रणवरूपमोमित्येतत्स्वरूपमाभिधीयते। अत एव।

" नैवाणुभासते किञ्चिन्नमहत्वं परावृतम्।
सर्वं ब्रह्ममयं विद्धि चोमित्येतन्निदर्शनम्॥
अत्राणु भासते यद्धि तच्च ब्रह्माण्डकारकम्।
सर्वाणावपि सर्वस्वं विश्वमेवं प्रदृश्यताम्॥
ब्रह्मत्वात्तदतीतत्वादन्तानन्तप्रवाहनात्।
संसारे प्यणवस्सर्वे तत्राप्येवं हि तादृशः॥
सर्वथा सर्वदा सर्वं सर्वं प्रणवसंस्थितम्।
अनन्तमव्ययं विद्धि चाणुरप्येकसंज्ञकः॥
आवश्यकमनेकत्वं सर्वं विद्धिपरात्परम्।
इदं परावरं ज्ञानमिदमेव महत्सुखम्॥
इदमेव परं तत्वं रहस्यं वेदसंज्ञकम्।
महावाक्यरहस्यञ्च गायत्रीं तत्वनिश्चिताम्॥
तस्मात्साङ्गमधीत्यैवं कुरुब्रह्माण्डकल्पनम्।
इदमेव परं कार्यं सर्वे कुर्वन्ति संसृताः॥
स्वतस्सिद्धमिदं सर्वं स्वयं प्रोक्तं स्वयंभुवा।
ओमित्येतत्स्वरूपान्तं साध्यतामेव सर्वथा॥ "

इत्यादिप्रवचनम् । तस्मात्सर्वमेतादृशं प्रणवकार्यं प्रणवमेवकरोतीति निश्चयात्तादृशं कार्यं साध्यतामित्युपदेशः । एतदर्थं महावाक्यादि ज्ञानप्रयोजनमभिधीयते । इदमेव ब्रह्मतत्वं परमसिद्धान्तरूपं ज्ञेयमिति फलितम् । अत एव चाणुमात्रे, ह्योमित्येतत्स्वरूपं तत्रानेकविश्वञ्च बोध्यम् । प्रत्येकं विश्वानामनेके चाणवः । समीयतामित्यन्योन्यव्यवहारः । अत एव "अणुना जायते विश्वं विश्वेनैवाणुसंभवः" इत्याद्युक्तम् । तस्माद्ब्रह्मभवनं ब्रह्माण्डकल्पनमात्रमेव सर्वप्रयोजनं भवति । पुनरपि जगत्कल्पनं विश्वकल्पनं महाविश्वकल्पनमितीत्यादिक्रमेण महाविष्णु पर्यन्तं गमनौचित्यमुक्तं भवति । अत एव

"महाविष्णोरणुं विद्धि चाणोरेवं विधीयताम् ।
एष परस्परो योगः संसारे सर्वहेतुकः ॥"

इत्यादिवेदवाक्यैः स्पष्टमुक्तं भवति । अत एव बन्धमोक्षयोरपि तादृशमनावश्यकत्वमुक्तं भवति । यथा—चाणुरस्ति बद्धः, स च मुक्तो भूत्वा तदवस्थातो निर्गत्य स्थानान्तरगतोऽपि तादृशं बन्धमेव पुनः प्राप्नोति । अत एव बन्धमोक्षचिंता न कार्या इत्युपदेशः ।

यद्यपि चाणोरवस्थातः महाविष्णोर्महत्वं मुक्तत्वञ्चोक्तम्, तथापि चान्तर्यदृष्ट्या तस्यापि तादृशः सुखदुःखबन्धव्यापरो

वेदितव्यः । यद्यपि महाविष्णुः स्वतस्सिद्धः, सर्वस्वभावजः मन्यते, तथापि भवनमात्रव्यापारस्तु भवत्येवेति निश्चयादन्यदृष्ट्याप्यणुत्वात्तादृशी गतिरिति व्याख्यानफलम् । अतःसर्वावस्थायां सर्वत्र सर्वकाले च स्वात्मानमानन्दस्वरूपं प्रणवमयं विद्धि, न मोक्षो न च बन्धश्च मन्तव्यः, नैव मोक्षे चेच्छा कर्तुमुचिता, सर्वं प्रणवात्मकं विद्धीत्युपदेशफलं भवति । तस्माद्गायत्री महावाक्यञ्च वेदितव्यं भवति । ततो ऋग्वेदादिक्रमेण वेदान्साङ्गानधीत्य, ज्ञात्वा च परमं तत्वम्, तादृशञ्च भवनव्यापारम्, स्वभावतः तादृशावश्यकेन कार्यकरणमात्रप्रयोजनतया ब्रह्माण्डकल्पनं भवतीति ब्रह्मविज्ञानफलं भवति । अत एव ब्रह्मतत्वज्ञानाय " षड्भिरङ्गैरित्याद्युक्तम् । अत्र चत्वारो भेदाः, तन्मूलं महावाक्यादिकम्, क्रमेण ज्ञातव्यं भवति । अयमेवारंभक्रमः। अतस्सर्वैः, महाविष्णुस्वभावः त्रिमूर्तयस्सूर्यो तद्गातिविशेषाः, लोकमानम्, सप्तसप्तक्रमादिकम्, सर्वेश्वरक्रमः गायत्रीमहावाक्यावतारश्च, वेदाध्ययनमेव परमं तप इति, सर्वं ज्ञानमात्रमिति च वेदितव्यम् ॥

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे तृतीयप्रकरणे

॥ तृतीयस्तरङ्गः ॥



ॐ

ॐ

## ॥ अथ चतुर्थस्तरङ्गः ॥

अथ गायत्रीमहावाक्यश्चेत्यनयोः गायत्री, विधानेन पूर्वा, ज्ञानेच्छाक्रियासमाहाररूपा च विज्ञेया। अत एवेयमेकपदी, द्विपदी, त्रिपदी, चतुष्पदी, चेत्युच्यते। प्रथमपादेन ज्ञानव्यापारः, द्वितीयपादेन क्रियाव्यापारः, तृतीयपादेन चेच्छाव्यापारः, तुरीयेन समाहार इति विज्ञेयम्। चतुर्भिः प्रकारैः संसारो जायते, इति महाविष्णोः परिभावना भवति। सैव गायत्री। तस्मादेव "एकपदी, द्विपदी, त्रिपदी, सा चतुष्पदी इत्याद्युक्तिः, एवं हि सा गायत्री चावगम्यते—तत्सवितुर्वरेण्यम्, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्, इति" अत्रैव तुरीयपादसमाप्तिरप्यवगम्यते, तत्सवितुरिति प्रथमः, वरेण्यमिति द्वितीयः' भर्गो देवस्य इति, तृतीयः, धीमहि धियो यो नः प्रचोदयात् इति, समाहाररूपस्तुरीयश्च विज्ञेयः। अत्र छन्दो विधिना प्रत्येकमप्यक्षराणां श्लोकत्वमुपजायते।

यच्च, तत्सर्वं प्रणवस्वरूपं संसारवाचकं प्रकाराख्यानरूपमेवेत्यावेदयति; तन्महावाक्यम्। महाविष्णोः परिभावनीयत्वाद्गायत्र्यास्सर्वान्तर्गतत्वं विज्ञेयम्। "ओमन्तर्गता हि भवति

गायत्री" इत्यादिना परस्परसंबन्धफलम् । तस्मादेव गायत्री, सर्वेषां मंत्राणां महामन्त्रवाच्या भवति । अत एव

" एषा त्वनन्ता सावित्री गायत्री वेदवासिनी ।
ओमित्येतत्प्रतिष्ठा च महामन्त्रसमुद्भवा ॥ "

इत्यादिप्रवचनम् । तस्मान्महामन्त्रत्वेन चैतद्बोधः । सर्वाख्यानपरत्वादस्याः, सावित्रीति चोक्तिः । सवितारं सर्वानुगतं संसारप्रतिष्ठापकम्, इति सर्वाख्यानार्थः। तस्मात्सावित्री गायत्री, प्रणवान्तर्गता, महामन्त्ररूपा सर्वमन्त्रकर्त्री वेदमाता, इति वेदितव्यं तद्विशेषणम्। अत एव च "सर्वतः परमा गायत्री" इतिविख्याता भवति ।

यद्यपि चास्याः षट्पादत्वमष्टपादत्वमवगम्यते श्रुतिभिः, तथापि संख्यायाः साख्यत्वप्रवचनेन वेद्यत्वं भवति । एकाङ्कस्याप्यन्तवत्वमाख्यातम् । तस्माद्गायत्र्याः सांख्यपरत्वं बोद्धव्यम् । संसारमाते चास्मिश्चतुष्पदैश्च गायत्री हि व्यवस्थिता, तत्पूर्वविधेः। तादृशेन प्रत्येकं त्रिविधेन भेदेन, समाहारेण च गायत्र्याः पूर्वम्, सप्त व्याहृतयो भवन्ति । ताश्च भूः, भुवः, स्वः, महः, जनः, तपः, सत्यम्, इति हि क्रमजाः । ओङ्कारेण प्रतिबन्धो भवति, सर्वान्तर्गतत्वात्सर्वमूलत्वाच्च । अत एव ह्योंकाराख्याने, " ओङ्कारस्य ब्रह्मा ऋषिः, गायत्रीछन्दः, शुक्लो वर्णः, सर्व-

कर्मारंभे विनियोगः" इत्याद्युक्तम् । यद्यपि चोङ्कारस्य सर्वेऽपि ऋषयः, तथापि क्रियाव्यवहारेणास्मिन्संसारे ब्रह्मणः ऋषित्व-मुक्तम् । तद्व्यवस्थयैव गायत्री, इति तच्छन्दः । शुक्लो वर्णः प्रकाशरूपः, "प्रकाशात्मकमिदं प्रणवस्वरूपम्" इति वचनात् । सर्वकर्मारंभे तद्विनियोगः। इदमेव सर्वेषां कर्मणां मूलम्, अकारो-कारमकारान्तर्गतं सर्वमिति व्याख्यानात् ।

विनियोग इत्युक्त्यापि तादृशं गृह्यते । वीति विचार्यो-ऽयमात्मा भवति, नीति संबन्धरूपः, योगश्च संसारः इति चार्थत्रयम्, युज्यते योग इति तदर्थात् । अतश्चात्मसंसारनि-षिद्धानां त्रयाणामेकत्वात्सर्वकर्मारंभेषु तदुपस्थितिः । अत्रारंभश-ब्देन कर्मसामान्यं गृह्यते । आरंभस्यारंभे, अवसानस्य चारंभे चेदं प्रणवसंज्ञकमोमिति स्वरूपं वेदितव्यम् । तस्मात्तत्व्याहृत्य-न्तर्गतमोमिति बोध्यम् । पूर्वसिद्धान्तितस्य ज्ञानेच्छाक्रियाभे-दस्य, समाहाररूपस्य च ज्ञापिकाः व्याहृतयश्चेति तद्भावः । गायत्र्या तु सर्वस्य समाहारस्य बोधो भवति । तस्य प्रत्येकं पृथग्बोधाय व्याहृतीनां प्रवचनं भवति । मूलन्तु तिस्रः ज्ञाने-च्छाक्रियाः भवन्ति । अतः व्याहृतित्रयसहिता गायत्र्युच्यते, यथा—ओं भूर्भुवः स्वः इति । एतत्सहितैव गायत्री सर्वदा मन्तव्या भवति । विना चैताः गायत्री न तिष्ठति । विना चैत-

त्रयं गायत्री संज्ञापि न भवति । गायन्तीः ज्ञानेच्छाक्रियास्तिस्रः समाहारश्च या, समूहश्चावधारणरूपं त्राति, चैकीकृत्य इति, सा गायत्रीति तदर्थः । अत एव

" ओङ्कारसहिता प्रोक्ता गायत्री त्रितयात्मिका ।
भूर्भुवस्वः प्रयुक्ताच सर्वथा मुक्तिदायिनी ॥ "

इत्याद्युक्तम् ।

त्रितयस्यैतस्य सप्त संख्या चात्र परिदृश्यते । अतस्सप्त-व्याहृतीनां सप्तर्षयः, सप्तदेवताः, छन्दस्सप्तकञ्च विज्ञायते । आसाञ्च सप्तानां ऋषयो नियन्तारः भवन्ति । तत्स्थापकाश्च देवताः । शब्दानां प्रकारसप्तकानिर्णायकानि च छन्दांसि । अत एव " सप्तप्रकारकाश्शब्दाः " इति शब्दशास्त्रसिद्धान्तः, तस्माद्गायत्र्युपयुक्तास्सप्तव्याहृतयोमंतव्याभवंति । अत एव " सप्त-व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकाश्यपाः ऋषयः, गायत्र्युष्णिक्त्रिष्टुबनुष्टुब्बृहतीपाङ्क्तिजगत्यः छन्दांसि, अग्निवाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवाः देवताः " इत्याद्युक्तिः । नियमेनानेन प्रतिब्रह्माण्डमेकैकस्मिन्नपि संसारे कार्याणामारंभा-वसाने च भवतः इति तत्फलं भवति । अत एव

" सप्त व्याहृतयश्चैवमोङ्कारेणाभिवेष्टिताः ।
गायत्र्या च महामन्त्रं ज्ञात्वा ब्रह्मत्वमेति हि ॥"

इत्याद्युक्तम् । एवमेव

" सा ज्ञानेच्छाक्रियानिष्ठा व्याहृतिस्त्रितयात्मिका ।
गायत्र्यादौ प्रतिष्ठेत सर्वसिद्धान्तवाचिका ॥
एकाक्षरेण विश्वस्य प्रकारैक्यं प्रबुध्यते ।
सर्वं प्रकारमात्रन्तु प्रणवेनाभियुज्यते ॥ "

इत्याद्युक्तिः । तस्माद्व्याहृतिसप्तकं व्याहृतित्रिकञ्च गायत्र्युपयुक्तं भवति । ज्ञानेच्छाक्रियाणां सादित्वात्, विना च पृथक्त्वं समाहारस्यासंभवात्, समाहाररूपायाः गायत्र्याः आदौ सर्वाः व्याहृतयः प्रयोक्तव्याः ।

एवं हि किल तस्याश्चार्थविज्ञानं भवति । भवतीति भूः एतच्चात्मनिष्ठम्, तद्वर्धनक्रिया हि संसारयोगः भुवः क्रियारूपः ; स्वरिति निषिद्धरूपमिच्छात्मकं बोध्यम् । अत एव यज्ञेषु सर्वेषु स्वाहा चेति प्रयुज्यते । अग्निना चाहूयते सर्वमिति तन्मुख्यार्थः । यद्यपि "होमेन प्रवर्धन्ते विश्वानि" इति वचनम्, तथापि निषिद्धस्य सबन्धरूपत्वात्तस्य वर्धनकारणत्वमुक्तं भवति । भूरिति ज्ञानं भवन्मात्रम् । तस्य च क्रमः भुवः । स्वरिति तदवसानमित्यकारोकारमकारान्तर्गतमेतत्सर्वमिति विज्ञेयम् । अत एव

" भूरित्यकारजं बोध्यं भुवश्चैतदुकारजम् ।
मकारजं स्वरित्येतद्व्याहृतिस्त्रितयात्मिका ॥

महामन्त्रादिमध्यान्ते प्रणवस्सुप्रतिष्ठितः ।
आद्यव्याहृतयस्सर्वास्ताज्ञानेच्छाक्रियापराः ॥
ज्ञानेन भवनं विद्धि क्रियया तु स्वयं भुवः ।
इच्छासंबन्धरूपेण स्वरित्येवं हि विद्धि मे ॥ ”

इत्यादिप्रवचनम् । अत एव

“ भूर्विष्णुस्सर्वनिष्ठश्च भुवो ब्रह्मा पितामहः ।
स्वश्चेति शङ्करो ज्ञेयःत्रिभिश्च धार्यते जगत् ॥
गायत्री च महाविष्णुः सर्वसंबन्धकारणम् ।
ओङ्कारो ब्रह्मवेद्योऽयं संसारोऽयं त्रिधा भवेत् ॥
इदं त्रिभुवनं पश्य चैकैकाणुप्रतिष्ठितम् ।
ज्ञानमिच्छाक्रियाचैवं सर्वोपन्यस्तकारणम् ॥
दिगात्मकालसंयुक्तं संसारं विद्धि सर्वधा ।
इदं त्रिभुवनं सत्यं त्रैलोक्यं त्रितयात्मकम् ॥ ”

इत्यादिवचनञ्च । तस्माद्व्याहृतित्रयाणां गायत्र्यादौ प्रयोगः । त्रितयस्य कारणत्वञ्चाप्यनेन सिद्धं भवति । एतेषां त्रयाणां भेदाश्चत्वारो महरादयः भवन्ति । एतत्त्रयमूलं महः, तदेव चतुर्थम् । पञ्चमस्तु जनः, जनयति सर्वमिति तदर्थः । तपस्तज्ज्ञानधारणं क्रियाया विपरिणामरूपम् । सत्यन्तावत्सर्वसंयुक्तं वेदितव्यम् , “ यत्सत्तदमृतम् ” इत्याद्युक्तेः । एवं विधाः सप्त-

व्याहृतयो गायत्री च व्यवस्थिता भवन्तीति विज्ञेयम् । गायत्री च तादृशेन, क्रियाज्ञानेच्छासंसरणव्यवहारेण, चतुर्णां षड्भिर्गुणनेन चतुर्विंशत्यक्षरात्मिका भवति । एवञ्चास्या अनन्तत्वं सांख्यत्वञ्च बोध्यम् । अत एव

सप्तभिर्वेष्टितां सिद्धां गायत्रीं मन्त्रमूलिकाम् ।
ओमित्यनेन संबद्धां योगिनः पर्युपासते ॥
योगिनां सर्वसिद्धानां ज्ञानिनां कार्यकारणात् ।
एतत्प्रयोजनं विद्यात्तज्ज्ञानांशेन निर्णयः ॥ ”

इत्यादिप्रवचनम् । तस्माद्योगिनामेव सप्तव्याहृतिसहितायां गायत्र्यामधिकारः । ज्ञानविकासरूपश्चयादृशं, तादृशस्तदधिकारो भवतीति नियमः । व्याहृतित्रयसहितायां गायत्र्यान्तु सर्वेषामधिकारः , एतत्त्रयाद्भिन्नन्नकिञ्चिदिति नियमात् । अत एव प्राणायामेऽपि चैतत्त्रितयकार्यम्, कुंभको रेचकः पूरकश्चेति तद्विधानम् । पूरकस्तावज्ज्ञाननिष्ठः । कुंभकः क्रियानिष्ठः । रेचकस्तु संबन्धरूप इति योगशास्त्रनिर्णयः । अत एव

“ योगश्च त्रिविधः प्रोक्तः राजलक्ष्यहठावृतः ।
राजयोगः क्रियायां हि चित्तवृत्तिनिरोधकः ॥
तत्रापि त्रितयत्वं स्यात्सर्वज्ञानपरायणम् ।
लक्ष्ययोगेऽपि त्रैविध्यं हठेऽप्येवं हि तादृशम् ॥

स्याज्ज्ञानेच्छाक्रियानिष्ठः त्रितयो योगसंज्ञकः ।
आत्मनिष्ठं स्वयं ज्ञानं राजयोगे विधीयते ॥
हठयोगो भवेद्विश्वं लक्ष्ययोगो निषिद्धकः ।
ओमित्यन्तर्गतं सर्वमकारादिक्रमेण च ॥
प्राणायामे तादृशश्च हठयोगान्तरो विधिः ।
पूरको ज्ञाननिष्ठस्यात्कुंभकस्तु क्रियापरः ॥
रेचकस्तु निषिद्धोऽयं मकारान्तर्गतो भवेत् ।
पूरको ज्ञानसंपन्नः ज्ञानमात्रे सुनिष्ठितः ॥
कुंभकस्तु श्रमार्थाय संसाररचनात्मकः ।
रेचकस्तद्विनाशार्थः प्रणवेनाभिलक्षितः ।
ओमित्येतत्स्वरूपात्तु सर्वाव्याहृतिरुद्धृता ।
गायत्री च हि तन्निष्ठा समाहारसमात्मिका ॥''

इत्यादि प्रवचनम् । तस्मात्सप्तव्याहृतिसहिता गायत्री , प्राणायामे विनियुक्ता भवति । तत्र सर्वज्ञानाधिकारः । अतो योगिनामेव प्राणायामस्यौचित्यमुक्तं भवति । जपार्थो व्याहृतित्रयात्मिका गायत्री प्रशस्ता भवति । अत एव

'ओङ्कारसहिता चैवं गायत्री त्रितयात्मिका ।
जपतां ब्रह्मभावः स्यात् नैष्काम्यं कर्मसंस्थितम् ॥
निष्फलस्सफलश्चैव न मंत्रोऽयं परावरः ।

केवलं ज्ञानमूलार्थी गायत्रीं पर्युपासते ॥
एवं बुध्वा जपेनैव साक्षाद्ब्रह्मत्वमाप्नुयात् ।
संसारज्ञाने पूर्णे तु स्वयं संसारकल्पकः ॥"

इत्यादि प्रवचनम् । वस्तुतस्तु ओङ्कारस्यैव जपस्सर्वत्र प्रशस्यते। ओमित्येतज्जपताञ्च यज्ज्ञानम्।, तदेव परमं पदमिति सर्वत्र स्पष्टमुक्तं भवति । एतेषां त्रयाणामात्मानात्मनिषिद्धानां भासनमेव तज्जपः । प्रत्यक्षेण त्रितयात्मकं सर्वमिति तु तद्बोधफलं भवति । क्रमस्तु व्याहृत्यादीनुपास्य, जप्त्वा च ह्योङ्कारभावम्, प्रणवत्वञ्च प्राप्नोति । प्रत्येकञ्चाणावपि , तदोङ्कारस्यविद्यमानत्वात्, ज्ञानेच्छाक्रियाविद्यमानत्वाच्च सर्वेषां ज्ञाने दर्शने पुण्यमस्तीत्युक्तः । अत एव

" एकाणावपि बोद्धव्या गायत्री त्रितयात्मिका ।
ओंकारो विद्यते यत्र ब्रह्मत्वन्तत्र मन्यताम् ॥
अणुज्ञानाद्धि भूतैश्च ब्रह्मत्वं लभ्यते सदा ।
अतो ह्येवं जगन्मात्रं गुरुरेव परात्परः ॥
अयमेव परो धर्मश्शाश्वतो ब्रह्मसंज्ञकः ।
इमं सनातनं सर्वं विद्धि लोकं परावरम् ॥
जननं जीवनं चैव मरणञ्च ततः परम् ।
एतदर्थाय सर्वस्वं दानाध्ययननिश्चितम् ॥

योगस्यैवं परं तत्वं ज्ञानमेतत्त्रयात्मकम् ।
व्याहृतिश्चैव गायत्री प्रणवात्मपरायणी ॥
एतत्संसरणेनैवं जपाभ्यासेन सर्वथा ।
त्रयाणां भासनं यत्स्यात्तद्धि योगफलं भवेत् ॥ ”

इत्यादि प्रवचनम् । अन्यथा तु सर्वं मन्त्रमात्रं योगादिप्रकारश्चानुपयुक्तं भवेत् । अत एव

“ तदोङ्कारसिद्धं सदा मुक्तरूपं
विमुक्तं सदा बन्धनं संप्रयुक्तं ।
न योगैश्च युक्तं सदा योगयुक्तं
समायोग संयोग संहाररूपम् ॥
अकारः परस्तत्वमेकः प्रधानो
ह्युकारः सदा सत्वसंसाररूपः ।
मकारो निषिद्धस्स च ज्ञानसिद्धः
तथा वश्यकं ब्रह्म रूपञ्च सर्वम् ॥
अणुस्सर्वलोकः प्रशस्तं बहुत्वं
ह्यणावेव सर्वे गुणाः कामनेयम् ।
महामन्त्र एषस्सचाध्यासमूलः
स्वतास्सिद्ध आत्मा विरूपः स्वरूपः ॥ ”

इत्यादि प्रवचनम् । तस्मादोङ्कारव्याहृत्युपयुक्ता गायत्री महामं-

त्रात्मिका विष्णुनिर्णायकात्मस्वरूपा चैवं प्रकारेण प्रसिद्धा भवति ।
ज्ञानमात्राणामेतेषां प्रयोजनञ्च तादृशं ब्रह्माण्डकल्पनमेवेति
व्याख्यानफलं भवति । अत एव

" सप्तव्याहृतीर्विज्ञाय गायत्रीञ्च परात्मिकाम् ।
तां ज्ञानेच्छाक्रियारूपां ब्रह्मतत्वाभिवेष्टिताम् ॥
क्रियतां कल्पनं नित्यनवं मोक्षस्सुखास्पदः ।
एतदर्थञ्च सर्वस्वं राजयोगफलोदयम् ॥
हठयोगफलश्चैव लक्ष्ययोगसमाश्रितम् ।
सांख्यं विचिन्त्य सर्वस्वं कर्तव्यं नित्यकल्पनम् ॥
प्रत्येकमण्वणोरेवं सर्वत्रैवोपदिश्यते ।
एतदर्थपरा कांक्षा संसारे भासते सदा ॥
जिज्ञासा वा जिहासा वा चेप्सा सर्वत्र संस्थिता ।
मूलञ्च तद्भवेद्ब्रह्म नित्यं वै तस्य धारणम् ॥
एवमेव हि सिद्धान्तः सर्वथानन्तसाधनः ।
अतीतश्चानतीतञ्च वेदितव्यं तयोः परम् ॥ "

इत्यादिप्रवचनम् । एवमेवात्मज्ञानार्थं गायत्र्यभ्यासः सर्वमूलो-
ङ्कारसहितः कर्तव्यः । सत्येवं कृते निश्चला पदवी प्राप्नोति ।
सर्वथा चलितमेव निश्चलं भवति । अत एव

" नाभिनन्देत मरणं जीवनं जननं तथा ।

सुखदुःखौ न तौ वेत्ति सर्वथा सार्विको विभुः ॥
सर्वावस्था समा तस्य सर्वानन्दप्रदा भवेत् ।
सर्वमावश्यकं मत्वा ब्रह्माभ्यासं करोति च ॥
एतदभ्यासमूलेन साक्षाद्वै प्रणवो भवेत् ।
प्रणवार्थमिदं सर्वं प्रणवेन प्रयोजितम् ॥"

इत्यादि प्रवचनम् । एवमेव

"स्वात्मार्थे सर्वं कर्तव्यं स्वात्मार्था स्वप्रचिन्तना ।
स्वात्मना स्वात्मसंभावः स्वात्मा स्वात्मा स्वयं स्वयं ॥

इत्याद्यपि च । सर्वत्रात्मानं पश्येदित्युपदेशफलम् । इदमेवात्मज्ञानमात्मदर्शनञ्चेति फलितार्थः । तस्माद्व्याहृतिः, गायत्री च तदोङ्कारनिष्ठा, विष्णोरवधारणरूपा, संसारात्मिका मन्तव्येति व्याख्यानफलं भवति । तत्प्रकाराणां पृथगुपाख्यानन्तु, तादृशावधारणार्थकं तात्कालिकं महावाक्यचतुष्टयमिति वेदितव्यम् ।

अस्मिन्नपि ज्ञानांशे यदवधारणन्तत्प्रथमं ऋग्वेदनिष्ठम् । तेनैव ऋग्वेदोऽजायत । अहं ब्रह्मास्मीति तद्वचनम् । द्वितीयन्तु क्रियांशावधारणम्, कर्तुं शक्यमिति । यदहमित्थमस्मि, तत्किमर्थमेतत्स्वरूपं क्रियानिष्ठं महावाक्यं यजुर्वेदोपन्यस्तम् । बहुस्यामिति तन्मूलं भवति । ततः परमेतयोः संबन्धश्चेच्छारूपः, केन प्रकारेणाहं स्यामिति, एतद्योगमात्रं साम्वेदनिष्ठं

महावाक्यन्नैवास्तीहेति किञ्चन इति । ततः परं त्रयाणाम्, किं प्रयोजनम्, किमेतत्, इति त्रयाणामेकीभवनरूपं समाहार-निष्ठमथर्ववेदोपन्यस्तञ्च महावाक्यम् । तच्चाहमेतन्नेति स्वरूपम्, दुस्तरमिति तन्मूलम् । इमानि च चत्वारि महावाक्यानि, वेद-चतुष्टयोत्पन्नानि भवन्ति । अन्नाहमित्येतज्ज्ञाननिष्ठम् । एतदिति क्रियापरम् । नेतीत्विच्छापरं संबन्धरूपम् । दुस्तरमेतत्त्रयमिति फलितं भवति । अहमित्यस्य चैतदा योगः, स च संसारः । एतदश्च नकारेण योगः, स च निषेधः । तस्मादहमेतदस्मि, एतन्नहामस्मि, इत्यपि च महावाक्यद्वयं योगपरं वेदितव्यम् । तस्मात्त्रयाणां पृथक्त्वमेकत्वञ्च वेदितव्यमिति व्याख्यानफलम् ।

यद्यपि तत्त्वमसि, अहं ब्रह्मास्मि, सर्वं खल्विदं ब्रह्म, नेह नानास्ति किञ्च न, इत्येतेषां महावाक्यत्वेन प्रवचनम्, तथाप्येतन्नाहमस्मीति महावाक्यस्य तुरीयस्य साधकत्वेन सत्वे तस्य महावाक्यत्वं सिध्यति । सर्वेषां महावाक्यानां समाहाररू-पम्, "अहमेतन्नास्मि" इति मूलमहावाक्यमथर्ववेदस्थितं वेदि-तव्यम् । अहं ब्रह्मास्मीति तु ज्ञानप्रकाररूपम् । तच्च चतुर्थ-स्यादिमं पदम् । तत्त्वमसीति क्रियापरम् । क्रियायामेव हि, त्वमहमयमन्य इति प्रपञ्चः । तच्च चतुर्थस्य द्वितीयेनैतच्छब्देन बोध्यं भवति । नेह नानास्ति किञ्च न इति त्विच्छापरनम् ।

इच्छायामेव सर्वस्य प्रतिषेधः। तच्च चतुर्थस्य नेति वाक्यस्य मूलं भवति। सर्वन्तत्खल्विदं ब्रह्मेति तु, अहमेतन्नास्मीति समाहारबीजम्। तस्मादष्टौ महावाक्यानि भवन्ति। तन्मूलन्त्वहमेतदस्मि इति नवमम्। एतन्नाहमस्मीति दशमम्। अहमेतन्नास्मीति मूलवाक्यस्यैव पूर्वापरभेदेन द्वैविध्यम्। तस्यापि संसारदृष्ट्यामहावाक्यत्वेन प्रवचनम्। अहमस्मीत्येव तु संसारः। तत्रैव ज्ञानक्रियायाः संबन्धः। इच्छापि च तत्र तिष्ठति। तस्मात्तद्योगेन "सत्यं ज्ञानमनन्तं ब्रह्म" इति ह्येकादशं महावाक्यम्। सत्यमहम्, ज्ञानमेतत्, अनन्तमिच्छात्रयं ब्रह्मेति सिद्धान्तः। अत एव सत्यममृतस्वरूपोऽयमात्मा। तस्य चैतद्योगेन ज्ञानं भवति। यावच्चाहमेतयोर्योगो न भवति, न तावज्ज्ञानसंभवः। अहमेतयोर्योगस्यैव ज्ञानरूपत्वं वक्तव्यम्। यज्ज्ञानं सत्यञ्च सत्यं ज्ञानञ्च, तदनन्तन्नसत्यन्नज्ञानम्। अत एव "सत्यं ज्ञाननिष्ठमनन्तन्तद्ब्रह्म" इत्याद्युक्तम्। एवमेतन्नास्मीति योगेन चास्मीति क्रियायामेकत्वाद्यारोपः। यदहं तदेतत्, यदेतत्, तन्नाहमिति योगफलं भवति। तेनैव चैकोऽहं बहुस्यामिति निषिद्धम्। तन्मूलमहावाक्यमहमेतन्नस्यामित्येतन्मूलेम्, अहमेतन्नास्मीति प्रवचनपरम्। इमानि द्वादशमहावाक्यानि भवन्ति। सर्वमूलमहावाक्यन्तु, पूर्वमाख्यातं महावाक्यचतुष्टयमेव। पञ्चमन्तु,

अहमेतदस्मि , एतन्नाहमस्मि , इति ऐक्येन सिद्धं भवति । त-स्मात्पञ्चमहावाक्यानीमानि प्रसिद्धानि भवन्ति ।

सर्वेषां मूलमहावाक्यन्तु अहमेतन्नास्मीति बोध्यम् । अहमेतन्न इत्येतत्त्रितयमेव सर्वत्र भासत इति विज्ञेयम् । महा-विष्णोरवधारणप्रकारस्तु प्रथमः ज्ञानपरः, तेनाहमित्युक्तम् । अहमित्येतदुक्त्या केवलं ज्ञानमात्रमात्मस्वरूपं ग्राह्यम् । द्वितीयं क्रियापरमेतदित्युक्तम् । एतदित्युक्त्या तत्त्वमसीत्यादि बोधः । त्वमहमयमन्यदेतद्यत्तदित्यादिप्रपञ्चात्मकं विरोधस्वरूपं भासते । इदमेव संसारः । अस्यैव नानात्वं चोच्यते, अहमाचैतदो योगस्य, ज्ञानं स्मरणं धारणं करणं कारणं कार्यं कर्ता प्रयोजनं प्रवृत्तं प्रकृष्टश्चेति चोच्यते । एतदो ह्यहमो योगेन, निषिद्धं नाशः प्रतिषिद्धं कामना इच्छा कांक्षाशा प्रत्याशा दुराशा निराशा चेत्या-द्युच्यते । तदेवमहमेतन्नास्मीति शब्दत्रयेण बोध्यम् । एतस्यैव बोधनाय सर्वशास्त्रावश्यकत्वम् । तदोमित्यंशे, अहमित्यकार-निष्ठम् । एतदित्युकारनिष्ठम् । नेति मकारनिष्ठम् । अस्मीति चोमेतत्स्वरूपम् । अयमेव प्रणवांशविभवः । अत एव

"अहं ग्राह्यमकारेण चोकारेणानहंकृतिः ।
मकारेण तयोर्भिन्नं नेति शब्देन लक्षितम् ॥"
अकारस्त्वहमात्मास्यादुकारश्चैतदोऽपरः ।

रणमात्मा । तद्वद्वर्णानां कारणमकार इति फलितं भवति । तस्मादकारस्य केवलत्वम्, तदुकारादियोगेन संसर्गोऽपिच भासते । कर्ता च यस्य यादृशः, तादृशं तत्कार्यं च भवतीति न्यायः । कर्ता ह्यवश्यं कार्येतिष्ठति, विना च कर्तारं कार्योत्पत्तेरदर्शनात् । सति च कर्तुरपूर्णत्वेऽनित्यत्वे च कार्यस्याप्यनित्यत्वमपूर्णत्वञ्च भवेदिति निश्चितं भवति । तस्मादात्मनस्संसारेऽपूर्णत्वं निश्चितं भवति । अत एव संसारो मिथ्यात्वेन भासते । नहि चास्यैकरूपेणावस्थितिः । जननं मरणञ्चेति क्रमेण त्रितयत्वम्, महत्त्वाल्पत्वे च, तथा पूर्णत्वानित्यत्वेचात्मन्येव कल्प्येते । अस्यैवात्मनस्सर्वं विशेषणं भवितुमर्हति । आत्मैव हि विशेष्यं भवति । तयोर्भिन्नमन्यत् । न तस्य नामरूपे । न चायं बुद्धेरन्यस्य वा विषयो भवितुमर्हति । आत्मविषयेष्वेव शब्दसंख्याकालादिप्रवचनम्, अन्यदप्यात्मनो वर्तत इत्यपि, आत्मसंभावनयैवानुमीयते । ज्ञाता च पदार्थः, न कदापि ज्ञेयः पदार्थो भवितुमर्हति, ज्ञानस्याविषयत्वात् । "ज्ञानं ब्रह्म" इत्यभिधानात् ज्ञातृज्ञानज्ञेयस्वरूपमिति तत्प्रशस्यते, ज्ञातृज्ञेयज्ञानभेदस्य तत्राभावात् । तस्मात्सर्वज्ञोऽयमात्मा, न तस्य ज्ञाताकश्चिदन्यो भवितुमर्हति । अतो हि ब्रह्मज्ञानं न संभवति । यद्यपि लोके ब्रह्मज्ञानीत्यादि विशेषणं दृश्यते, तथापि तद्भवनानुकूला योग्यतैव संसूच्यते । अत एव

हावाक्यप्रवचनम् । अतः परमपि चानन्तं महावाक्यं वेदितव्यम् । अहमेतन्नास्मीति चतुर्णां ज्ञानेच्छाक्रियासमाहाराणां परिवर्तनेन चतुर्विंशति महावाक्यं भवति । तदेव चतुर्विंशत्यक्षरात्मिका गायत्री भवति । इयमेव पूर्वमवधेया भवति । तदुपरि च प्रत्येकं पृथक्पृथक्प्रकारनिर्धारणे द्वादशमहावाक्यानि भवन्ति । एवं तेषामपि मूलभूतं चतुर्विधं भवति । तस्यापि मूलभूतप्रवचनम्, अहमेतन्न इति चैकं भवति । परिवर्तननिर्वतनानुसारेणैव चाहमेतन्नेत्यस्य दुस्तरत्वमुक्तं भवति । यस्य च परिवर्तनविवर्तनमेवातीतम् , तस्यैव दुस्तरत्वं वक्तुमुचितम् । आन्तर्यदृष्ट्या हि सर्वं सुलभमेव भवेत् । अहमेतन्नेत्यत्र तु नान्तर्यम्, किन्तु सर्वातीतं सर्वतो भिन्नं सर्वानुगतन्तादिति विज्ञेयम्। तस्मादहमेतन्नेत्यनेनैव सर्वसंसारमात्रं द्रष्टव्यम्। प्रत्येकमणोरप्यहमेतन्नेति त्रितयत्वं वेदितव्यम् ,"यदहन्तदणुः यदणुतदहम्" इत्यादिप्रवचनात् । यद्यपि त्वमहमयमन्यदां भेदः, तथापि सर्वान्तर्गतं सर्वमपि स्वयमहमेतन्नेत्यन्तर्गतं भवति । अतः नानात्वन्नकिञ्च न" इत्याद्युक्तिः । "सर्वं खल्विदं ब्रह्म" इत्युक्त्यापि, इदमित्यस्यापि ज्ञानौचित्यमुच्यते—इदमितीदमेव एवमहमेतन्नेति । तदेवं क्रमेण महावाक्यचतुष्टयम् , महावाक्यपञ्चकम् , द्वादशमहावाक्यानिचोक्तानि सन्ति । पूर्वेणानेन नियमेन ज्ञानादीनां

चतुर्णां परिवर्तनेन यच्चतुर्विंशति, तत्क्रमवाचकान्यपि चतुर्विं-शति महावाक्यानि स्पष्टमुक्तानि सन्ति । एतन्महावाक्यचतुष्ट-यन्तु, महाविष्णुप्रणीतं प्रकारावधारणस्वरूपञ्च भवति । अन्यानि च महावाक्यानि विष्णुब्रह्मशिवप्रणीतानि , प्रकारावधारणरूपाणि भवन्ति । पश्चाच्च तदवधारणक्रमेण संसारभवनप्रकारः प्रदर्शितो भवति । यच्चावधारितम् , तदेव वेद इति व्याख्यानफलम् । अत एव

" चत्वारि मूलवाक्यानि चोङ्कारविहितानि च ।
सर्वसिद्धान्तवादीनी महाविष्णूदितानि हि ॥
महावाक्यानि चान्यानि चतुर्णां परिवर्तनात् ।
विष्णुब्रह्मशिवै र्नाम प्रणीतानि श्रुतानि च ॥
तस्मादेवं क्रमेणैव चत्वारो वेदसंज्ञकाः ।
सर्वे भवन्ति संसारे प्रकारैर्वानुवाचकाः ॥
अकारान्तर्गतं ज्ञानमहमित्येतदावृतम् ।
एतदित्येकवृत्तिर्वा क्रियानिष्ठा विधीयते ॥
अहमश्चैतदायोगः संसारस्समुपस्थितः ।
नेत्येतच्च समाख्यानमिच्छानिष्ठं परावरम् ॥
एतन्नेतीति यो योगः स नास्तीति विधीयते । "

इत्यादिप्रवचनम् । तस्मादहमेतत् , एतन्नाहम् , नैतदहम् , नाहमेतत् , अहन्नैतत् , इत्यादिपरिवर्तनमेव संसारः । अत्रैव

देशकालवस्तूनि च संदृश्यन्ते । अहमेतदेवकालः, अहमा चैतदो योगस्य क्रमिकत्वेन सर्वत्र प्रवचनं भवति । क्रमस्यैव हि कालत्वमुक्तम् । अहमेतदिति योगस्तु परावरोऽतीतश्च भवति । तत्रैवास्ति च क्रमः । अहमेतत्, एतदहमिति च परस्परं सापेक्षो निरपेक्षश्च भवति । अहमेतदित्यारभः एतदह-मिति मध्यमः । एतदि चाहंत्वं देशः । एतन्न इति च वस्तु । नैतदहमिति चान्त्यम् । एतन्नाहमिति चानन्तम् । अहमेतन्ने-त्यनादिः । नैतदहमित्यन्तम् । अहं नैतदित्यादिः । एवं सर्व-मित्येकवाक्येन पदार्थमात्रं वेदितव्यम् । एवमेकवाक्यस्यैव परि-वर्तनेन सर्वाः क्रियाः बोद्धव्या भवन्ति । एकवाक्यन्तु साक्षा-त्प्रणवनिष्ठमोमित्येतत्स्वरूपं बोध्यम् । अत्राप्येवं विधिः । अका-रस्योकारेण, उकारस्याकारेण च परिवर्तनम् । एवं मकारेणापि तादृशमनन्तानन्तम्, सादि सान्तञ्चातीतमनतीतं ज्ञातव्यं भवति। अत एव

"अनाद्यनन्तं सर्वस्वं तदाद्यन्तं ततः परम् ।
अतीतमनतीनञ्च ह्योमित्येतदुदाहृतम् ॥
परिवर्तनं सर्वेषामेवं सर्वविवर्तनम् ।
दुस्तरस्सर्वसंमारश्चात्मा नात्मा परात्परः ॥
तत्सर्वं त्वेकवाक्येन बोध्यं कार्यप्रकारकम् ।

अहमेतन्नेति योगसाध्या सार्वत्रिकी क्रिया ॥
देशः कालस्तथा वस्तु समाहारस्त्रयस्य च ।
परिवर्तनात्तद्वाक्यं सर्वं बोध्यं यथायथम् ॥

इत्यादिप्रवचनम् । वस्तुतस्तु न वाक्यम् , नैव वा विषयः, न तत्परिवर्तनं विवर्तनञ्चेत्यादि ज्ञेयम् । अत एव

" अहं चैतदित्थं क्रियाज्ञाननिष्ठं
परं ज्ञानमिच्छा क्रियासु प्रयोगम् ।
तदिच्छा क्रियाज्ञान संभावना च
सदावश्यकं सर्वसिद्धं स्वरूपम् ॥
यदेतन्निषिद्धं च संसारनिष्ठं
न चैवैतदित्थं स्वमात्मानमाद्यम् ।
अहं सर्वसिद्धे समे वर्तनीये
विवर्त्तैकसिद्धस्वरूपं जगत्स्यात् ॥
सदासत्यसंसारसारे प्रयुक्ते
न चैवायमात्मा प्रसिद्धः प्रधानः ।
न वेदो न वाक्यं महावाक्यमेतत्
सदा सत्यसंस्थं तदोङ्काररूपम् ॥
अकारात्मकश्चाहमेतत्प्रयोगो
ह्युकारात्मकं विश्वमेतद्विधानम् ।

उकारस्तथा कालयुक्तो हि कालः
तथैवास्ति देशः प्रसिद्धो मकारः ॥
सदेशस्तथा वस्तुकालत्रयुक्तं
समस्थस्सदा संप्रवृत्तः परेशः ।
स ज्ञानक्रियानिष्ठितो नेच्छयात्मा
सदा मुक्तरूपो परंब्रह्मसिद्धः ॥ ”

इत्यादिप्रवचनम् । एवमेव

“ एतन्नास्मीति सर्वश्चाहमेतन्नेति सर्वशः ।
अकालश्चानकालश्च व्यतीतं च ततः परम् ॥
देशकालौ तथा देशः वस्तु सिद्धं स्वतः परम् ।
नैवाणुर्नमहान्कश्चित्सर्वान्तर्यपरंपरा ॥
क्रिया सानातनी चैषा महावाक्येन साधिता ।
ज्ञानेच्छे च क्रियानिष्ठे समाहारस्समात्मकः ॥
एषैव परमा माया माया मायानुकारिणी ।
मायया जायते माया मायया तद्विनाशनम् ॥
मायया च तदाद्यन्तमनाद्यन्तं ततः परम् ।
सर्वातीता भवेन्माया सर्वा सर्वगता स्मृता ॥ ”

इत्याद्युक्तिः । तस्मादहमेतद्योगमात्रिका माया भवति । अत्रैव, देशकालवस्तु परिणामापरिणाम विपरिणामारंभावसान नियमा-

नियमानियमातीतानतीतास्तिनास्तिभावनाविभावनाभावाभावा-श्चेत्यादीनां प्रतिभासनम्। अत एव "अहमित्येतस्य पृथक्त्वे न किञ्चित्" इत्यादिवचनम्। अस्यार्थस्तु, अहमित्यस्य पृथक्त्वन्नकिञ्चित्सर्वमहमन्तर्गतं भवति, तत्पृथक्त्वस्यासंभवात्।

यद्यपि संसाराद्बहिर्भूत्वात्मानं पश्येदित्युपदेशः, तथापि संसाराद्बहिर्भवनमिदम्—केवलमेतन्नद्रष्टव्यम्, किन्तु अहं नास्मीत्यपि द्रष्टव्यौ। अहमं नञ्च विना नैतदुपस्थितिः। उपस्थितिरित्यपि न वक्तुमुचितम्। एतच्छब्दोऽपि निरर्थः। एतदस्संसारत्वोक्त्या चैतद एव हि बहिर्भवनमहन्नेति विशिष्टं द्रष्टव्यम्। आत्मात्वहमेतन्नेति युक्तः। तथा च तमात्मानमहमेतन्नेति विशिष्टं पश्येदित्युपदेशफलम्। एतदो भिन्नस्य त्वहमस्संज्ञापि न भवति। "नाहं स्वयं किञ्चित्, नैतत्किञ्चित्, न नेति किञ्चित्" इत्यादि वचनं बोध्यं भवति। तस्मात्केवलं संसारश्चाविचार्य इति व्याख्यानफलं भवति। आत्मानमेतन्न विशिष्टं पश्येदिति तदर्थः। अतः

"अहमेतन्नेति युक्तं ज्ञातव्यं सकलं जगत्।
एवं ज्ञात्वा यथा योग्यं ज्ञातव्यमहमा जगत्॥
अभेदेनाहमेतच्च ज्ञातव्यं नेति संपरम्।
नाहमेताद्धि भेदस्थं चात्मानं पश्य सर्वथा॥

अहं सर्वमेतादित्थं नैतत्सर्वत्र संस्थितम् ।
अहमेतन्नस्थमस्ति सर्वं ब्रह्म परात्परम् ॥
नैतदहं न चैवाहं नाहमेतत्समाश्रितम् ।
एतन्नाहं विधिस्थश्च ह्येतन्नेति हि सर्वशः ॥ ”

इत्यादि प्रवचनम् । तस्मात्तादृशं मूलमहावाक्यं समाहाररूपमथर्ववेदीयत्वेन सिद्धम्, ततश्चत्वारि, ततो द्वादश, ततश्चतुर्विंशति च परिवर्तनविवर्तनाभ्यां भवन्तीति विज्ञेयम्।

अत्रैव देशकालादिव्यवसायः, ज्ञानेच्छाक्रियानिष्ठः बोध्य इति निश्चितं भवति । एतत्सर्वम्, प्रणवान्तर्गतं तादृशाहमेतन्नेति बीजेनाकारोकारमकारान्तरं परिवर्तनीयं विवर्तनीयञ्च भवतीति व्याख्यानफलम्। यद्यप्येवम्—अहमस्मि, एतदस्ति नास्ति, नाहमस्मीत्यादि पृथक्त्वेन प्रवचनम्; तथापि तस्य चैकत्वमुक्तं भवति । एतदं विना नाहमः स्थितिः । नाहमं विना चैतदिति किञ्चित् । एतदित्यस्य वाच्यमपि अन्यदहमं मत्वा वक्तुमुचितम् । तस्मादहमेतन्नेत्यस्य चैकत्वं सर्वथा बोध्यं भवति । यद्यपि सर्वेषामक्षराणां वर्णसमाम्नायस्थानां पृथक्पृथगुपस्थितिः, तथापि परस्परमेकीभवनेनैव शब्दकार्यं भवति । अन्यथा त्वेकैकवर्णेन न किञ्चिदपि फलमिति शब्दशास्त्रे स्पष्टमुक्तं भवति । तस्मात्तादृशेन नियमेन मूलमहावाक्यस्थानां त्रयाणामप्येकत्वं विज्ञेयम्।

अहमेतदोरित्यत्रापि त्रितयत्वं भासते। अहमिति चाक्षरत्रयेण युक्तम्। एवं हि किल ज्ञायते—अ, ह, म्, इति। अकारस्त्वात्मा, हकारश्चैतज्जगत्, मकारस्तयोः परस्परसंबन्धनिषेधकः। अत एव "य, अ, सोऽमृतम्, ह, इति मृतमश्नुते, संबन्धस्तु मकारेण सर्वं नियच्छति" इत्यादि श्रुतिः। एवमेतदश्चापि बोध्यम्—ए इति त्वात्मस्वरूपपरम्, त इति विश्वम्, द् इति तयोः परं तृतीयं तादृशार्थबोधकं भवति। यद्यपि नकारस्य चैतदन्तर्गतत्वान्न तत्र त्रितयत्वपरिकल्पनव्यापारः, तथापि वर्णसत्तायां नेत्यत्रापि त्रितयत्वं बोध्यम्। तदित्थम्—न्, अ, ञ्, इति वर्णत्रयेण नकारोपपत्तिः। एवं हि तत्र क्रमः—अ, ञ्, न इति। एवमेव प्रत्यक्षरमपि त्रितयत्वं विज्ञेयम्। तस्मान्मूलभूतमिदमहमेतन्नेति प्रयुक्तं भवति। अत एव

" अहंम्यपि त्रयं वेद्यं त्रयश्चैतत्परायणम्।
नकारेप्येवं संपत्तिस्तदेवं त्रितयात्मकम्॥
ओमित्येकेन मूलेन महावाक्यानि सर्वशः।
वेद्यानि च यथायोग्यमात्मा नात्मा निषेधकम्॥"

इत्याद्युक्तिः। अस्मादेवाहं ब्रह्मास्मीति स्थलेऽपि चाहमित्यस्यैवं त्रितयत्वेन ब्रह्मास्मीति प्रवचनम्, त्रितयत्वं विना ब्रह्मेति प्रवचनस्यासंभवात्, " त्रितयश्चाहं त्वमयं सर्वं ब्रह्म " इत्युक्तेः,

"एतदहमेतन्नाहन्नैतत्समस्थम्" इति प्रणवसूत्राच्च । तस्मात्सर्वत्रैवं वितथत्वेन ब्रह्म विज्ञेयं भवति ।

एवं तत्वमसीत्यादावपि बोध्यम्,—तत्, त्वम्, असि, इति । एवं प्रतिशब्दमपि तत्क्रमानुष्ठानेन ज्ञानमुचितम् । यद्यप्यहं ब्रह्मेत्युक्त्या ब्रह्मज्ञानपरश्चेश्वरः महाविष्णुः विष्णुश्च प्रतिष्ठितो भवति, तथापि तस्यानतीतत्वान्न तस्य ब्रह्मत्वेन प्रवचनम् । यथा चैकाणुस्तथैव व्यक्तिमात्रं मन्तव्यम् । यद्यपिचाणोर्दृष्टयास्तिशक्तिरधिकम्, तथापि तदान्तर्येण तादृशमणुत्वमेव तदर्थमुक्तं भवति । तस्मात्तत्प्रबोधनाय महावाक्यं विज्ञेयं भवति । महावाक्यं ज्ञात्वैव सर्वस्मादतीतत्वं बुध्यते । तदेव ब्रह्मेति प्रवचनम् । अत एव

"ज्ञानं विना न मोक्षस्याज्ज्ञानमेवमनन्तजम् ।
अतीतश्चानतीतश्च ब्रह्मत्वमुपकल्प्यते ॥
महावाक्येन तत्सर्वं वेदितव्यं यथा यथम् ।
अहमेतन्नस्थमेव चास्ति सर्वश्च सार्विकम् ॥
अहमिस्थमेतदिस्थं नस्थन्नेतीह किञ्चन ।
यत्र तत्र न वक्तव्यं नैवात्र विहितं क्वचित् ॥
क्वचित्कश्चित्तथा काचित्किञ्चिन्नास्ति यतस्ततः ।
सार्वात्रिकं परं ब्रह्म जगदेतन्नेति स्थितम् ॥
एतन्नाहन्नाहमेतदहमेतच्च सार्विकम् ।

इदमेव क्रियातत्वं परं संसारवर्तनम् ॥
सृष्टिर्लयस्तयोर्भिन्नं चेदमेतद्व्यवस्थितम् ।
ओमित्येकं परं विद्धि तस्यैवं परिभावना ॥
दृश्यता सर्वतो ज्ञानं मोक्षश्चास्ति क्रियापरः ।
ज्ञात्वा चैवं ब्रह्मतत्वं कुरु संसारसाधनम् ॥
आश्रमे नियताचारः गृह्यतामेकवृत्तितः । ”

इत्यादि प्रवचनम् । तस्मादेतन्महावाक्यान्तर्गतः वर्णाश्रमधर्मोऽप्यभिधीयते , इत्युपदेशः ।

एवं हि किल ज्ञायते —अहमिति ब्रह्मचर्यम् , केवलं स्वात्मानं सर्वोपस्थापकं यो जानाति स एव ब्रह्मचारी, अहमेतदिति गृहाश्रमः, एतदा चाहमो योगेन गृहाश्रमरूपस्संसारोऽनुष्ठितो भवति, एतन्नेति वानप्रस्थाश्रमः, स च यदेतत्तन्नकिञ्चित्स्वथभितिरूपः, एतन्नाहमिति सन्यास इति । यदेतत्तदेवाहम्, यदहं तदेवैतत्, एतदः पृथङ्नाहं किञ्चित् , इति तत्फलं भवति । अत एव

“ आत्मज्ञानं ब्रह्मचर्यमेकस्मिन्नहमि स्थितम् ।
अहमश्च परं ज्ञानमेतदेतेन संयुतम् ॥
गृहाश्रममिदं प्रोक्तं संसारस्यानुसाधनम् ।
यदस्माभिश्च लभ्येत तत्सर्वेभ्यः प्रयच्छतु ॥
एतदन्तर्गतं सर्वं ममैवास्तीह सर्वथा ।

इदं गार्हस्थ्यरूपं स्यादहमेतदभिन्नता ॥
एतन्नेति वनस्थस्स्यात्सर्वतः पर एव सः ।
यदेतद्भासते किञ्चित्तन्नेतीह परस्परम् ॥
अहमं विना न चैवैतद्वानप्रस्थफलं परम् ।
नैवैतत्केवलं किञ्चिन्नैवाहं केवलं तथा ॥
एतन्नाहं त्रिभिर्युक्तस्सन्यासश्चोपलभ्यते । ''

इत्याद्युक्तिः ।

एवं वर्णधर्मोऽपि बोध्यो भवति । अहमेतन्नेति पूर्णं ज्ञानं ब्राह्मण्यं भवति । अहमेतन्मात्रज्ञानं क्षत्रियत्वरूपम्, "अहमैव चैतदः पालनम्, एतदेवाहमो धर्मः" इत्यभिधानात् । एतन्नेति ज्ञानन्तु वैश्यत्वरूपम् । तच्च, यदेतद्विश्वन्तदेतन्नकिञ्चित्केवलमेवं ज्ञानेन चेन्द्रियाणां वशीकरणं भवति । नाहमिति ज्ञानञ्च शूद्रत्वरूपम् । अहन्नकिञ्चिदित्यहंकारबुद्धिनिषेधः। यच्चास्ति तदेतदहमिति बुध्वा तत्कार्यं भूतसेवनं चेति वर्णधर्मः । अत एव

" एतज्ज्ञानमहं ज्ञानं नेति ज्ञानञ्च ब्राह्मणम् ।
अहमेतन्नेति ज्ञानाद्ब्राह्मण्यञ्च लभेन्नरः ॥
ब्रह्मज्ञानमिदं नित्यमनाद्यन्तं प्रतिष्ठितम् ।
अहमेतन्मात्रज्ञानात्क्षत्रियत्वं विधीयते ॥
अहमा चैतदो योगस्समिष्टो धर्मपालकः ।

तदेव क्षत्रियाणाञ्च भवेत्कार्यं परं हि तत् ॥
एतन्नैवेति विज्ञानं वैश्यधर्मोऽभिधीयते ।
अहमं विना निरर्थमेतज्ज्ञानं हि लौकिकम् ॥
केवलस्यास्य विज्ञानव्यापारश्चैतदस्सदा ।
नैव किञ्चित्क्वचित्सत्यं तद्वैश्यत्वाभिसंवृतम् ॥
नाहं किञ्चित्परोद्भूतमहंकारं परित्यजेत् ।
एतच्चैव महंयुक्तं भूतानाञ्चाभिषेवणम् ॥
इदमेव हि शूद्रत्वं चतुर्वर्णान्तरे विधिः । ”

इत्याद्युक्तिः । एवमेव हि

“ वर्णाश्रमेण धर्मेण ब्रह्मज्ञानं लभेन्नरः ।
ब्रह्मभावाय सर्वस्वं ज्ञानविज्ञानसंभवम् ॥
अहमेतन्नेति युक्तं ज्ञात्वा ब्रह्माण्डकल्पनम् ॥”

इत्यादि प्रवचनम् । तस्माद्वर्णाश्रमधर्मोऽपि चैतन्मूलत्वेन बोध्यः ; सर्वं प्रकारमात्रं संसरणरूपमहमेतन्नेत्यत्रान्तर्गतं भवति । अत एव

“ अहमन्तर्गतं ज्ञानमेतदन्तर्गता क्रिया ।
नकारान्तर्गता हीच्छा समाहारस्तु सर्वशः ॥
एवं हि प्रणवं विद्ध्यहमेतन्नेति भावना ।
अकारान्तर्गतं ज्ञानमहमेतत्सुसंस्थितम् ॥
उकारान्तर्गता नित्यं क्रियैवैतत्प्रकाशिका ।

मकारान्तर्गता हीच्छा नकारप्रतिवाचिका ॥
अहमेतदोर्योगस्तु संसार इति कथ्यते ।
एतन्नाहंप्रयोगेण विरोधः प्रतिभासते ॥
अहमेतन्नेति ब्रह्म सर्वज्ञानन्तसंज्ञकम् ।
योगेऽप्यणोश्च प्रत्येकं द्रष्टव्योऽयं त्रिधान्तरः ॥
ज्ञानं क्रिया तथैवेच्छा सर्वमेतत्त्रिधा भवेत् ।
त्रिभुवनं त्रिलोकी च सर्वत्र प्रतिभासते ॥
सर्वत्रात्मा च संसारः निषिद्धस्त्रितयात्मकः ।
संसारस्तदिदं सर्वमहमेतन्नेति युक्तम् ॥
अतीतार्थोऽयं शब्दश्च ह्योङ्कारप्रणवो विधिः ।
संसारार्थमिदं वाक्यं लक्ष्यते सार्वदेशिकम् ॥
अणोरारभ्य संसारे महाविष्णोरनुष्ठिते ।
सर्वशब्दोऽपि संबद्धो ज्ञानकार्यमनन्तरम् ॥
अतीतज्ञानभाश्चैव कैश्चिन्नैव हि भाव्यते ।
एकत्वाच्च महत्वाच्च संभवो न कदाचन ॥
ज्ञाता च स्वयमज्ञेयः सर्वं ब्रह्मेति संस्थिते ।
अज्ञेयत्वञ्च वक्तव्यं ब्रह्मैवं कार्यतत्परम् ॥
कार्यं ब्रह्म क्रिया ब्रह्म ब्रह्म ब्रह्मेति निश्चयः ।
वाचको ब्रह्म वाच्यश्च वचनं ब्रह्मसंज्ञकम् ॥

तस्मादसंभवं विद्धि ज्ञानातीतं परावरम् ।
एवमस्ति हि विज्ञानं ब्रह्मज्ञानं सनातनम् ॥
अहमेतन्नेति सर्वो बोधो येषां विजायते ।
तदर्थस्तु महानन्दः परो मोक्षः परायणः ॥
अतो ज्ञानं विना मोक्षो न कदापीति चोच्यते ।
तज्ज्ञानं ब्रह्मतत्वाख्य प्रतिष्ठश्चानुनिष्ठितम् ॥
ब्रह्मज्ञाता भवेद्ब्रह्म ज्ञानं ब्रह्मेति वै तथा ।
ज्ञेयं ब्रह्म स्वयं साक्षात्स्वात्मानं संप्रबोधते ॥
स्वस्य तत्त्वं च सर्वत्र सर्वं स्वमिति मन्यते ।
कर्म निदिध्यासनं च श्रवणं मननं तथा ॥
स्मरणं योगनिष्ठा च क्रियाकार्यकलापकम् ।
विद्या चैवमविद्या च संसारस्सर्व साधनः ॥
अधिष्ठानमधिष्ठाता चाधिष्ठेयस्तथात्मनः ।
ओमित्येकस्वरूपस्थमहमेतन्नेति स्थितम् ॥
सर्वं ज्ञानमतीतञ्च ज्ञात्वा संसारसंस्थितीः ।
स एव धार्मिको मुक्तो ब्राह्मणस्सर्वदर्शनः ॥
सर्वस्थस्सर्वगस्सर्वो सच्चिदानन्दमूर्तिमान् ।

इत्यादि प्रवचनम् । तस्मादहमेतन्नेत्यस्य पृथक्त्वैकत्वरूपविज्ञानं सर्वज्ञानफलमिति सिद्धान्तः ।

वस्तुतस्तु न किञ्चिदपि प्रतिभासते । अत एवोक्तम्

"न वर्णं न वर्णाश्रमं विद्धि नित्यं
न चैवाश्रमः केवलो वेदनीयः ।
न मे ब्रह्मचर्यं व्रतं ज्ञाननिष्ठं
गृहस्थं न मे वा वनस्थप्रयुक्तम् ॥
न चैवास्ति सन्याससंभावनीयं
सदैवाहमेतन्नकारेण युक्तम् ।
न मे ब्राह्मणत्वं न मे क्षत्रियत्वं
न वैश्यत्वमेतन्नशूद्रप्रधानम् ॥
स्वतस्सच्चिदानन्दमूर्तिं त्विरूपं
सदैवाहमेतन्नकारेण युक्तम् ।
न चाहं न चैतन्न नेति प्रवाच्यं
न वाक्यं न वाच्यं न मे वाचकत्वम् ॥
स्वतस्सत्ययुक्तं समं ह्यात्मसिद्धं
सदैवाहमेतन्नकारेण युक्तम् ।
पृथक्त्वं न चान्तर्न बाह्यप्रतीतिः
द्वयोर्मुख्यमेवं तथामुख्यमेवं ॥
न गौणं न मे भावना वृत्तिमात्रे
सदैवाहमेतन्नकारेण युक्तम् ।

न संसारसारस्समासारसारः
न चोत्पादकोत्पत्तिरूपं प्रधानम् ॥
स्वयं ज्ञानगम्यं स्वयं ज्ञातृरूपं
सदैवाहमेतन्नकारेण युक्तम् ।
तदेतन्नकारः कदा वेदनीयः
कदा नाहमेतत्समष्टिप्रधानम् ॥
सदा सर्वदा सर्वथा सर्वरूपं
सदावश्यकं मूलवाक्यं प्रशस्तम् ।
तदोङ्कारनिष्ठं तथैवाहमेतत्
महावाक्ययुक्तं परं वाक्ययुक्तम् ॥
स्वयं वेदरूपं स्वयं धारणीयं
स्वतस्सर्वसंसारमूलप्रतिष्ठम् ।
अनन्तं परं चाव्ययं ब्रह्मरूपं
गिरामन्तगातीतशुद्धं प्रभूतम् ॥
सदैवाहमेतन्नकारेण युक्तं
निषिद्धं तथा सर्वथा वेदनीयम् ॥ ”

इत्यादि प्रवचनम् । तस्मादहमेतन्नेति विशिष्टं सर्वं वेदितव्यं भवति ।

अहं ब्रह्मास्मीत्यादिमहावाक्यानामप्येतद्वाक्यान्तर्गतत्वं बोध्यम् । अत्रैव सकालं कालरहितं सदेशं निर्देशञ्च वक्तव्यं

भवति । एतद्वाक्यसमूह एव क्रियाक्रिया वस्त्ववस्तु साधन स्साधकश्च भवतीति बोध्यम् । अत एव " अहमेतन्नास्मिस मिष्टं पुरुषमव्ययमीश्वरं महाविष्णुमनन्तमतीतमाद्यन्तमनादिं प सर्वस्थं सान्तरं देशयुक्तं निर्देशं कालयुक्तमकालिकं निर्वच सक्रियमक्रियं सर्वस्वरूपम् " इत्यादि प्रवचनम् । एवमेव

" सदेशं तथा सत्यनिर्देशमूलं
सकालं विकालं महाकालनिष्ठम् ।
स्वतस्त्वक्रियं निष्क्रियं नित्यसिद्धं
सदा सत्यनैमित्तिकं भावशुद्धम् ॥
अभावप्रयुक्तं प्रतिष्ठान्तरस्थं
स्वरूपं सदादुःखसौख्यप्रशस्तम् ।
निराकारमाकारयुक्तं प्रधानं
चिदाकारमोङ्कार संबोधनीयम् ॥
अतर्क्यं वितर्क्यं महातर्कसाध्यं
ह्यसाध्यं तथा चानतीतं विधिस्थम् ।
स्वयं व्यापकं व्याप्तमेतद्गुणान्तं
तथा सर्वगं नित्यजं नित्यमूलम् ॥
अजं निर्विकल्पञ्च संकल्पसिद्धं
तदेवाहमेतन्नकारेण बोध्यम् । "

इत्याद्युक्तिः । तस्मात्सर्वमेतद्वाक्यपरं ज्ञातव्यम् । एतस्यैव सार्व-त्रिकत्वात्, वेदसमाहारे चाथर्वणे व्यवस्थितिः । एतद्वाक्ये-नैव सर्वत्राहमन्यन्नेत्यपि चोच्यते एतदहं तदन्यत्, यदन्यत्तदहं नकारप्रयुक्तं बोध्यम् । तत्राप्यहमित्यात्मा, अन्यदित्येतदनात्मा, नेति नकारपरं निषिद्धञ्च भवति । तत्सर्वमोमित्येकान्तर्गतं भवति । अत एव

"सर्वथा विद्धि सर्वज्ञोऽहमन्यन्नेति निश्चयः ।
मामन्यन्नैव वक्तव्यमन्यन्मां नोपपश्यति ॥
न मामन्यत्पृथग्वाच्यमात्मज्ञानमिदं भवेत् ।
एवं ज्ञात्वा लभेन्नित्यममृतं सत्यसंपरम् ॥"

इत्यादि प्रवचनम् । तस्मात्तादृशमहमेतन्नकारयुक्तं सर्वं पश्येदि-त्युपदेशः । एवं क्रमेण सर्वाणि महावाक्यानि विष्णोरवधारण-तया जायन्ते । एतेषां महावाक्यानां गायत्र्याश्च मूलं प्रणव इति निश्चय । तस्मादेव संसरणप्रकाराः बोध्या भवन्ति । तद्वि-स्तृतये विष्णुर्ब्रह्मा शिवः, तादृशः समाहाररूपः महाविष्णुश्च वेदचतुष्टयोपन्यस्तो भवति । एतच्चतुर्णां व्याख्यानं चैतन्महा-वाक्येन ओङ्कारनिष्ठेन कर्तुमुचितं भवति । सर्वञ्चैतादृशं संसर-णरूपम्, ब्रह्मतत्वविज्ञानाय वेदितव्यमित्युपदेशफलम् ।

यद्यपि चास्ति चतुर्णां परस्परं शब्दभेदः, तथापि चोङ्का-

रज्ञानादेकत्वं प्रतीयते । गायत्री महावाक्यञ्च महाविष्णुस्वरूप-निर्णायकं पृथग्रूपम्. संसारसाधनार्थं बोद्धव्यमिति विज्ञेयम् । एतयोर्गायत्रीमहावाक्ययोरर्थेन मकारसमूहस्य विस्तरतया चत्वारो वेदा भवन्तीति ऋग्यजुस्सामाथर्वण इत्याख्यातम् । ते चाप्यह-मेतन्नेत्यत्रान्तर्गता भवन्ति । अहमित्येतन्निष्ठः ऋग्वेदः । एतन्निष्ठः अहमायुतश्च यजुर्वेदः । नेति निषिद्धनिष्ठस्सामवेदः । अहमे-तन्नेति समाहारनिष्ठश्चाथर्ववेद इति बोध्यम् । इत्येवं वेदसमूहां-शभूतगायत्रीमहावाक्यादिकं निरूपितं भवति ॥

इति श्री महर्षिगार्ग्यायणप्रणीते प्रणववादे तृतीयप्रकरणे

॥ चतुर्थस्तरङ्गः ॥

ॐ



ॐ

## ॥ अथ पञ्चमस्तरङ्गः ॥

अथातस्त्रिगुणात्मकः संसार इत्युच्यते । सत्वं रजस्तमश्चेति गुणा भवन्ति । तादृशज्ञानेच्छाक्रियाक्रमनियमेन गुणाः वेदितव्या भवन्ति । सत्वं हि किल ज्ञानम् । रजश्च क्रिया । तमश्चेच्छा

त्रयाणां समाहारश्चतुर्थः। अत एव "प्रकारत्रयेण सर्वं जगत्" इत्युक्तम्। एवमेव

"त्रिविधञ्च जगत्सर्वं प्रकारैस्त्रिभिरन्वितम्।
सात्विकं राजसञ्चैव तामसञ्च तथा परम्॥
त्रयाणाञ्च समाहाराच्चतुर्थस्तादृशः क्रमः।
अहमेतन्नेति योगाज्ज्ञानमिच्छाक्रिया परा॥
वेदितव्यञ्च सर्वस्वं ऋग्यजुस्सामसंज्ञकम्।
अथर्वा तत्परो वेद्यः प्रकाराश्च तदन्वयाः॥
सात्विकानां समुत्पत्तिस्संस्थितिस्तद्विनाशनम्।
फलञ्चावश्यकं तेषामृग्वेदश्च प्रभाषते॥
राजसानां समुत्पत्तिः कार्यमात्रञ्च सर्वशः।
यजुर्वेदेन बोद्धव्यं द्वयोरेकत्रसंग्रहः॥
ततस्संबन्धरूपार्थं तामसानां विभाषणम्।
तेषां सम्यक्परादानं सामवेदेन चोच्यते॥
त्रयाणां यस्समाहारस्संयोगाद्युपपत्तिता।
कारणं तद्विधानेन कार्यनिष्ठं परायणम्॥
अथर्ववेदनिष्ठैवं सर्वसङ्घातनिश्चयात्।"

इत्यादिप्रवचनम्। तस्मान्महावाक्यमूलेन सर्वसंसारमात्रप्रकाराः ज्ञानेच्छाक्रियानुसारेण वेदितव्या इत्याद्यवगतम्।

यद्यपि " कर्मणां संपादनार्थाय ऋग्वेदोऽभिधीयते, ज्ञान-संपादनार्थाय यजुस्सामानि समावृत्ते " इत्याद्युक्तिः, तथापि ऋग्वे-दस्य ज्ञाननिष्ठत्वमेव सिद्धं भवति । कर्मसंपादनार्थ इत्युक्त्या चासंपादितकर्मणो ग्रहणं न स्यात्; किन्तु संपादनकरणसाम-र्थ्यस्यैव ग्रहणम्, ज्ञानं विना कर्मणामनुत्पत्तेः । यद्यपि यजु-र्वेदस्य सामवेदस्य च ज्ञानपरत्वेन प्रतीतिः, तथापि तत्र कर्मा-दिप्रयोगात्, ज्ञानस्य तत्साधकत्वाच्च तथाद्युक्तं भवति; अन्यथा तु " ज्ञानप्रकारपरः ऋग्वेदस्थः यजुर्वेदेन कर्मणाम् " इत्यादि प्रवचनं विरुध्येत । मीमांसयापि यजुर्वेदस्य कर्मपरत्वं सिध्यति । तद्यथा

" ज्ञानं प्राप्य च ऋग्वेदैः कुरु कर्म यथेप्सितम् ।
कृत्वा सम्यक्समारब्धं लभतां परमां गतिम् ॥
ज्ञात्वा ज्ञानमयं वेदं पुनः कर्मावधारणम् ।
इच्छावधारणं पश्चात्समाहारः फलं परम् ॥
ऋग्वेदं ब्रह्म विज्ञाय ज्ञातव्यः कर्मनिश्चयः ।
ततश्चेच्छापरं ज्ञात्वा संपातं सिद्धमूलकम् ॥
ज्ञानविद्याश्च ऋग्वेदाद्ब्रह्मचर्यादिभावना ।
यजुर्वेदेन गार्हस्थ्यं वानप्रस्थन्तु सामतः ॥
सन्यासोऽथर्ववेदेन ब्रह्मतत्वमिदं भवेत् ।"

इत्याद्युक्तिः । तस्माज्ज्ञानक्रियेच्छासमाहारनिष्ठाः चत्वारो वेद भवन्ति । तादृशेन चतुर्विधनियमेन प्रत्येकं ऋग्यजुस्सामाथर्व संज्ञाः भवन्तीति बोध्यम् ।

ऋग्वेदे चास्मिन्हि ज्ञानस्य चतुर्णां परिवर्तनेन व्यवहारः अस्य षोडशमण्डलानि विहितानि सन्ति । नियमेन चतुर्विंशति मंडलानि सन्ति । समाहारान्तर्गतं मण्डलाष्टकम् । इच्छानिष्ठ त्वात्षोडशेन प्रवचनम् । सर्वत्र ज्ञानमात्रं पृथिव्यप्तेजोवाय्वा काशेषु, कालदिशोः, क्रियायाश्च यच्च किञ्चित्; तत्सर्वं ऋग्वेदेन बोध्यं भवति । यद्यपि ऋग्वेदमंत्रैश्च यज्ञादयस्संभवन्ति तथापि तन्मंत्रस्य ज्ञानपरं प्रयोजनं बोध्यं । अत एव

"सर्वत्र विद्यते ज्ञानं क्रिया सर्वत्र विद्यते ।
इच्छा च विद्यते नित्यं समाहारोनुवाचकः ॥
न च ज्ञानं विना कर्म कर्म नैवेच्छया विना ।
समाहारस्त्रयाणाञ्च संसारस्सर्वकल्पनः ॥
सर्वसंसारमात्रस्य दृश्यते त्रिविधा गतिः ।
अतस्त्रिभुवनं सर्वं विद्या वेदत्रयान्विता ॥"

इत्यादि प्रवचनम् ।

यद्यपि "द्वे विद्ये वेदितव्ये परापराच" इत्युपदेशश्रुतिः तथापि परापरयोरेकत्वेन निर्धारणं भवति, परा च केवल

अथर्वज्येष्ठपुत्राय ददौ ब्रह्मा सनातनः ॥
एषा च ब्रह्मविद्या वा ब्रह्मणे दत्तवान्भुवः ।
ब्रह्मण्येव प्रतिष्ठाप्य ब्रह्मणो ब्रह्मसाधनम् ॥ ''

इत्यादि प्रवचनम् । तस्मादेनां ब्रह्मविद्या ब्रह्म ब्रह्मणे प्रदत्तवत्, ददाति, दास्यति च ।

यद्यपि सर्वज्ञानमयो ब्रह्मा, न तद्विद्यावश्यको भवति, तथापि सृष्टिक्रियानुसन्धानाद्ब्रह्मणः कर्मपरत्वाच्च जीवमात्रेभ्यस्तत्प्रदानौचित्यं युक्तं भवति । जीवमात्रस्य तत्र ब्रह्मत्वेन प्रवचनमिति मन्तव्यम् । अत एव "ब्रह्मणो ब्रह्म साधनम्" इत्याद्युक्तिः । एवमेव

" ब्रह्मा जानाति नित्यं वै ब्रह्मतत्त्वं यथायथम् ।
ओमित्येकेन शब्देन सर्वैकं विद्धि शाश्वतम् ॥
सर्वकालमदेशश्च निष्क्रियं सत्क्रियं तथा ।
सर्वस्वं सर्वशो विद्धि चात्मनैवात्मधारणम् ॥ ''

इत्याद्युक्तिः । तस्मादेतद्विद्यामात्रस्य व्याख्यानं षोडशमण्डलेन ऋग्वेदेन कृतमिति विज्ञेयम् । अत एव "एषा विद्या महामण्डला सर्वधामप्रदायिनी सर्वसिद्धा सात्त्विकी ब्रह्मात्मिका सर्वार्थसारा सर्वप्रसिद्धा ऋग्वेदविहिता बोध्या" इत्याद्युक्तिः । अत एव "ज्ञान प्रतिष्ठितं पुरुषमव्ययोदयं सद्भूतं सत्यमनुष्ठितञ्च"

इत्यादि प्रवचनम् । तस्मादपि ज्ञानं ऋग्वेदाविदितं बोध्यम् । ज्ञानपरिवर्तनरीत्या चतुर्विंशतिमण्डलान्युक्तानि । समाहारस्य क्रियान्तर्गतत्वेन, तस्य मूलभूतैकवाक्यसिद्धेन षोडशमण्डलान्यर्थानि ऋग्वेदस्योच्यते । सिद्धान्तस्तु चतुर्विंशति मण्डलान्येवेति , तस्य ऋग्वेदस्य ब्रह्मप्रतिपादकत्वमेवेत्युक्तं भवति । अत एव

> " ऋग्वेदो ज्ञाननिष्ठस्स्यादकारान्तर्गतस्तथा ।
> अहमः प्रतिबोधाय कृतं षोडशमण्डलम् ॥
> अष्टसु मण्डलेष्वेवं समाहारो व्यवस्थितः ।
> सार्वत्रिकत्वमूलेन ब्रह्माख्यानं व्यवस्थितम् ॥ "

इत्याद्युक्तम् । तस्मादृग्वेदस्य तादृशं विष्णुसाम्मितत्वमुच्यते । अत एव प्रथममण्डलस्यादिममंत्रेण तादृशं ज्ञानानुष्ठानं दर्शितं भवति– अग्निमीळेपुरोहितमित्यादि । तस्यार्थश्च, अग्निमीळे अग्निं शाश्वतं पूर्णं अहमेतन्नास्मीति विशिष्टम् , इति । अकारेण तादृशोऽयमकारः प्रणवस्थोऽहमित्येतत्स्वरूपः, गकारश्चैतद्रूपः, नीतिनिषिद्धरूपः इत्यवगम्यते । तदग्निस्स्वरूपं प्रकाशमयं भवति । यद्यपि विना च तमः, प्रकाशस्यानुपस्थितिः; तथापि तमसः प्रकाशत्वेन प्रवचनं भवति, न हि प्रकाशादन्यं तमः किञ्चिदिति व्याख्यानात् । अहमेतदोरिव तमःप्रकाशयोर्नकिञ्चिद्भेदः ।

न भवति च तत्र पूर्वं परं वा । अत एव " तमः प्रकाशपूर्वम परञ्च " इत्यादिवेदैस्स्पष्टमुक्तं भवति । तमग्निं प्रकाशस्वरूपं साक्षाद्ब्रह्मतत्वमीळेऽहमाये इति तदर्थः । ब्रह्मतत्वजिज्ञासया तज्ज्ञानावश्यकत्वं भवति । विना च ब्रह्मतत्त्वज्ञानं कर्मादिकं न संभवति । अत एव

" प्रथमं ब्रह्मचर्यं स्याद्द्वितीयन्तु गृहाश्रमम् ।
वनाश्रमं तृतीयंस्याच्चतुर्थेतु परिव्रजेत् ॥
एतैरेव चतुर्भिश्च संसारस्यानुवर्तनम् ।
आरंभः परिणामश्च वर्तनञ्च विवर्तनम् ॥
परिवर्तनं सर्वं च ब्रह्मसिद्धान्तसाधनम् ।
प्रत्यणवपि च संपश्येन्महतो महतामपि ॥
परात्परं प्रद्रष्टव्यं जिज्ञासा ब्रह्मणस्सदा ।
सत्यं ज्ञानमनन्तं हि कर्तव्यो ब्रह्मनिश्चयः ॥"

इत्यादिप्रवचनम् । तस्मात्प्रथमं ब्रह्मजिज्ञासया ज्ञेयं समुचितं भवति । अतश्चाग्निस्वरूपं प्रकाशस्वरूपं जानामि, ज्ञात्वा हि यज्ञस्य देवममृतत्वं प्राप्स्यामि । इदमेव रत्नधातमत्वं मुख्यप्रयोजनं भवतीति तन्मूलार्थः । एतच्चाग्नेस्सर्वं कार्यं ज्ञानमात्रमृग्वेदे स्पष्टमुक्तं भवति । येन पुरोहितं यत्पूर्वं ब्रह्मतत्त्वम्, तदेव प्राप्नोतीति फलितार्थः । एवं क्रमेण सर्वश्च ऋग्वेदः ज्ञान-

निष्ठो भवति । "अस्मादयं प्रजायेत, अनेनेदं विनश्यति, अत्रेदं तिष्ठति, एतस्यायं कालः, अयं देशश्च, तद्विभागश्चायम्, तदेकत्वं न पृथक्त्वं पृथक्त्वाभासनकारणत्वानात्वानानात्वपरिभावनम्, तयोरावश्यकत्वम्, यतस्सर्वाणि भूतानि भवन्ति भविष्यन्तिवा, तद्भवनमात्रं संसारपरं संसरणमात्रं, यतश्चायमात्मा तिष्ठति, येन नियमेनायमात्मा परिवर्तते, विवर्तते, प्रवर्तते, निवर्ततेच" इत्यादिज्ञानप्रकारमात्रमृग्वेदेन बोध्यं भवति । क्रियायां यश्च कश्चिज्ज्ञानांशः, एवमिच्छायाम्, समाहारे च वा; स च सर्वोऽपि प्रकारमात्रपरः "अहमिति बोधनायैतद्बोधनाय चाहमेतदन्तर्गतत्वान्तर्गतश्चयत्किद्भवति, नैवमेतदन्तर्गतं भवति" इत्यादिसर्वमुक्तक्रमेण महावाक्यस्य ज्ञानमात्रं विष्णोरवधारणं सर्वं सप्रयोजनमावश्यकमनावश्यकञ्चाख्यातम् । तस्माज्ज्ञानार्थमृग्वेदं विद्धीत्युपदेशः । मोक्षार्थं ज्ञानं सपादयेत्यपि च । तस्माज्ज्ञानं मोक्षार्थं भवति । मोक्षश्च ब्रह्मतत्वावधारणरूपम्, तच्च विज्ञेयमित्युपदेशफलम् । यच्च विज्ञाय ब्रह्मतत्वं ब्रह्मभावमुपलभेत्, तस्यैव पूर्णत्वमानन्दित्वमुत्तरोत्तरं सुखं च भवतीतिविज्ञेयम् ।

यद्यपि क्रियाप्राथम्यं सर्वत्रोक्तम्, "ब्रह्माविष्णुशिवः सत्यं समेयम्" इत्यादिप्रवचनात्, तथापि क्रियायाः सर्वत्र

दृश्यत्वेन तत्प्रवचनं । क्रियैव हि सर्वत्र भासते । भासन-मात्रञ्च क्रिया भवति । अतस्तद्व्यवहारेण ब्रह्मणः पूर्वोक्तं भवति । अन्यथातु महाविष्णुविष्णुः ब्रह्माशिवश्चेति क्रमस्स्यात् । ओमित्येकशब्देन सर्वत्र परिवर्तनं निवर्तनञ्चेति नियमात्, पूर्वापरत्व न किञ्चिदिति सूचितं भवति । पूर्वापरनियमे तु व्यवधानाव-श्यकत्वम् । यद्यपि क्रियाज्ञानेच्छा यास्समाहारत्वात्, समाहा-रस्याव्यवहितत्वाच्च न पूर्वापरत्वं वाच्यम्, तथापि प्राधान्यबो-धनाय ज्ञानादिनियमः । अत एव

"महाविष्णुस्ततो विष्णुस्स्वयं ब्रह्मा शिवस्तथा ।
ओमित्येतन्महावाक्ये सर्वेषां परिवर्तनम् ॥
गायत्री च महावाक्यं वेदाश्चैवं त्रयस्तथा ।
बोद्धव्यं प्रणवे लीनं प्रतिष्ठं ब्रह्मसंज्ञकम् ॥
कालोऽकालस्तथादेशः निर्देशो नाममात्रतः ।
अकारोकारमकारसंस्थिताश्च व्यवस्थिताः ॥
यानि नामानि रूपाणि ज्ञानान्युपहृतानि च ।
तत्सर्वं ह्योङ्कारगतं ज्ञात्वा सिद्धः परो भवेत् ॥"

इत्याद्युक्तिः । तस्मादृग्वेदेन तादृशो ज्ञानप्रकारो व्यव-स्थितो भवति । वस्तुतस्तु सर्वं न किञ्चिदिति नियमः । अत एव

“ विधाता पिता नैव विष्णुः प्रशस्तः
महाविष्णुरेवं समानन्दरूपः ।
प्रसिद्धः प्रगल्भः प्रतिष्ठोऽयमात्मा
तदोङ्कारनिष्ठस्वरूपस्समेयः ॥
प्रमाणप्रमेयो न बद्धोऽयमात्मा
गुणानामनन्तः प्रतिष्ठोऽयमात्मा ।
न ज्ञानैर्विहीनं प्रयुक्तं प्रधानं
सदावश्यकं वेदभिन्नं विरूपम् ॥
अकारान्तरं सर्वमूलं विनेयं
सदा निर्णयज्ञानरूपं प्रसिद्धम् ।
अनैकान्त सिद्धान्तवेद्यं प्रकाशं
लघुत्वान्महत्वात्परं वेदनीयम् ॥
तदृग्वेदसिद्धं यजुर्वेदसिद्धं
स्वतस्सामवेदेन संवेदनीयम् ।
अथर्वान्तरं सत्समाहाररूपं
सुखानन्तमाद्यं विशेषैर्विभिन्नम् ॥
सदा सत्यसामान्यमन्तं व्यतीतं
ह्यनावश्यकं सर्वसामान्यहीनम् ।
न युक्ताभियुक्तं श्रुतेरन्तरूपं

महाकल्पनाकल्पनिष्ठं प्रतिष्ठम् ।
स्वतस्सर्वसङ्कल्पपूर्णं प्रमेयं
स्वतस्सिद्धमात्माहृतं सर्वजीवम् ॥
परं ब्रह्मरूपं निरीहं प्रतर्क्यं
ह्यतीतं तथातीतमभ्यस्तमेवम् ।
अनभ्यस्तमभ्यस्तरूपं समस्थं
सदैवाहमेतन्नकारेण युक्तम् ॥
विशुद्धं परं चैकमेवाद्वितीयं
सदानन्दरूपं निराधाररूपम् । "

इत्यादिप्रवचनम् । तस्मात्तादृशं ब्रह्मैव मन्तव्यमित्युपदेशफलम् । एवमेव हि बीजेन ऋग्वेदमयं ब्रह्मतत्वमित्याद्याख्यातम् । एषैव हि परमार्थदायिनी महाविद्या सत्स्वरूपावधारणा आत्मज्ञानपरा च प्रोक्ता भवति । अहमाचैतत्, एतदा ह्यहम्, अहमेतत्, एतदहम्, इति ज्ञानस्वरूपमभिहितं भवति, अहमेतदोर्योगस्यैव ज्ञानत्वप्रवचनात् । तस्मात् एवं ऋग्वेदाविहिता, स्मृतिः विस्मृतिः अनुस्मृतिश्चेत्युक्तं भवति । अत एव "ऋग्वेदेनात्मानं पश्येत्, आत्मात्मानं पश्यति" इत्याद्युपदेशः । तस्मात्सर्वमृग्वेदं ज्ञानमयम्, ज्ञानञ्च क्रियेच्छासमाहारनिबद्धं सर्वत्रोपयुक्तम्, सर्वानुगतमात्मस्वरूपम्, संसरणप्रकारमाञ्च, चतुर्विंशतिमण्डलाभि-

विहितं सर्वार्थदं सर्वसिद्धं विद्धीत्येतद्व्याख्यानफलं भवति । तस्मादेवमृग्वेदो ज्ञानस्वरूपप्रतिपादनपरोऽवधेयः ॥

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे तृतीयप्रकरणे

॥ पञ्चमस्तरङ्गः ॥

ॐ

---

॥ ॐ ॥

## ॥ अथ षष्ठस्तरङ्गः ॥

अथ यजुर्वेदश्चेत्थं क्रियानिष्ठो विज्ञेयः । प्रकाराख्यानञ्च क्रियायाश्चात्राभिहितत्वं भवति, यजनं क्रियते सर्वैयजुरिति तदर्थात् । कारणव्यवहारः, कार्यकारणयोस्संबन्धः, कर्तृकरणसंबंधः, कर्तृकरणयोर्व्यवहारः, कर्तृकरणकार्यप्रयोजनसंबन्धः, अन्यदपि तदावश्यकञ्च सर्वम्, यजुर्वेदोपन्यस्तं भवति । यथा— आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नाद्रेतः, रेतसस्सर्वम्, इत्यादिसंसरणव्यवहारः । आकाशाद्वायोर्जायमानत्वे ह्याकाशस्य कारणत्वम् । एवं सर्वेषामुत्पत्तिमात्रविधानञ्च यजुर्वेदेन बोध्यम् । ब्रह्मप्रणीऽतोयं यजुर्वेदः । स च सर्वक्रियासिद्धे वेदितव्यः । अत एव

वेदितव्यं भवति । विनाचोत्पत्तिं न परिपालनस्य संभवः । स्थितेरेव विनाश इत्यनुभवेन न तां विना विनाशसंभवः । अतः परस्परान्यव्यवहारः । अत एव

उत्पन्नानाञ्च वस्तूना रक्षणं जायते सदा ।
विनाशो जायते तेषा जगदेतात्क्रियात्रयम् ॥
विनष्टाना समुत्पत्तिर्गतिरेवं परस्परम् ।
ओमित्यन्तर्गतं सर्वं महावाक्येन वेष्टितम् ॥"

इत्यादि प्रवचनम् । तस्मादुत्पत्तिस्थितिप्रळयानां परस्परपरिवर्तनं भवति । प्रळयोऽप्युत्पत्तिरेव, सर्वस्यानाश्यत्वाद्रूपान्तरभवनाच्च । एवं स्थितेरप्युत्पत्तिर्वक्तव्या, उत्पन्नाधीनत्वादुत्पत्तेस्तात्कालिकत्वाच्च । तस्मात्सर्वं क्रियामात्रं तादृशं यजुर्वेदेन बोध्यं भवति । क्रियायामपि ज्ञानादिपरिवर्तनत्वात्तादृशाश्चतुर्विंशति प्रकाराश्च सन्ति । अन्यथा तु सर्वं ब्रह्ममयमेकवद्भासते चेत्याद्युपदेशस्स्यात् । अस्मिन्नेव यजुर्वेदे ज्ञानादिसंपरिवर्तनेन कामार्थतत्वम्, उत्पत्तिस्थितिविनाशाः, तादृशश्च समाहार इत्यादि तत्सर्वमेतत्क्रियाव्यवहारान्तर्गतं बोध्यम् ।

एतच्चतुर्णाञ्च तादृशानां क्रमेण च दृश्यादृश्यत्वप्रकारेण चत्वारिंशदध्यायात्मकोऽयं यजुर्वेदः भवति । अणावपि प्रत्येक क्रियैव सन्दृश्यते. तस्यास्सर्वसाधनव्यवहारात्संसारव्यापाररू

त्वाच्च । तस्मात्तादृशः क्रियाप्रकारः ज्ञानेच्छासमाहारनिष्ठः ज्ञेयो भवेत् । अत एव " हिरण्यगर्भस्समवर्तताग्रे " इत्यादिश्रुतिः । हिरण्यगर्भं तेज इत्युच्यते । अतः तेजोमयः प्रकाशरूपः गर्भः यस्येति तदर्थः । हिरण्यगर्भस्तावज्जगद्विशिष्टात्मा भवति । हिरण्यगर्भ एव सर्वत्र भासते । अयमेव च क्रियायाः बीजं भवति । स च हिरण्मयो गर्भस्संबभूव एतदन्तर्गताहंगर्भान्तर्गतं हि हिरण्यं भवति । विस्तारो हि गर्भः । विस्तार एव तेजसस्सर्वथा दृश्यते । अतो हि हिरण्यगर्भः, समवर्तनरूपसंसरणमकरोत्; इति तदर्थः । अकरोदित्यनद्यतनोक्त्या हि, कालत्रयस्यापि ग्रहणम् । अतीतत्वात्सार्वकालिकत्वाच्च, अग्रे समवर्तत इत्याद्युक्तिः । अग्रावर्तन्तु वृद्धिरेव, परिवर्तनव्यवहारात् । हिरण्यगर्भस्तु, प्रतिक्षणं त्रुटया त्र्यावयवी वर्द्धत एवेति तद्भावः । तस्मात्क्रियायाः व्याख्यानं यजुर्वेदसिद्धं बोध्यम् । एवमेव हि

" रुक्माभं स्वसुधीगम्यं हिरण्यं पुरुषोत्तमम् ।
हिरण्यगर्भमात्मानं सच्चिदानन्दविग्रहम् ॥
तं ज्ञानेच्छाक्रियानिष्ठं समाहारसमन्वितम् ।
अहमेतत्त्वस्थमेवं जगद्रूपं परायणम् ॥
ओमित्येतत्स्वरूपस्थं विद्धि वेदविचारतः ।
अकारार्थो हिरण्यं स्यादुकारो गर्भवाचकः ।

मकारस्तु तयोर्भिन्नं नेति नेति प्रभाषितम् ॥
पृथक्त्वं सर्वमैक्यञ्च सर्वसिद्धं सनातनम् ।
सर्वथा सर्वदा विद्धि सत्यं सत्यपरावरम् ॥ ”

इत्यादि प्रवचनम् । वस्तुतस्तु क्रियादीनामपि , तादृशमहमेत-न्नकारयुक्तं ब्रह्मत्वप्रवचनं भवति । अत एव

“ न मे कारणत्वं न मे कार्यसिद्ध
क्रिया नैव नेच्छा समाहाररूपम् ।
सदाशुद्धबुद्धं समैतत्प्रयुक्तं
ह्यखंडैकसिद्धस्स्वरूपोऽहमात्मा ॥
न कर्ता परं कार्यरूपं तुरीयं
न मे धर्मसिद्धिः समेयं प्रमेयम् ।
न चैवोपमानोपमेयेन सिद्धं
पृथक्त्वं न चैकत्वरूपं मदीयम् ॥
सदा सत्वसंसारभूतोऽहमात्मा
तदेतन्नकारं परं विद्धि नित्यम् ।
अनन्तञ्चनाद्यन्ताभिन्नं स्वरूपं
न चानन्दमानन्दमासं प्रकाशम् ॥
सदा सर्वदा सर्वरूपेण युक्तं
स्वतस्सर्वमात्मस्वरूपं प्रधानम् ।

यजुर्वेदसिद्धं न मे वेदनीयं
न चैवाहमेतत्परं याजनीयम् ॥
सदा सच्चिदानन्दमाभासरूपं
हिरण्यं परं तैजसं ब्रह्मवेद्यम् ।
अहमेतन्नकारस्थं नकारस्तन्निषेधकः ।
अहमेतत्परं युक्तमयुक्तं प्रणवान्तरम् ॥
सर्वसिद्धं सुखं ब्रह्म सर्वथा सर्वदा हि माम् ।
ओंकारान्तर्गतं नित्यं स्वात्मानं विद्धि सर्वथा ॥
यदिदं तत्त्वमेवासि यत्त्वं यच्चैव सर्वशः ।
अहं त्वमन्यदुद्भासं सर्वमेतत्प्रपञ्चता ॥
विनश्यमाने सर्वस्वे ब्रह्मास्मीति प्रयुज्यते ।
इदं ब्रह्म चाहं ब्रह्म त्वं ब्रह्मेति विदुर्बुधाः ॥
अन्यद्ब्रह्म ह्ययं ब्रह्म सर्वस्व सार्वकालिकम् ।
तत्सार्वदेशिकमिदं देशकालपरात्परम् ॥
एकत्वं विध्यनेकेषामेकञ्चानेकसंयुतम् ।
अहमेवैतदं विद्धि चैतदं मा प्रविद्धि च ॥
ममैतदं समं विद्धि तयोर्भिन्नं न चैात्मकम् ।
अकारोकारमकारस्थं तद्धि सकलं जगत् ॥
इदं ब्रह्म चेदं मोक्षः क्रियासारमिदं भवेत् ।

ज्ञानसारमिदं विद्धि चेच्छासारमिदं तथा॥
समाहारमिदं तत्वं ब्रह्मज्ञानमिदं भवेत् ।
एतद्धि ज्ञानमात्रेण शोकहर्षौ विनश्यतः ॥
त्यक्त्वा सर्वाणि कर्माणि प्रपञ्चात्मपराणि च ।
मन्तव्यांश्च मत्वा हि भाव्यं मत्वा च सर्वशः ॥
ब्रह्म मत्वा स्वमात्मानं ह्यतीतं कालसंज्ञकम् ।
कुर्वन्ति सर्वकर्माणि चैवं स्यान्मुक्तलक्षणम् ॥ "

इत्यादि प्रवचनम् । तस्मादेषा क्रिया पृथक्त्वैकत्वयुक्ता चोङ्कार-निष्ठा विज्ञेया भवति । तथा

" न च त्वं न चाहं न चायं प्रतिष्ठः
त्रिरीहं सदा निर्विकल्पं हि विद्यात् ।
तदोङ्कारमेतत्परं गोचरं मे
स्वतस्सत्यमेतत्समं सत्यमेवम् ॥
स्वनिर्दिष्टमूलं स्वनिर्मूलमेतत्
स्वभावं परं ब्रह्मतत्वं हि बोध्यम् ।
यजुर्भावना ज्ञानसारं प्रमेयं
क्रियासारमैक्यं तदोङ्कारनिष्ठम् ॥
स्वभावाभिभूतं स्वयं ब्रह्मरूपं
ह्यधिष्ठानमायान्तरं संप्रबोध्यम् । "

इत्यादि प्रवचनम् । अत एव मोक्षप्राप्तेरपि कार्यकारणत्वमुक्तं भवति । अतीतत्वादनन्तत्वाच्च न केऽपि मुक्ता नकेऽपि बद्धाः ।

यद्यपि मोक्षार्थो चैषा क्रिया कर्तव्येत्युपदेशः, तथापि चावस्थानिर्देशेनैव सा बोध्या । या वा चैषावस्था, तस्या एव मोचनं संभवतीत्युपदेशफलं भवति । एवं हि—चैषा क्रिया कर्तव्या, यथा च मोक्षं सार्वत्रिकम्, आनन्दञ्च सार्वकालिकं सार्वदेशिकमुपलभेदिति, तदाशयः । केवलमित्थं भूतमस्त्येवेति मन्तव्यमात्रं मोक्षः । स एवानन्दमय इति तत्फलम् । यदिदं व्याकुलत्वम्—इत्थं कृते सत्येवं भवति, एवं न कृतम्, एवं करोम्येवं कृतम्, एवं कृते नैतत्प्राप्तमित्यादिचावधारणमात्रस्यैव परित्यागाय सर्वोपदेश इति व्याख्यानफलं भवति । उपदेशश्च—सर्वं भाव्यं सर्वस्मिन्कृतेसति सर्वं भवति, सर्वं कृतं करोमि च सर्वम्, सर्वं प्राप्तं प्राप्नोति प्राप्स्यति वा, सर्वमावश्यकं सर्वसिद्धञ्च, न मत्कृतं नान्यत्कृतं न त्वत्कृतम्, नाहंत्वमन्यत्किञ्चित्, यत्वन्तदहं तदेवान्यदिति मन्तव्यमात्वमानन्दं मोक्षस्वरूपं विद्धीति । न चान्यथा । अत एव

"न मुक्तो न बद्धस्स्वरूपोऽयमात्मा
　　ह्यभिव्यापकस्संप्रयुक्तोऽयमात्मा ।
सदा भावनाभावसिद्धोऽयमात्मा

त्वभावस्थ एतत्स्वरूपोऽयमात्मा ॥
अहं सर्वमेतन्नकारोऽयमात्मा
तदोङ्काररूपप्रकारोऽयमात्मा ।
वियद्व्यापकः खण्डरूपोऽयमात्मा
ह्यखण्डस्तथा खण्डनीयोऽयमात्मा ॥
तथा नेति नेति स्वरूपोऽयमात्मा
सदैवैतदेतद्गुणस्थोऽयमात्मा ।
तथा चान्यदीयो मदीयोऽयमात्मा
त्वदीयस्तथा चैतदीयोऽयमात्मा ।
क्रियेच्छापरज्ञाननिष्ठोऽयमात्मा
सदैकैकसिद्धोऽद्वितीयोऽयमात्मा ।
क्रियाभ्यन्तरः कार्यरूपोऽयमात्मा
स्वयं सत्यरूपः स्वमुक्तोऽयमात्मा ॥
त्रयाणां परश्च त्रिकस्थोऽयमात्मा
त्रिभिर्बध्यमानः प्रमाणोऽयमात्मा ”

इत्यादि प्रवचनम् । तस्मात्क्रियाकरणं सार्वकालिकमतीतं चेति विज्ञेयम् । मुक्तेऽपि केवलमिदं पूर्वाख्यातमात्रं भवति । न मोक्षः कश्चित्पदार्थः परिशिष्टरूपः परिदृश्यते । सर्वत्र सर्वथा सर्वदा संसरणव्यापारसंबन्धश्चास्ति । तदन्तर्गतोह्यानन्दश्च निर्बन्धरूप

ब्रह्मस्वरूपश्च भवति । तच्च प्राप्नोत्यवश्यमिति सिद्धान्तः । अत एव

" क्रियन्ते सर्वकार्याणि सर्वकालञ्च सर्वथा ।
भुज्यते परमानन्दः सर्वकालक्रियापरः ॥
सर्वकालमहं नैवमहञ्च सार्वदेशिकः ।
सर्वानन्दस्य संप्राप्त्यै यत्नस्सार्वत्रिको भवेत् " ॥

इत्याद्युक्तिः । अत एवयावत्सार्वत्रिकत्वं न प्राप्नोति । न तावत्परितोषो भवति । अन्तरेण परितोषं वीतहर्षशोको न कदापि भवतीति निश्चयः । परितोषस्याऽप्यसंभवत्वं विज्ञायते, सार्वत्रिकस्य तस्य चातीतत्वादकालिकत्वाच्च । परितोषस्तु केवलमेतज्ज्ञानपर एवेति फलितार्थः ।

यद्यपि " परितुष्टोऽयं क्रियाभिर्निवृत्तोऽयम् " इत्याद्युक्तिः, तथापि स परितोषः निवर्तनं चेदमेव । एवं " ज्ञानमनन्तमिदं अनादिस्थं चातीतानतीतभिन्नम् , नात्र लाभालाभौ, मानावमानौ, प्राप्ताप्राप्ते, सर्वथा भाव्यमेव भवति " इति हि परितोषस्वरूपमुच्यते । निवर्तनमर्पादं भवति, क्रियायाः यत्फलमदर्थं त्वदर्थमन्यार्थञ्चेतिरूपम् , तैरेव निवृत्तिरिति तदाशयो विज्ञेयः । अन्यथा तु, क्रियायाश्चातीतकालिकत्वेन सर्वथा संभवो भवत्येवेत्युपदेशफलमुक्तम् ; क्रियामन्तरेण स्थितिरयुक्ता

भवेत् । स्थितिरपि च स्वयमेव क्रिया भवति, व्याख्यानात् । "करणं क्रिया" इत्युक्त्या, यत्कृतं तस्यैव स्थितिरिति स्पष्टतया क्रियान्तर्गता चोत्पत्तिस्थितिलया इति विज्ञायन्ते । तस्मात्क्रियाभिर्निवर्तनं परितोषश्च तावद्बोधमात्रं विज्ञेयम् । एवं हि व्याख्यानफलं भवति, क्रियासत्ताया निवर्तनं तत्परितोषश्च न कदाचिदपि भवतीति । अत एव "मुक्तो भूत्वापि, पारमार्थिकं कर्म करोत्येव" इत्याद्युपदेशः । "जीवितमुक्ताश्च तावत्, सर्वेषामपि संसाराणां नियन्तारो भवन्ति" इत्यपि च । अत एव

"उक्तानि सर्वकर्माणि वयं कुर्मो हि नित्यशः ।
क्रियामात्रं ह्यतीतंस्यादोङ्कारः परमोत्तरः ॥
प्रणवस्थमिदं सर्वं करणं कारणादिकम् ।
अतीतत्वादनन्तत्वात्सर्वस्थं सार्वदेशिकम् ॥"

इत्यादि प्रवचनम् । एवमेव

"सुयो जीवितात्मा स्वयं मुक्तरूपं
स नित्यान्तरं कार्यमेवं विधातुम् ।
सदावश्यकं सर्वसंसारभोग्यं
विधानेन योगे परं स्थापितं स्यात् ॥"

इत्याद्युक्तिः । तस्माज्जीवितमुक्तानामपि क्रियाभ्यः निवर्तनं नैवेति सिद्धान्तः । यद्यपि "अनित्यास्सर्वाश्च क्रियाः, मिथ्याभूतश्च

संसरणस्वरूपम् ” इत्याद्युक्तम् । एवं “ अनित्यानि परित्यज्य मुक्तो भव ” इत्याद्युपदेशोऽपि ; तथापि क्रियाश्चानित्यत्वं केवलक्रमनिष्ठम् , सर्वसत्ताप्रधानत्वात् , देशतः कालतो वस्तुतो वा चापरिच्छिन्नत्वात् । इदमेवानित्यमिति विज्ञेयम् , अस्मादारभ्यैतत्पर्यन्तञ्च यदारोपणम् , तदेव भवतीति । अन्यथा तु नित्यकार्यं नित्यमेव भवेत् । नित्यत्वाच्च सत्तायाः , क्रियाया अपि नित्यत्वं बोध्यम् । अनित्यं तावदीप्सितम्—एवं कृते सत्येवं भवति , इत्यादिरूपम् ; तं परित्यज्य मुक्तो भव , साक्षात्सार्वत्रिकं सार्वदेशिकं सर्वतत् , स बुध्यतीति ह्युपदेशफलं भवति ।

यद्यपि जीवितमुक्त इत्युक्त्या मुक्तस्य विशेषप्रतिवचनं भवति , तेनजीवितोऽपि चानुमीयते ; तथापि जीवितमुक्तस्तावत्त्रितयत्वेन ब्रह्म जानातीति बोध्यम् । मुक्तिस्तावत् प्रतिज्ञानमपि संभवति , यो ह्येवं जानाति—संसारो नित्य एव , संसरणमेव कर्तव्यम् , किमन्येन , न चास्तिचात्मा ह्यन्यः , न किञ्चिदेतत्संबन्धरूपः इति ; तस्यापि मुक्तत्वप्रवचनम् । यस्तु केवलं निषिद्धात्मकं सर्वतो भिन्नं ब्रह्म समधीते , सोऽपि मुक्त एव । तस्यापि मुक्तत्वप्रवचनमप्यस्ति ।

यद्यप्येतदंशं संसारात्मकं न जानाति, तथापि मुख्य-

त्वेन संबन्धरूपं वेत्येवेति निश्चयः । यस्तु केवलमहं ब्रह्मास्मीति मन्यते, आत्मैव ब्रह्म, अनात्मा न किञ्चित् इति च; सोऽपि मुक्त एव भवति । परंत्वनात्मानं विना नात्मा तिष्ठतीति ज्ञान-मात्रं दोषः । तस्मान्निर्दोषं यत्त्रितयस्वरूपमात्मानात्मनिषिद्धरू-पम् , पृथक्त्वैकत्वयुक्तं विद्धीत्युपदेशफलम् । एवं भूते जीवित-मुक्त इति तद्विशेषफलम् । यद्यपि त्रयाणां तावदस्तित्वमेकत्वे-नोच्यते, यत्र प्रत्येकं पृथग्भानत्वेनापि मोक्षोऽयुक्तः, प्रत्येकं भान-मेवायुक्तम्; तथाप्याद्यन्तक्रमेण ज्ञानस्य क्रमान्तर्गतत्वादेवं भान-मस्त्येवेति विज्ञेयम्। त्रितयस्य ब्रह्मत्वादेकैकज्ञानस्यापि मोक्षत्वेन प्रवचनम् । अत एव "आत्मानात्मानिषिद्धं ब्रह्म" इत्युच्यते । तस्माच्च सर्वे मुक्ताः सर्वेऽपि च बद्धास्सर्वे हि च सिद्धा इति हि सिद्धान्तः । तस्मादेव हि "जीवितमुक्ताः, विमुक्ताः, मुक्ताश्च भवन्ति" इति चोच्यन्ते । एवमन्येऽपिबहवो भेदास्सन्ति यथा—"महात्मानस्साधवो योगिनः योगेश्वरास्सन्तो मुक्ताः प्रविष्टाः परमासिद्धाः सिद्धाश्च" इत्यादयः । ज्ञानानुसारेण हि क्रियानिवृत्तिपरितोषवृत्योरवस्था चानवस्थावृत्तिरितिबोध्या भवति। तस्मात्क्रिया च सर्वसिद्धा सार्वत्रिकी चातीता नतीता सर्वपरा ब्रह्मपरा परंपरा चेत्यादि रूपिणी यजुर्वेदसंस्थिता विज्ञेया भवति । अत एव

"प्रणवस्था क्रिया सर्वा सर्वमूलोपकारिणी ।
कर्तव्या च प्रतिष्ठा च सर्वधर्मसनातनी ॥"

इत्याद्युक्तिः । तस्मात्क्रियाया अपि तादृशं ज्ञानं परमिच्छासमाहारनिष्ठं वेदितव्यमिति निश्चयः ।

अत एव मोक्षेऽपि चतुर्विधो विभागः—सालोक्य सायुज्य सामीप्य सारूप्य रूपः । तेषाञ्चतुर्णां विभागः क्रियापरश्चेति विज्ञेयः । यद्यप्येते चत्वारः, तादृशाकारोकारमकारपराः, तथापि कार्यत्वेन तत्र भेदोऽयमवश्यमभ्युपेयः । सालोक्यन्तावत्सहितो लोकेनेति स लोकः, तद्भावस्सालोक्यं संसाररूपमुकारपरं वेदितव्यम् । लोकसहितैव तस्य भावना, लोकाद्बहिर्न किञ्चन ; इति हि मुक्तानां ज्ञानं भवति । लोकस्तावत्संसारः। सायुज्यञ्चात्मानात्मविशिष्टज्ञानम् । अस्त्ययं संसारः । स चात्मा विशिष्टः । सहितं युक्तञ्च यत्तत्सायुज्यमिति तदर्थादात्मानात्मनोर्ग्रहणम्, अनेन चाकारोकारयोस्सन्धिश्च तत्र बोध्यः । न केवलोऽयं संसारस्तिष्ठति, न चात्मा, द्वयोः परस्परसापेक्षत्वात् । तस्माद्योऽनात्मानं केवलं मन्यते, तस्य सालोक्यमुक्तिर्भवति । दोषयुक्ता हि सा भवति । योह्यात्मानात्मानौ मन्यते, तस्य सायुज्यमुक्तिः । संबन्धरूपज्ञानाभावात्सापि दोषयुक्ता भवति । सारूप्यं तावद्रूपसंज्ञासहितम्, आत्मानात्मनिषिद्धपरं वेद्यम् । सारू-

प्यन्तावन्मकारानिष्ठम् , ओमित्येतत्स्वरूपाश्रयं बोध्यम् । सामीप्यञ्चैतत्त्रितयस्यैकत्वरूपं सिद्धान्ततत्वं भवति, अतीतत्वे सामीप्याभावस्यैवोपस्थितत्वात् । यद्यप्यणुरपि मुक्तस्त्रितयात्मकः, सालोक्यसायुज्यसारूप्यपरश्चोङ्कारनिष्ठः, तथाप्योङ्कारस्यातीतत्वात्तस्यसामीप्यमेव सिद्धं भवति, सर्वस्याप्यणुत्वात्सर्वस्य महत्वाच्च । महाविष्णोस्समीपे यथाचाणुः एवं महाविष्णुरपि कस्य चिद्दृष्ट्या समीपगतः । एवं सर्वत्र क्रमश्चानन्तः कालातीतश्च बोध्यः । अत एव

"अकारस्मरणेनैव सायुज्यं लभते नरः ।
केवलोकारबोधेन सालोक्यं मुक्तिसंग्रहम् ॥
सारूप्यञ्च मकारेण संबन्धस्त्रितयात्मकः ।
अनादित्वादनन्तत्वात्सामीप्यं मोक्ष उच्यते ॥
अनवस्थापरास्सर्वाः क्रियाः कालपरायणाः ।
सायुज्यं चाथ सालोक्यं सारूप्यं त्रितयात्मकम् ॥
सामीप्योज्जीवितो मुक्तः सर्वदा सर्वकारकः ।
सा निर्दोषा भवेन्मुक्तिः सामीप्यात्सर्वसिद्धिजा ॥
तत्सर्वं प्रणवस्थं स्यात्सर्वसौख्यसमायुतम् ।"

इत्यादि प्रवचनम् । तस्मात्सायुज्यसालोक्यसारूप्यसामीप्यानि चेति मुक्तेश्चातुर्विध्यमस्ति तत्रैवमेव च क्रमः। यद्यपि सालोक्यस्याप्राथम्यं

सारूप्यस्य परमत्वं चोक्तं भवति "सालोक्यादथसायुज्यात्सामीप्याच्च सारूप्यं परमा मुक्तिः " ब्रह्मण्येव विलीयते " इत्यादि-श्रुतिवचनात् , " ब्रह्मण्यधिष्ठिते सति ब्रह्मैव भवति " इति श्रुतेर्वा ; तथापि संसारदृष्ट्या सालोक्यस्य प्राथम्यम् । ततश्चात्मानं ज्ञात्वा ह्यात्मानात्मविशिष्टत्वरूपं सायुज्यं द्वितीयम् , "सहितो वियुक्तोऽयमात्मा" इत्यादि प्रवचनात् । वियुक्तश्चानात्मनेति तदर्थः । तदात्मानात्मनोरेकत्वं सारूप्यं तृतीयम् , सहितो रूपेणेति तदर्थात् । सहितइत्युक्त्यास्ति चान्यापेक्षा । "एतद्दृष्ट्या सर्वमपि सारूप्यमेव, सर्वोऽपि च मुक्तो बद्धश्च" इत्यादिवचनात्सारूप्यस्य परमत्वं सिद्धं भवति । त्रितयात्मकत्वाद्द्वयोस्संबंधरूपत्वात् , सामीप्यन्तावत्सारूप्यपरमेव भवति । ओमित्येतत्सन्धिरूपः प्रयोगः । यदिदं त्रितयात्मकं सायुज्यसालोक्यसारूप्यविशिष्टम् , तत्सर्वं सामीप्यमेव, तस्यातीतत्वादनाद्यनन्तत्वाच्चेति सिद्धान्तः ।

एवं भूते ब्रह्मण्यधिष्ठिते , मान्ये च , सति साक्षाद्ब्रह्मैव भवतीति ब्रह्मत्वकल्पनमेव फलं भवति । सायुज्यसालोक्यसारूप्यसामीप्यानामेव ब्रह्मत्वम्, तस्मिन्नेव विलीयते इति तदर्थः । अत एव " मुक्तः पुरुषो ब्रह्मलीनः " इत्याद्युक्तिः । ब्रह्मणि लीनाश्च तावद्ब्रह्मैव भवन्तीति लीनशब्दार्थः । लीनतायास्तात्पर्यमिदं भवति—सर्वं सर्वपरं स्वपरपरमाभिभिन्नमिति ।

यत्स्वं तत्परं यत्परं तत्स्वं स्वपरमेव परममिति लीनफलं भवति । अन्यथा तु अयमात्मा संसारश्चाभिन्नएव स्यात् । सर्वपरश्च भाव्यत्वेनास्त्येव । अहं त्वमन्य इत्यादि पृथग्भासनरूपं नानात्वम् , कल्पनामात्रं भ्रमरूपमेवेति विज्ञेयम् । एतद्भ्रमवारणाय च , सर्वाः क्रियास्सर्वसिद्धा इति बोधनाय सर्वशास्त्रोपदेशः । यदिदमात्मानमनात्मानं शून्यञ्च पृथक्पृथङ्मन्यसे तन्नोचितमिति शास्त्रोपदेशफलं भवति । अनात्माप्यात्मा, आत्माप्यनात्मा , शून्यमपि तदधिष्ठितं वेदितव्यमितिव्याख्यनफलं भवति । अत एव

" सालोक्यमथसायुज्यं सारूप्यं प्रणवस्थितम् ।
ज्ञात्वा सर्वार्थसिद्धञ्च सामीप्यं पारमार्थिकम् ॥
यत्नेनैव हि जीवाना लाभस्तस्य विजायते ।
लब्ध्वा तत्परमानन्दं भुंक्ते च परमं सुखम् ॥
अकारोकारमकारस्थाहमेतन्नेति युक्तम् ।
सर्वं विद्धि यथात्मा हि ब्रह्मण्येव विलीयते ॥
ब्रह्मलीनो हि यो मुक्तः स एव परमो मतः ।
अत्रैव ब्राह्मणादीना सर्वदा समुपस्थितिः " ॥

इत्यादि प्रवचनम् । अत एव महावाक्यं ज्ञात्वा ब्रह्म भवेत्याद्युपदेशः । एवमेव

" सायुज्यमहमं विद्धि सालोक्यं विद्धि चैतदम् ।
मकारं विद्धिसारूप्यं सामीप्यं त्रितयात्मकम् ॥
सकालोऽयं सदेशोऽयं सक्रियं स्यात्पुथक्पृथक् ।
सायुज्यमथ सालोक्यं सारूप्यं परमं पदम् ॥
सामीप्यं सर्वतस्सिद्धं तन्निर्देशो न कालिकः।
इदं हि निष्क्रियं ज्ञानं सद्भूतं ब्रह्मसम्मितम् ॥
इदं ब्रह्मलयं तत्वं सामीप्यं परमाश्रयम् ।
भाव्यमेव हि सामीप्यं सर्वज्ञानपरावरम् ॥
सर्वशास्त्रफलं चैतत्सर्वकार्यफलं तथा ।
एतदर्थाः क्रियास्सर्वाः सर्वेषाञ्चैव सर्वथा ॥
नित्यमिच्छत्यणुरपि सामीप्यं मुक्तिनिश्चितम् ।
यस्मिन्प्राप्ते सुखंदुःखं हर्षशोकौ न किञ्चन ॥
सर्वथा सर्वदा शुद्धः सदैवावश्यकस्तथा ।
वर्णत्रयस्थममृतमभिवांच्छत्यशेषधीः ॥ "

इत्यादि प्रवचनम् । ततस्तादृशश्चतुर्विधोऽपि मोक्षः वेद्यो भवति । अत एव " त्रयाणां सगुणत्वं सामीप्यस्य निर्गुणत्वञ्च भवति " इत्याद्युक्तिः। सायुज्य सालोक्य सारूप्याणां सगुणत्वेन संबन्धः । अणुर्हि तावत् ,महाविष्णोर्मतमभिषज्जते,एवमेव हि महाविष्णुरपि स्वात्मनोऽन्यमतमभिपज्जते । अतः परस्परमन्तव्यत्वं तयोः ।

अस्यैव सायुज्यादिमोक्षत्वमुक्तं भवति । सामीप्यं हि, स्वयमव परं सर्वाश्रयं कालातीतमेव च भवति । अत एव

" ज्ञानमात्रेण संपन्ना मुक्तिस्सालोक्यदायिनी ।
क्रियामात्रेण सायुज्यं भक्त्या सारूप्यमाव्रजेत् ॥
ज्ञानेन कर्मणा भक्त्या समाहारेण तत्वतः ।
सामीप्यं परमो मोक्षः सच्चिदानन्दसंवृतः ॥
आत्मानात्मानिषिद्धञ्च ज्ञानेच्छाक्रियया युतम् ।
इदमेव परं ज्ञानं त्रितयं यत्सनातनम् ॥
अहमेतन्नेतिवाच्यं प्रणवं प्रणवान्तरम् ।
तस्माज्ज्ञानक्रियेच्छानां तिसृणां संग्रहं कुरु ॥
चतुर्थोपासको भूत्वा प्राप्नुयात्परमं पदम् ।
ऋते ज्ञानान्नमुक्तिस्स्यात् ज्ञानञ्च त्रितयात्मकम् ॥
अतो मोक्षस्य साध्यस्य ज्ञानं सत्साधनं परम् ।
साध्यता चैव मोक्षस्याज्ज्ञाने साधनता भवेत् ॥
भक्तिकर्मयुतं ज्ञानं सर्वत्रैवोपादिश्यते ।
नायमात्मा श्रुतेनैव प्रलभ्यो न च बुध्यते ॥
नैवैतत्संस्मृतेनैव न च ध्यानेन सिध्यति ।
सर्वेणैव हि सर्वात्मा सर्वैरेव हि बुध्यते ॥
सर्वार्थे क्रियतां यत्नः सर्वप्राप्तौ हि तुष्यतु ।

परितोषः परं धाम परमं प्रणवामृतम् ॥
इदमेव हि वैकुण्ठमेतदेव सुखात्मकम् ।
अतस्सर्वार्थसिध्यर्थं संतोषो नन्दनं वनम् ॥
अस्ति ज्ञानक्रियेच्छानां समाहारो हि यत्र च ।
ज्ञात्वा चैवं समाहारं प्राप्यते नन्दनं वनम् ॥
वनञ्चैतज्जगत्सर्वं तामसच्छविसंयुतम् ।
भ्रमादेव हि सर्वस्वं तमोरूपेण भासते ॥
सर्वान्धकारसंपन्नं भ्रमन्त्येव यथायथम् ।
इतस्ततो भ्रमन्तश्च ज्ञानमेनं सनातनम् ॥
अहमस्मि चैतदस्ति चैवं नास्मीति चोत्तमम् ।
अहमेतदेतदेतन्नैतन्नैतदहं ह्यहम् ॥
एतदहं तथा नैवं नाहमेतत्प्रतिष्ठितम् ।
नैवाहं केवलं किञ्चिन्नचैतत्केवलं क्वचित् ॥
नैव नास्ति न चैवास्ति चास्ति नास्ति तयोः परम् ।
परमहमेतदन्तं सर्वं नान्तं तथा परम् ॥
सर्वमेवं परिष्कारं ज्ञात्वा मोक्षं प्रपद्यते ।
स्वात्मानं मन्यते मुक्तं यादृशं वास्तवप्रभम् ॥
एतत्संमन्यमानेन प्राप्यतेऽमरता सदा ।
अयं मृतोऽमृतश्चान्यदहमप्येव तादृशः ॥

जीवत्ययं तथा चान्यदहमप्येव तादृशः ।
जीवनं मरणञ्चैव सर्वमावश्यकन्त्विदम् ॥
कालातीतमिदं सर्वं भाव्यमेव भवत्यपि ।
कर्तव्यश्च समाहारः सर्वं मत्वा स्वमाश्रयम् ॥
इदमेव परा काष्ठा क्रिया सर्वार्थवैभवा ।
अमराणां महाधर्मः प्रत्यणुह्यधितिष्ठति ॥
अज्ञानं मन्यते यस्य तत्स्वज्ञानप्रतिच्छविः ।
सोप्यन्यं तादृशं नित्यं मन्यते स्वात्मनो लघुः ॥
ज्ञानवान्यः परस्सिद्धः निष्ठावानपि सर्वथा ।
अन्यदृष्ट्या तदान्तर्यात्तादृशाज्ञानसंभवः ॥
तस्मादेनं परित्यज्य सादृश्यं यत्परस्परम् ।
सर्वमेकभवं ज्ञानं मुक्तावस्थानुकल्पितम् ॥
सर्वाः क्रियाश्च कर्तव्याः सावकाशाश्च सर्वदा ।
अवकाशपरं सर्वं जीवनं मरणं तथा ॥
द्वयोरेकरूपं ज्ञानं वितयं ब्रह्मसंज्ञकम् ।
तदोङ्कारपराधारममरत्व विधीयते ॥
पृथक्पृथक्च यज्ज्ञानं मरत्वं तत्पराश्रयम् ।
अमृतं विध्यनुत्पत्तेः जगदात्मा न विद्यते ॥ ”

इत्यादि प्रवचनम् । तस्मादमृताय सर्वाः क्रिया अपि कर्तव्या ;

त्युपदेशफलम् । अत एव मोक्षस्यामृतत्वेन प्रवचनम् । वस्तु-
स्तु अयमात्मा स्वतस्सिद्ध एवेति बोध्यम् । अत एव

"न कांक्षापरो निष्ठितो नैव मुक्त्यै
न सायुज्यरूपं न सालोक्यरूपम् ।
न सारूप्यरूपं न सामीप्यसिद्धं
सदा सर्वदा चाहमेतत्प्रयुक्तम् ॥
न सालोक्यसंभावनस्थोऽयमात्मा
न सायुज्यनिष्ठः प्रयुक्तो न चात्मा ।
न सारूप्यभूतो विलीनोऽयमात्मा
न सामीप्यसंभावनीयोऽयमात्मा ॥
सदा सर्वदा शुद्धबद्धस्वरूपं
न चैवाहमेतत्प्रयुक्तं प्रधानम् ।
तदोङ्कारनिष्ठश्च निश्शङ्कनीयं
निषिद्धं वियुक्तं नियुक्तं तदन्यत् ॥
न चाकेवलं केवलं बद्धरूपं
न तत्केवलं मुक्तरूपं प्रयोज्यम् ।
अतीतं गुणानन्तमाद्यन्तहीनं
तदेतन्निषिद्धेन युक्तोऽहमात्मा ॥"

इत्यादि प्रवचनम् । तस्मात्सर्वं परञ्च सादृश्यं सर्वकारकमिति

बोध्यम् । अत एव “ सर्वाः क्रियास्सर्वस्थास्सर्वसंपन्नाः यजुर्वेदरूपाः ” इति व्याख्यानोक्तिः ।

यद्यपि यजुर्वेदेनाश्वमेधादिविधानं तेनैव च कर्मणा मुक्तिः, “अश्वमेधादियज्ञेन मुक्तिमांश्च भवेन्नरः ” इति “निष्कामं क्रियतां यज्ञः कर्मणा मोक्षमेष्यति ” इति च प्रवचनात्; तथापि तत्र ज्ञानादेरावश्यकत्वं विज्ञेयम् । ज्ञानं विना हि चाश्वपदार्थस्य मेधापदार्थस्य च, पञ्चमहायज्ञीयपदार्थानां भूतबल्यादिकर्मणाञ्च बोधो न संभवति । क्रियामात्रस्य करणव्यापारस्तावज्ज्ञाननिष्ठ इति सर्वत्र स्पष्टमुक्तं भवति । यद्यपि क्रियायाः स्वातन्त्र्यमुक्तम्, तथापि तस्याः कर्तुरपेक्षा चावश्यं भाव्यैव । अत एव

“ ज्ञानमेवं क्रियाधीनं ज्ञानाधीना क्रिया भवेत् ।
इच्छाधीनं द्वयं बोध्यं समाहारस्ततो भवेत् ॥
क्रियायास्संभवो नैव ज्ञानमात्रं विनापि च ।
तस्मान्न कर्मभिर्मुक्तिः केवलैर्नेति संस्फुटम् ॥
अश्वमेधादिकर्माणि ज्ञानाधीनानि सर्वथा ।
ज्ञानतन्त्रेण कर्मैवं कर्मतन्त्रेण सर्वशः ॥”

इत्याद्युक्तिः । तस्मादश्वमेधादिकर्मणां ज्ञानमेवाधिकरणमिति स्पष्टमुक्तं भवति । एवमेव

" सर्वेषां याजकानाञ्च मुख्यत्वं ज्ञानमार्गतः ।
इदञ्च प्रतिष्ठारूपं ज्ञात्वा कर्म समाचरेत् ॥
ज्ञानेनैवं बलिं दद्यादश्वमेधादिसाधनम् ।
कुर्याद्भक्तिञ्च सर्वेभ्यस्सर्वस्थो भव सर्वथा ॥"

इत्याद्युपदेशः । अत एव

"केवलेनाश्वमेधेन महायज्ञेन सर्वथा ।
नायमात्मा लभ्य एवमात्मा ज्ञानपरायणः ॥
ज्ञानेनापि लभेन्नैवमेतदात्मा क्रियापरः ।
इच्छया लभते नैवमात्मा चैवं द्वयोः परः ॥
द्वाभ्यां च लभते नैवं केवलेच्छा परात्परा ।
तस्मात्त्रयाणां बृन्देन लभ्यमानेयमात्मधीः ॥
सदा ज्ञानसिद्धस्सदा कर्मसिद्धः
सदा भक्तिसिद्धस्स्वरूपोऽहमात्मा ।
न वैकैकसिद्धः सदा सर्वसिद्धः
सदा केवलाकेवलस्सत्यरूपः ॥"

इत्यादि प्रवचनम् । अतस्सत्यार्थेन युक्तोऽयमात्मा, एष एव च मुक्तिरिति स्पष्टमुक्तं भवति । तस्मात्कर्मादिष्वपि ज्ञानावश्यकता भवति । अत एव कर्मणो ज्ञानस्य भक्तेश्च परतन्त्रत्वमुक्तं भवति, परस्परसापेक्षत्वात् । अतस्सर्वेषाञ्चाश्वमेधादिकर्मणां विषयश्च

प्रथमो ज्ञातव्यः। "ज्ञात्वा हि तदाचरणे प्रवृत्तिः" इति शिक्षा। अतीतत्वादनन्तत्वाच्च वितयसिद्ध एव मोक्ष इति व्याख्यानफलं भवति । तस्मादश्वमेधादिकं कर्मापि ज्ञानत एव बोद्धव्यं भवति । न हि ज्ञानमन्तराश्वार्थप्रतीतिर्भवति । अश्वो हि ज्ञानम्, अश्यते सर्वाणि भूतानि अनेनेति तदर्थात् । मेधा तावज्ज्ञानक्रिया भवति। अश्वस्य मेधः इति व्युत्पत्तिमङ्गीकृत्य, सर्वमिदमकारात्मकं ज्ञानकरणमिति ह्यश्वमेधक्रिया भवति । अत एवाश्वानां पदार्थानां हवनमपि प्रयुज्यते । अश्वस्तावज्ज्ञानजन्यः पदार्थः । तेषां हवनञ्चैतद्ब्रह्माग्नौ संप्रदानमेव, इति हि तदर्थः । अत एव " एतत्पाठे चाश्वमेधशतस्य सहस्रस्य वा फलमाप्नोति" इत्याद्युक्तिः । अत एव

" ज्ञात्वा ब्रह्म यथायोग्यं यच्चान्येभ्यश्च दापनम् ।
अश्वमेधः परो यज्ञः सर्वमुक्तिप्रदायकः ॥
साक्षान्मुक्तस्वरूपं स्यात्कर्मैतत्परमोत्तमम् ।
परमार्थाभिधानं स्यादहमेतत्परं तथा ॥
सर्वं ब्रह्माग्निसंपन्नं होमं चैवं परोत्तमम् ।
कृत्वा मोक्षमवाप्नोति ब्रह्मभावाय कल्पते ॥ "

इत्यादि प्रवचनम् । एवम् " ब्रह्मदो हि ब्रह्मसराष्ट्रतां याति " इत्यपि च । अत्र हि ब्रह्मदानं केवलं ज्ञानप्रदानमेवेति संभवात्, ब्रह्मभावलाभस्य फलमिदं भवति । स्वयं ब्रह्म भूत्वा

ब्रह्मणो ब्रह्मत्वकल्पनमिति विज्ञेयम् । तदेवमश्वमेधाख्यं कर्म यावज्ज्ञानबद्धम्, तावन्मोक्षप्रदमेवेति फलितं भवति ।

एवं पञ्चमहायज्ञाश्च भवन्ति । गृहस्थाश्रमधर्मोऽयं पञ्चमहायज्ञः । तांश्च कृत्वा बलिं दत्वा च भोक्तव्यम् । तस्मात्पञ्चमहायज्ञं च सर्वेषां भूतमात्राणां ब्रह्म मत्वा, न मदीयं त्वदीयमन्यदीयं सर्वं सर्वस्येति बुध्वा च, प्राप्तानां यथाव्यवहारं कर्तव्यतैवेति सिद्धान्तः । कर्तव्याश्च ते, पञ्चप्रकारतया पञ्चमहायज्ञा भवन्ति । यजते क्रियते वा यज्ञ इति तदर्थः, यष्टुं योग्य इति वा । प्रथमं संसरणव्यापारः एकोऽहं बहुस्यामिति नियमाचाररूपः, तथा बहुभूतानां ब्रह्मत्वकल्पनरूपं कर्म द्वितीयम्, तत्पूर्णञ्च तदावश्यकत्वज्ञानं तृतीयम्, स्वप्रबन्धनियमानुसरणं चतुर्थम्, पञ्चमश्च सर्वतस्सर्वोपकारकरणं सर्वैः प्रकारैस्सर्वानुसेवनञ्चेति पञ्चप्रकाराः बुद्धिमहत्वप्रयुक्ताश्चेति विज्ञेयम्। एतेनैव हि पञ्चमहायज्ञेन यदेतत्सर्वं पृथक्पृथग्भासते, तद्विकाररूपम्, तद्धि विनश्यति इति विज्ञेयम् । धर्मोऽयं परमो भवति गृहस्थानाम् । अत एव "ब्रह्मतत्वं विज्ञाय गृहस्थाश्रमस्सेव्यतां यत्र च पञ्चसूनानां निवारणम्, सर्वथा पञ्चयज्ञकरणञ्च संभवत्येव" इति सूक्तिः । एतच्च पञ्चमहायज्ञस्यैवानुकर्णं भवति । सर्वधाप्यग्नौ होमो विधीयते । यदिदमन्नं स्वात्मार्थं

तदेवाग्नौ संप्रदद्यादिति हि नियम इति तु, केवलवक्तव्यानुकरणरूप एव । भूतेभ्यः प्रदानमेव सार्वत्रिकमिति तु स्पष्टमुक्तं भवति, बलिप्रदानस्य तु क्रियाप्रदानार्थकत्वम्, प्रदानशब्दस्य दानप्रकर्षार्थकत्वञ्च व्युत्पत्त्या प्रतिपादनात्, "विश्वेभ्यो भूतेभ्यो देवेभ्यो दातव्यः सर्वः बलिः" इत्यादि प्रवचनात्, "बलिदानं कर्तव्यमुचितम्" इति श्रुत्या च वा

विश्वस्य हि देवो विश्वदेवो भवति; तद्भावो हि वैश्वदेवः, बलिरपि तादृशः । देवाश्चैतद्विश्वस्य सर्वे जीवभूता भवन्ति । अणोरारभ्य हि चानन्तानन्तप्रतीतिका भवन्ति । एतज्जीवसमूहस्यैव विश्वत्वम्, प्रवचनलब्धम् । तस्मात्पञ्चमहायज्ञाः, बलिर्वैश्वदेवः, बलिप्रदानादिकञ्च सर्वं विहितम्; एतज्ज्ञानसंबद्धं प्रणवस्थञ्च बोध्यम् । अत एव

"ब्रह्मचर्यव्रतं कृत्वा गृहस्थाश्रमधारणम् ।
कुर्यात्पञ्चमहायज्ञं बलिभूतं तदात्मकम् ॥
बलिप्रदानं कर्तव्यं सर्वधर्मपरायणैः ।
अहमेतदिति मूलात्सर्वस्वं विद्धिनिश्चितम् ॥
एवं परिवर्तनेन प्रकाराः पञ्च साधकाः ।
वैश्वदेवादिकं कर्म चैतेनैवाभिजायते ॥"

इत्यादि प्रवचनम् । एवमेव "बलिप्रदाने पूजायामग्निहोत्रे महो-

त्सवे " इत्यादि चोक्तिरपि । तस्मात्तादृशं बलिप्रदानं बलिर्वैश्वदेवः पञ्चमहायज्ञाश्च सर्वं कर्तव्यं भवति । बलिप्रदानं चैकदेशव्यक्त्यर्थं भवति, सर्वार्थञ्च यद्बलिप्रदानं तद्वैश्वदेव इति तयोर्भेदः। पञ्चमहायज्ञा अपि स्वार्थपराः, परमार्थनिष्ठाश्चेति बोध्यम्। अत एव

" अतिथ्यभ्यागतानाञ्च यतीनां ब्रह्मचारिणाम् ।
सन्यासिनामभीष्टानां बन्धूनां सज्जनस्य च ॥
पुत्रपौत्रकलत्राणां सर्वेषाञ्च कुटुंबिनाम् ।
तन्ममत्वविशिष्टानां येषां ह्याशा न कर्मणि ॥
तेभ्यश्च पञ्चकर्माणि कर्तव्यानि विधानतः ।
महायज्ञा भवन्त्येवं सर्वमोक्षप्रदायकाः ॥
कृतो येन महायज्ञः वैश्वदेवो बलिस्तथा ।
कृतं बलिप्रदानञ्च ह्युदारचरितो भवेत् ॥
त्यक्त्वा सर्वं फलन्नित्यं सवार्थः कर्मसंग्रहः ।
एवं हि नियमवतां वसुधैव कुटुंबकम् ॥
नायं निजः परश्चायं नैवान्यश्च प्रपञ्चता ।
अहं ह्यहं हि सर्वत्र चैतदेतच्च सर्वथा ॥
अहमेतदेतदेतन्न सर्वं प्रणवस्थितम् ।
वर्णत्रयगतं ब्रह्म वेदितव्यं सनातनम् ॥"

इत्यादि प्रवचनम् । तस्मादेवं महायज्ञादिकरणे फलमित्युपदेशः।

यद्यपि ज्ञानक्रियेच्छासमाहाराश्चत्वारो भवन्ति, तथापि तदधिष्ठानत्वेन पञ्चप्रकारा भवन्तीति विज्ञेयम् । ज्ञानेच्छाक्रियानुसारेण तु, बलिर्वैश्वदेवः भूतबलिप्रदानञ्चेति त्रीणि भवन्ति । अत एव

" आत्मातु बलिर्विश्वोऽयं संसारो ह्यधिदेवता ।
आत्मार्थे हि च सर्वस्वं सप्रभुस्सर्वकर्मणाम् ॥
भोक्ता कर्ता नियन्ता च ग्रहणो ग्राहकस्तथा ।
त्याज्यस्त्यागस्तथैवात्मा दाता देयस्सनातनः ॥
बलिभूतोऽयं संसारः ह्यनात्मा सर्वबन्धकः ।
अहं त्वां मामिति प्रोक्त्या चैतदा च त्विदं ततम् ॥
एतदर्थमहं दास्ये चात्मसंसारयोगवान् ।
बलिप्रदानं नेतीत्थं द्वयोस्संबन्धमूलकम् ॥
बलिमेवं प्रकर्षेण गृण्हाति च ददाति च ।
सर्वथा सर्वदा सिद्धः सर्वकर्माभिसंयतः ॥
वर्णत्रयगतं तत्स्यात्तादृशं त्रितयात्मकम् ।
अन्यथा नित्यधर्मोऽयं गृहिणां परमो मतः ॥"

इत्याद्युक्तिः । तस्मादेतत्त्रयाणां नित्ययज्ञत्वेन गृहस्थेभ्यो ह्युपदेशः । एवं कृतेन, सर्ववर्णाश्रमधर्मान्कृत्वा निश्चलां मतिमेष्यतीति व्याख्यानमपि भवति ।

अग्निहोत्रादिकर्माख्यानमपि चैतत्त्रितयानियमेनैव । अग्नौ प्रकाशे जुहुयादिति तदर्थः । सर्वमिदं संसारमात्रमग्नेः प्रकाशरूपम् । तस्मिन्हवनञ्च हीच्छामात्रस्येत्यग्निहोत्रं विज्ञायते । हुतेऽग्नौ सर्वेभ्यः प्राप्नोतीति विज्ञेयम् । एतद्वन्हौ पदार्थानां हवनेनापि, सूक्ष्मतरजीवेभ्यस्तत्प्राप्तिर्भवत्येव । अग्नौ प्रक्षिप्तं हि रूपान्तरेणाऽन्यभूतेभ्यः प्राप्नोति, इदमेव हि यज्ञमात्रस्य फलं भवति । यज्ञरूपं हि कर्म सूक्ष्मेऽप्युत्तमं प्राप्नोति । अत एव सर्वेष्वपि यज्ञेषु चोत्तमोत्तमपदार्थानां हवनसंबन्धः स्पष्टं परिदृश्यते । "अश्वोधान्यं तथैवाज्यं कुटकं पर्णिकादयः" इत्यादिवचनात्, होमस्याप्येवं विधानं हि परिदृश्यते । वस्तुतस्तु यज्ञः ज्ञानक्रियेच्छानिष्ठः सर्वार्थ एवेत्युक्तो भवति ।

एवं वाजपेयोऽपि यज्ञपरः । वाजपेयस्तावत्समाहाररूपतया, यथावश्यकं दृष्ट्वा सम्यक्तत्प्रतिपादनपरः भवति।सत्यामेतज्ज्ञानादीनां प्राप्तौ परमां पदवीं ब्रह्मभावञ्च प्राप्नोतीति हि तत्फलं भवति । अत एव पञ्चमेधानग्निहोत्रादिकञ्च कृत्वा परमां गतिमधितिष्ठति । अत एव

"गोमेधश्चाश्वमेधश्च नरमेधस्तथापरः ।
अजस्य महिषस्यापि मेधाः पञ्च प्रकीर्तिताः ॥
वाजपेयस्ततो यज्ञः अग्निहोत्रं तथा परम् ।
दीक्षाकर्मत्रयो यज्ञः सर्वमेतत्सुखावहम् ॥"

इत्यादि प्रवचनम्।तस्मादेतद्यजनमपि नैमित्तिकाचरणरूपं भवति। यज्ञानामेतेषां सन्निधिस्तु पृथगेव भवति ।

गोमेधस्तावाच्छब्दमेध इत्यवगम्यते, गां वाणीं मेधया संयोजनमिति तदर्थात् । शब्दशास्त्रज्ञानमात्रस्य सर्वेभ्यः प्रदानमेव गोमेधः यज्ञः । तद्भवनञ्च शाब्दिकसन्निधानपदार्थानामेवेति विज्ञेयम्। अश्वमेधश्च सर्वज्ञानोपलक्षकः,अन्यपरः सर्वार्थः भवति, सर्वं स्वात्मानं मत्वा चेति तदाशयो विज्ञेयः । दृश्यतामिह — लोके ये च नास्तिका भवन्ति, तैश्च सर्वं जगदनीश्वरमनात्मात्मकमिति च मन्यते,"यदस्ति तदस्त्येव नासीन्नभविष्यति" इति प्रवचनात् । अत्रैवमुच्यते, ते चास्तित्वे स्वसंमतिप्रदाने प्रवृत्ता भवन्ति । यदिचेदिदं जगत्स्वतस्सिद्धं निष्प्रयोजनम्, तर्हि किं सर्वेण प्रयोजनं भविष्यति । ते नास्तिका अपि मत्वा स्वात्मानमेव तादृशं किमपि नाचरन्ति । सर्वसंबन्धमात्रन्तु तेषामपि माननीयत्वेन वरं भवति । अन्यथैवेहोपदेशस्य फलं निरर्थकमेव भवेत् । तस्मादश्वमेधस्सर्वथा कर्तव्य एवेत्युपदेशः। अयत्नतोऽपि तादृशाश्वमेधश्चावश्यकतया भवत्येवेति विज्ञेयम् ।

बहुस्यामिति सङ्कल्पबुध्या सर्वत्र स्वमन्तव्यस्यैव सर्वार्थे प्रतिपादनं भवति , अस्य समूलत्वादतीतत्वाच्च । यज्ञश्चैषस्सर्वदा राजभिः कर्तव्य एव भवतीति सर्वत्रोक्तं भवति । राजानस्ताव-

द्धर्मपालका भवन्ति । एतद्धर्मपालकतया राज्ञामयमावश्यकः । यथा महाविष्णोरूपस्थितस्सर्वाश्रयोऽयं संसारः, तथा राज्ञः प्रजानाञ्च संबन्धः । अन्यथा "ब्रह्मणः प्रजाः प्रजायन्ते" इत्याद्युक्तिः न संगच्छते । प्रजायन्ते इति प्रजा भवन्ति, स्वयमेव राजते इति राजा भवति, एवमेव हि प्रत्यर्थमवगम्यते । सर्वार्थधर्मप्रदानं शिक्षाकरणम्, राज्ञामेव समुचितं विहितञ्च भवति । राजते दीव्यते अनेनेति वा तदर्थः, दीप्तिश्च विधियुक्तैव । विधिरेव धर्म इत्युक्त्या तेषामेव धर्माधिकारः । एवं धर्मे कृते सति सर्वं परात्मकं भवति । स्वपरश्चान्यत्सर्वं विरुद्धमेव । अहं त्वमयमन्य इति तु विरोधबीजम् । एव जित्वा ब्रह्मपदवीमुपासते । अत एव स्तोत्रमाहात्म्यादावप्येव मुक्तिः ।

"ओमित्युच्चारणेनैव धर्मो भाति हि शाश्वतः ।
अश्वमेधसहस्रैश्च गोमेधानां सहस्रकैः ॥
प्राप्नोति मानवो नित्यं फलमेतत्सनातनम् ।"

इति । अत्र चोच्चारणन्नकेवलं वचनमात्रं प्रशस्यते, किन्तूच्चारयितारमप्यभिप्रेत्य ह्युच्चारणश्रोतृणां शिक्षात्वेन तदर्थबोधः भवति, "ब्रह्मणापि लभ्यते ब्रह्मज्ञानम्" इत्युक्तेः ब्रह्मणोऽपि ब्रह्मलाभाच्च । तस्मादयमश्वमेधयज्ञः राज्ञामवश्यं कार्यो भवति ।

नरमेधश्चेच्छापरस्तयोस्संवन्धरूपो बोध्यः । नर इति

सर्वाश्रयभूतस्यैव संज्ञा । सर्वाश्रय सर्वमित्येतद्बोधमात्रं तदेवेति विज्ञेयम् । एतत्परस्परसापेक्षत्वमेव परिपूर्णं नरमेधो यज्ञः । अत एव

“ गोमेधो ज्ञाननिष्ठश्चाहंरूपमकारकम् ।
एतद्रूपाश्वमेधश्चोकारात्मक्रियापरः ॥
नकारो नरमेधस्स्यादिच्छारूपः सनातनः ।
समाहारश्चाजमेधः सर्वधर्मानुवर्तनः ॥
जायते म्रियते नैव चेति मिथ्यायुतो भवेत् ।
स एवमजमेधोऽयं समाहारस्त्रयात्मकः ॥
ततश्च माहिषो मेधः पञ्चमः सर्वसंस्थितः ।
ब्रह्मणा क्रियते नित्यं पञ्चमेधाः परावरः ॥ ”

इत्यादि प्रवचनम् । तस्माद्यज्ञभूतश्चायं संसार इति चोच्यते, यज्ञेन स भवतीति तदर्थात् । एवमेव

“ ब्रह्मा विष्णुश्च रुद्रश्च महाविष्णुस्तथापरे ।
कुर्वन्ति पञ्चमेधांश्च संसारस्तेन भासते ॥
तज्ज्ञानेच्छाक्रियानिष्ठस्तत्समाहार एव च ।
पञ्चमं तदधिष्ठानमतीतः प्रणवाभिधः ॥
अहमेतन्नेति ज्ञानमेतदन्तर्गतं तथा ।
सर्वे मेधाश्च यज्ञाश्च सर्वज्ञानक्रियादयः ॥

नान्तरो माहिषो मेधः पञ्चमो धर्मसाधनः ।
फलार्थं न च कर्तव्यं सर्वमेव स्वभावजम् ॥
नैतदन्तर्गतं यच्च ह्यहमेतत्समायुतम् ।
समाहारो ह्यजो मेधश्चास्ति नास्ति समन्वितः ॥
एतदन्तर्गतश्चैषः नरमेधस्तृतीयकः ।
अहमेतदेतद्युक्तो ह्यश्वमेधः परायणः ॥
अहमेव परश्शब्दः शब्दब्रह्मपरात्मकम् ।
गोमेधश्चाहमेवास्ति पञ्च मेधास्समाश्रिताः । ”

इत्यादि प्रवचनम् । अत एव

“ ज्ञानं प्राप्य च संसारे परेभ्यो यः प्रयच्छति ।
स धीमान्सैव पुण्यात्मा प्रविष्टो धर्मवित्सदा ॥
ज्ञानं प्राप्य तदाचारः द्वितीयं कर्मसाधनम् ।
आचारादिष्टसिद्धिस्यात्तृतीयं परमं मतम् ॥
नैवाचारोह्यनाचारः ज्ञानाज्ञानं न किञ्चन ।
सर्वं ब्रह्ममयं बुध्वा सच्चिदानन्दमूर्तिमत् ॥
एतच्चतुष्टयं कर्म मोक्षश्चैवमयं सदा ।
सर्वार्थ एव यत्नस्यादेवं कर्माणि पञ्च च ॥ ”

इत्यादि प्रवचनम् । तस्मादेतेषां पञ्चानां मेधानां कर्तव्यत्वमेव । अत एव चैतदकरणे दोषप्रतिपादनम् । किञ्च

“ ज्ञानादिकञ्च संप्राप्य यः परेभ्यो न यच्छति ।
स ज्ञानी बाध्यते तस्य सर्वस्वं कर्म दूषितम् ॥ ”

इत्याद्यनुवचनमपि । तस्मात्सर्वे याजका भवन्तीति सिद्धम् ।

एतादृशज्ञानोपदेशाय, तद्व्याख्यानाय, सर्वभूतोपकाराय-ब्रह्मभावसिद्धये च महाविष्णोरागमनमप्युपन्यस्तं भवति, एतदर्थमेव सर्वावताराश्च भवन्तीति विज्ञेयम् । संसारमात्रं यज्ञेनाभूत्, भवति, भविष्यति चेति व्याख्यानफलं भवति । एवमग्निहोत्रं वाजपेयः दीक्षाकर्म च भवति । अग्निहोत्रं तावत्स्वप्राप्तस्य ब्रह्माग्नौ प्रदानमेव । वाजपेयश्चाप्राप्तप्रदानमेव, तच्चाप्राप्तप्राप्त्यर्थयत्नरूपमेव भवति । प्राप्ताप्राप्तं च, सर्वसमं सार्वदेशिकं सार्वकालिकं चेति बोध्यम् । वस्तुतस्तु प्राप्ताप्राप्तानप्राप्तभिन्नम् , तत्परञ्च ब्रह्म बोद्धव्यं भवति । एतदग्निहोत्रवाजपेययोः संबन्धरूपं दीक्षाकर्म भवति । अत एव

“ यः करोत्यग्निहोत्रञ्च ह्यहं ज्ञानेन वेष्टितम् ।
वाजपेयो ह्युकारस्थो ह्येष चैतत्समन्वितः ॥
तयोस्संबन्धरूपेण दीक्षाकर्म मकारजम् ।
अग्निहोत्रस्य विज्ञानं वाजपेयस्य सर्वदा ॥
दीक्षैव कारणं नित्यं त्रितयं प्रणवस्थितम् ।
अहमेतन्नान्तरं स्याद्यज्ञमात्रं ह्युपस्थितम् ॥

सर्वं ह्यावश्यकं विद्धि सर्वं मोक्षस्य साधकम् ।"

इत्यादिप्रवचनम् । तस्माद्दीक्षाकरणम्, द्वयोः परं तृतीयमिति विज्ञेयम् । दीक्षाकरणञ्च दीक्षाप्रदानम् । तच्च–ह्येवं कृते सत्येवं भवति, कर्तव्यमिदञ्चावस्थापरम् , कुरु तावदेतत् इत्यादिं रूपम् ।

एतत्समाहाररूपमेव संस्कारः । अत एव

" गृहाश्रमनियुक्तानां कर्मैव मोक्षदायकम् ।
कुर्यात्पञ्चमहायज्ञाः वैश्वदेवो बलिस्तथा ॥
नित्ययज्ञा इति विद्यात्कर्मैवावश्यकं परम् ।
नैमित्तिकोऽयं यज्ञस्यात्पञ्चमेधास्तदात्मकाः ॥
अग्निहोत्रं वाजपेयः दीक्षाकर्म परावरम् ।
संस्कारं परमं प्राप्य ब्रह्मत्वं पर्युपस्थिताः ॥ "

इत्यादि प्रवचनम् । एवमेव

" अहमेतन्नान्तरञ्च सर्वमोमित्यन्तर्गतम् ।
क्रियाज्ञानपरैर्वेच्छा समाहारार्थवाचिका ॥
ब्रह्मत्वं प्राप्यते लोकैर्वर्णाश्रमविधानतः ।
वर्णाश्रमीयधर्मेण यजनेन कृतेन च ॥
सन्तुष्टोऽनुभवेन्नित्यं ब्रह्मभावं सनातनम् ।
सर्वथा सर्वदा नित्यं भवेद्ब्रह्माण्डकल्पना ॥

अनाद्यनन्तं सर्वस्त्रमतीतं गोचरं परम् ।
ओमित्येकाक्षरेणैवं वेष्टितं सर्वशब्दवत ॥
नित्यनैमित्तिकं कर्म गृहस्थानामुपस्थितम् ।
नैमित्तिकञ्च यन्नित्यं तथा नित्यं परस्परम् ॥
तयोर्भिन्नं नैमित्तिकं सर्वं संबन्धमूलकम् ।
अकारश्चास्ति नित्यं वै नैमित्तिकमुकारकः ॥
मकारश्चानैमित्तिकमहमेतन्नेति युतम् ।
एतत्प्रणवरूपेण चतुर्वर्णाश्रमक्रिया ॥
सार्वत्रिकी सर्वसिद्धा सर्वरूपा सनातनी ।
अयमेव हि संस्कारस्सर्वेषां भेदकारकः ॥
अहमेतन्नेति योगात्संसारे भेदभासनम् ।
एकान्तरो भवेदेकः जगत्यन्तर्गतं जगत् ॥
अणावन्तर्गतं सर्वं सर्वे ह्यन्तर्गतं ह्यणौ ।
अणोरप्यणुभावश्च सर्वातीतो ह्यनादिमान् ॥
अनतीतं तयोर्भिन्नं शब्दज्ञानेन वर्जितम् ।
तस्मादेव हि संसारे नित्यनैमित्तिकाः क्रियाः ॥
चतुर्वर्णाश्रमेणैव कर्तव्यमुचितं सदा ।

इत्यादि प्रवचनम् । तस्मान्नित्यनैमित्तिकानि चात्मानात्मनिषिद्ध
पराणि भवन्ति । एवमेव

" सर्वसंसारमात्रेषु भवेद्वर्णाश्रमो विधिः ।
जातिर्व्यक्तिः पृथक्त्वैक्ये ह्यात्मानात्मा निषिद्धजे ॥
सर्वं प्रणवजं विद्धि सर्वञ्च प्रणवात्मकम् ।
महाविष्णुस्तथा विष्णुश्शिवो ब्रह्मा सनातनः ॥
नित्यनैमित्तिकं कर्म कुर्वन्त्येते व्यवस्थया ।
महायज्ञं बलिञ्चैव मेवांश्चैतान्तदात्मकान् ॥
अग्निहोत्रं यथायोग्यं संसारस्समवायवान् । "

इत्यादि प्रवचनम् । अत एव, "सर्वे महर्षयः ऋषयो महात्मानो ब्राह्मणाः योगिनश्च देवाश्च यज्ञे समागच्छन्ति, आगत्य च यथात्मकमुपदेशं कुर्वन्ति, " इत्यादीतिहासैः स्पष्टमुक्तं भवति ।

सतां समुदायस्य फलमिदं भवति । अत एव "समुदाये भगवान् स्वयं तिष्ठति " इत्याद्युक्तिः । यज्ञभूमिस्तावदेतत्समुदायभूमिरिति सर्वत्र स्पष्टम् । एतद्भूमेरेव तीर्थत्वेन प्रवचनम्, यत्र गत्वा तदुपदेशं श्रुत्वा तादृशाचरणेन तरति । तरणन्तावद्भ्रमराहित्यमेव भवति । एकैकत्वेन पृथग्ज्ञानमेव भ्रमः । तत्समुदायज्ञानमेव त्रितयात्मकञ्चोपदेशादिकेन लभ्यमानं भवति । अत एव

" कृते तीर्थे तरन्त्येव मानवा ये च पातिनः ।
साक्षाद्ब्रह्मत्वमेप्यन्ति मोक्षे ह्येवं हि निश्चितः ॥

वैकुण्ठं परमं धाम यदेतत्प्रणवप्रभम् ।

प्राप्नोति मानवो नित्यं यज्ञतीर्थबलेन च ॥ "

इत्यादि प्रवचनम् । तस्मात् "यज्ञभागभुङ्मुक्तः" इति विधानाच्च क्रियापि ज्ञाननिष्ठा बोध्या भवति । ज्ञानं विना कर्मणामसंभव एवेति बोध्यम् । अत एव ब्रह्मचर्यव्रत एव यज्ञाद्याचारस्योपदेशः । यद्यपि ब्रह्मचर्येऽपि, "सायं प्रातर्जुहुयात्" इति प्रवचनेन कर्मणः कर्तव्यौचित्यं भवति; तथापि तस्य ज्ञानसापेक्षत्वमेवेति विज्ञेयम् । सायं प्रातर्हवनञ्च; ज्ञानप्राप्तये ब्रह्मचारिणां परस्परानुवादरूपमेवेति सिद्धान्तः। सर्वकालञ्चाध्ययनार्थं सायं प्रातः व्याख्यानार्थञ्च तन्नियतम्" इतीतिहासैः स्पष्टमुक्तं भवति । अत एव

" गुरुणा प्रेरितो वापि चाप्रचोदित एव वा ।

कुर्यादध्ययने यत्नमाचार्यस्य हिताय च ॥

सायं प्रातश्च होतव्यमेतत्सर्वाश्रितं परम् ।"

इत्यादि प्रवचनम् । अत्र हि गुरुणा प्रेरितः, सर्वथा सर्वदा ज्ञानप्राप्तिकरणे प्रवृत्तिरिति तदर्थोऽवधेयः । सायं प्रातश्च होतव्यं व्याख्येयः स्वाध्ययनविषयः, इति फलितं भवति । एवमेव

" समिधं वा पलाशं वा चैकीकृत्य यथाविधि ।

अग्निकार्यं प्रकुर्वीत सायं प्रातस्समाहितः ॥ "

रणमात्मा । तद्वद्वर्णानां कारणमकार इति फलितं भवति । तस्मादकारस्य केवलत्वम्, तदुकारादियोगेन संसर्गोऽपिच भासते । कर्ता च यस्य यादृशः, तादृशं तत्कार्यं च भवतीति न्यायः । कर्ता ह्यवश्यं कार्येतिष्ठति, विना च कर्तारं कार्योत्पत्तेरदर्शनात् । सति च कर्तुरपूर्णत्वेऽनित्यत्वे च कार्यस्याप्यनित्यत्वमपूर्णत्वञ्च भवेदिति निश्चितं भवति । तस्मादात्मनस्संसारेऽपूर्णत्वं निश्चितं भवति । अत एव संसारो मिथ्यात्वेन भासते । नहि चास्यैकरूपेणावास्थितिः। जननं मरणञ्चेति क्रमेण त्रितयत्वम्, महत्त्वाल्पत्वे च, तथा पूर्णत्वानित्यत्वेचात्मन्येव कल्प्येते । अस्यैवात्मनस्सर्वं विशेषणं भवितुमर्हति । आत्मैव हि विशेष्यं भवति । तयोर्भिन्नमन्यत् । न तस्य नामरूपे।न चायं बुद्धेरन्यस्य वा विषयो भवितुमर्हति । आत्मविषयेष्वेव शब्दसंख्याकालादिप्रवचनम्, अन्यदप्यात्मनो वर्तत इत्यपि, आत्मसंभावनयैवानुमीयते । ज्ञाता च पदार्थः, न कदापि ज्ञेयः पदार्थो भवितुमर्हति, ज्ञानस्याविषयत्वात् । "ज्ञानं ब्रह्म" इत्यभिधानात् ज्ञातृज्ञानज्ञेयस्वरूपमिति तत्प्रशस्यते, ज्ञातृज्ञेयज्ञानभेदस्य तत्राभावात् । तस्मात्सर्वज्ञोऽयमात्मा, न तस्य ज्ञाताकश्चिदन्यो भवितुमर्हति । अतो हि ब्रह्मज्ञानं न संभवति । यद्यपि लोके ब्रह्मज्ञानीत्यादि विशेषणं दृश्यते, तथापि तद्भवनानुकूला योग्यतैव संसूच्यते । अत एव

सायं प्रातश्च होतव्यं क्रियाज्ञानं परस्परम् ॥
ज्ञात्वा सर्वाणि कर्माणि ह्याचरन्ति सनातनाः ।
एवमाचारसंसिद्धो ब्रह्मत्वमधिगच्छति ॥
ब्रह्म भूत्वा पुनर्लोके स्वयं ब्रह्माण्डकल्पकः ।
सर्वान्तर्गतं हि सर्वं तज्ज्ञानं निश्चयात्मकम् ॥
सम्यक्कृते ब्रह्मचर्ये गृहस्थाश्रमसंस्थितिः ।
न तस्य सुखदुःखौ च बाधकाबाधकानि च ॥
सर्वमेतत्समं कृत्वा समाचारेण साधते । "

इत्यादि प्रवचनम् । अत एव "सर्वकर्मणामभिज्ञापकं ब्रह्मचर्यं सर्वथाधितिष्ठन्, गृहस्थाश्रममूलं सर्वानन्दप्रदं स्वस्वरूपम्" इत्याद्युक्तिः । वस्तुतस्त्वयमात्मा न यज्ञः न याजकश्च भवति । अत एव

" न चैवाश्वमेधेन यज्ञेन साध्यो
न गोमेधयज्ञादिसंसाधनीयः ।
द्वितीयस्तृतीयश्चतुर्थस्थितस्या-
स्तथा पञ्चमेधात्मको नैवमात्मा ॥
बलिर्वैश्वदेवो न संस्थोऽयमात्मा
बलिर्भूतभावो विकल्पोऽयमात्मा ।
बलेस्संप्रदानप्रयुक्तोऽयमात्मा
निषिद्धः परश्चाहमेतत्प्रयुक्तः ॥

न चाकालकालस्वरूपोऽयमात्मा
तथा पञ्चयज्ञैर्न भूतोऽयमात्मा ।
न चैवं लघुस्यान्महान्सुप्रतिष्ठो
सदैवाहमेतत्प्रयुक्तोऽयमात्मा ॥
न चैतत्क्रियारूपसंभावनीयो
ह्यहं सर्वरूपाश्रयो ब्रह्मरूपः ।
सदैवाहमेतत्प्रकारेण युक्तः
सदा याजको यज्ञरूपः प्रधानः ॥
पलाशस्तथा सामिधो नायमात्मा
न चैवैतदन्यप्रकारोऽयमात्मा ।
सदा सर्वथा सिद्धरूपः प्रधानः
गुणाढयो ह्यनन्तस्वरूपप्रशस्तः ॥"

इत्यादि प्रवचनम् । तस्मात्तदेवं विधानेन यज्ञमार्ग गृहस्थाना-मुपस्थितं भवति । तद्यज्ञकर्माणि च मोक्षसाधकानि यजुर्वेद-विहितानि भवन्ति ।

एवमेव चाहरहर्यज्ञकरणं गृहस्थानां प्रशस्तं भवति । एवमेव ह्युपदेशः । हेतुनानेन यज्ञाश्च सर्वे, वर्तमानभविष्यद्भूत-कालपरा एवेति विज्ञेयम् । सर्वेषाञ्च यज्ञानां फलं मोक्ष एव, नान्यदपेक्षितं फलं भवति । अत एव

"सर्वं कर्म हि कर्तव्यं निरपेक्षं निरामयम् ।
फलेच्छया हि भूतानां बन्धो वै सर्वथा भवेत् ॥
अतः कर्मपरो भूयाः मा फलेषु च सर्वदा ।
एवं ज्ञानञ्च संप्राप्य सर्वयज्ञव्रतं कुरु ॥

इत्यादि प्रवचनम् । तस्मात्फलानपेक्षञ्च भवति, सर्वकर्म कर्तव्यौचित्यम् । पूर्णे हि ब्रह्मचर्ये फलापेक्षापि न भवति । अत एव "ब्रह्मचर्यान्निवृत्तानां गृहस्थाश्रमधारणम्, येन येन शोकहर्षाभ्यामुत्तीर्णो भवति" इत्यादि प्रवचनम् । किञ्च

"पूर्णे सिद्धे ब्रह्मचर्ये गृहस्थाश्रमधारणम् ।
तत्र नैव सुखो दुःखो ब्रह्मकार्यानुकल्पनम् ॥"

इति प्रवचनम् । तस्माद्ब्रह्मचर्यव्रतं पूर्णं कृत्वा गृहमेधी भवेदित्युपदेशः । अत एव ब्रह्मचारिणां भिक्षाटनादि कर्म प्रशस्तं भवति । तच्च केवलं मानावमानपरित्यागप्रयोजनं भवति । अतो दृश्यमानं क्रियमाणञ्च सर्वं स्वात्मवत्प्रतिभासते, इति हि तदाशयो विज्ञेयः । तस्मादेवं ज्ञानस्य, कर्मणः, मोक्षसाधनत्वमिति सिद्धं भवति ।

अत एव कर्मणां प्राधान्येन, सर्वेषां संस्कारप्रयोजनं भवति । विना च संस्कारम्, संस्कार्यं ब्रह्मभवनरूपं न सिध्यतीति विज्ञेयम् । इत्थं हि स्पष्टमवगम्यते, ब्राह्मणादिवर्ण-

नियमोऽपि हि संस्कारपर एवेति। वर्णमात्रे च, द्विजोऽद्विज इति भेदद्वयं दृश्यते। अद्विजश्च शूद्रः, स च सर्वभूताभिसेवको भवति। द्वाभ्यां संस्काराभ्यां जातो द्विज इति व्युत्पत्या, तादृग्राकारोकारमकारनियमेन च, ब्राह्मणक्षत्रियवैश्यानां द्विजत्वमुक्तं भवति। संस्कारद्वयञ्च सत्यमसत्यञ्चेति स्पष्टमवगम्यते। सत्यञ्च ब्रह्मज्ञानपरम्, असत्यञ्च ब्रह्मक्रियापरम्, तयोर्भिन्नमसंस्कृतमेवेति त्रितयं तद्विज्ञायते। सत्यसंस्कारस्तावज्ज्ञानक्रियेच्छायोगरूपः, कर्मज्ञानभक्तिषु सतीषु भवतीति विज्ञेयम्। तत्रैकस्मिन्सत्यपि संस्कारः, स च लोकप्रसिद्धोऽसत्यरूपश्च भवति।

जननं हि किल सर्वेषां जन्तूनामेकरूपमेव भवति। तच्च सर्वम्, परस्परं कामसंभूतं प्रकृतिपुरुषयोगमात्मानात्मरूपं विज्ञेयं भवति। तत्र च, चत्वारो भेदास्संभवन्ति, धातुवृक्षपशुमानवा इति। तादृशाश्च ज्ञानक्रियेच्छादिनियमात्संभवन्ति। एते च चत्वारो भेदाश्चक्षुर्गोचराः स्थूलनिष्ठाश्च भवन्ति। अतः पूर्वमप्येवन्नियमेन ह्यनन्तविभावना भवति। चतुर्णामेतेषामन्तर्गताश्च परमाणवोऽपि ह्यनेका भवन्ति। प्रत्यण्वपि चैवं चत्वारो भेदाः। एवं बुध्या हि सर्वस्यातीतानतीतस्य चैकत्वेन व्यवहारः, त्रितयस्य ब्रह्मरूपत्वात्तदतीतत्वाच्च। भवनव्यापारमात्रञ्च, जननं तत्स्थितिः नाशनं द्विजननं त्रिजननं चेति विज्ञेयं भवति। एवमेव सर्वेषामुत्प-

त्तिमात्रमेकरूपमेव । तेषां कार्यन्तु, स्वव्यापारपरं पृथग्भूतमेकत्वविशिष्टं बोध्यम्। तस्मान्मानवानामपि तादृश एव नियमो भवति ।

सर्वेषां जननन्त्वेकरूपमेव । ज्ञानक्रियेच्छाधिकारात्कार्यं पृथक्पृथग्भवतीति वेदितव्यम् । शूद्रत्वं हि सर्वभूतसेवनकार्यरूपं भवति । तेन च सर्वेषामौचित्यमेव चोच्यते । सेवनकार्यमित्युक्त्या हि सेव्यसेवकभावः कथितो भवति । यस्तु केवलं भूतमात्रमभिषेवते, स शूद्रो भवति । न तस्य किञ्चिदपि ज्ञानमस्ति, नैव हि क्रियेच्छासंबन्धज्ञानमपि, नैव हि समाहारज्ञानञ्च ; किन्तु केवलं प्रधानतया सर्वभूताभिषेवणमेव तद्धर्मो भवति । यो हि शूद्राणां मध्ये जानात्यात्मतत्वमनात्मतत्वं निषिद्धस्वरूपञ्च, स चान्तर्मुखो भवति चान्येभ्यः । तदर्थमेव हि चेन्द्रियाणां निग्रहं तद्वशीकरणञ्च करोति । एवमेव व्यापारेण वैश्यत्वमपि भवति । तस्यांतर्मुखीभवनसाधनोऽयं संस्कारस्सत्यरूपोऽसत्यरूपश्च भवति। तदनुकरणमेव. ब्रह्मचर्यादिव्यवहाराभिनिवेशनं भवति । अतस्तस्य शास्त्राध्ययनपरत्वम् , यादृशाध्ययनेन सत्यसंस्कारभाग्भवति ।

सत्यपि शूद्रत्वे स्वार्थतयासेवनं सत्यानुकरणञ्च सच्छूद्र व । यश्च पुनस्सत्यपि चेन्द्रियकार्यव्यापारे,बहिस्थितोऽपि मत्वा सर्वमभिषेवते; स सच्छूद्रो भवति । एवं सद्वै-

श्यानुकरणं ह्यसत्यवैश्यत्वम्, तच्च व्यापारकरणं भवति। ते च हि व्यापाराः, स्वार्थतया, परार्थतया, परमार्थतया वा ब्रह्मकार्यानुसाधना भवन्तीति विज्ञेयम्। एवं सत्क्षत्रियोऽपि तादृशो बोध्यः। क्षत्रं तावदधर्मस्य क्षयः, धर्मानुसंधानम्, स्वात्मार्थमन्यार्थञ्च तद्धारणम्, रक्षणञ्च भवति; सर्वस्यैकत्वात्। तदनुकरणञ्चाक्षत्रियत्वम्, राजा प्रजादि व्यवहारात्। प्रजानां पालनञ्च तन्मर्यादाभिस्थापनमेव भवति। एवं त्रितयत्वेन ब्रह्मज्ञानत्वमेव सद्ब्राह्मणत्वम्। तदनुकरणञ्चासद्ब्राह्मणत्वम्। सत्प्रयोजनतया, यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपाणी षट्कर्माणीति सर्वस्थितानि भवन्ति। सप्तकर्माधिकारी, न ब्राह्मणो न क्षत्रियो न वैश्यो न शूद्रश्च भवति। ज्ञानक्रिययोः परिवर्तनेन पूर्ववत्सप्तकर्माण्यपि च स्पष्टानि भवन्ति। यजनादीनि हि षट्कर्माणि। सप्तमन्तु, तत्सिद्धान्तरूपमतीतं कर्म करणान्निरपेक्षञ्च भवति। ज्ञानक्रियेच्छानां प्रत्येकं द्विविधेन हि भेदेन षड्भेदा भवन्ति। तत्समाहारस्तु सप्तम इति विधानेन स्पष्टमुक्तो भवति। तस्मात्तदन्तर्मुखवृत्तिभवनस्यैव, द्वितीयसंस्कारत्वं सिद्धं भवति। शूद्राणा कार्याणि च बहिर्मुखानि भवन्ति। इन्द्रियवशीकरणव्यापारस्तु, वैश्यादेवारभ्यते। अतस्त्रयाणां वर्णाना द्विजत्वेन प्रवचनम्, उपनयनमुपवीतधारणं मुख्यञ्च भवति।

उपनयनं हि सद्गुरुणा कर्तव्यं भवति । संसारमात्रं सुखदुःखरूपं ज्ञात्वा ह्येषावस्था भवति । कर्तास्याश्चेश्वरः । अहञ्चात्मा भवति । सर्वं हि ब्रह्ममयम् । ब्रह्मचानन्दमयं सच्चिद्रूपं भवति । तर्हि किमेवं संसारे भ्रमः—जायते म्रियते तिष्ठतीत्यादिपरस्परव्यतिक्रमविभवः, कथं वा सुखं दुःखं चाप्नोति, कथं हि हर्षशोकौ, रागद्वेषौ च व्यवस्थितौ, किमत्र मानम्, कस्मात्कथं भवति इत्यादिपरिभावने सति सद्गुरुं प्राप्नोति । प्राप्तश्च तदुपनीतो भवति । इदमेव ह्युपनयनं भवति । तत्र, त्रितयज्ञानं पृथक्त्वैकत्वविशिष्टं निर्णीतं भवति । तदुपनयनस्यानुकरणञ्चासत्संस्कारोपवीतोपनयनं भवति । यस्य च व्रतबन्धत्वेन प्रवचनम्, सोयमुपवीतसंस्कारः । यस्मात्कालादयं शास्त्राध्ययने प्रवृत्तो भवति, प्रवृत्तं कारयति च; तस्मिन्काले एव तच्छास्त्राध्ययनरूपब्रह्मचर्यस्यारंभः । तदेवोपवीतं भवति । तत्र सर्वेषां ब्रह्मज्ञानोपार्जनशक्यत्वाद्धर्षो भवति । अयञ्च ब्रह्मचारी भवतीत्यभिप्रेत्य सर्वेप्युत्साहिता भवन्ति । तत्र चाचार्यः नियतः करोति । अनेन सह चैतच्छास्त्रमध्येयं भवति । तच्चिन्हं सूत्रधारणं भवति । उपनयनेऽपि सूत्रत्रयं ज्ञानक्रियेच्छाज्ञापकं भवति । तस्यैवानुकरणं ह्यसत्संस्कारे सूत्रत्रयधारणम् । तच्छास्त्राध्ययनपरिसमाप्तये, विघ्नध्वंसार्थं सर्वेषां बोधनाय च साक्षीत्वेन

यज्ञो भवति । तत्र चैतत्संसारे देवानामृषीणां महर्षीणां ब्राह्मणानां योगिनामन्येषां तद्विशिष्टानां चावाहनं भवति । आवाहयित्वा च सर्वे प्रार्थयन्ति,—एतद्ब्रह्मचर्यं पूर्णं कुरुत, यतोनिर्विघ्न-ब्रह्मतत्वाध्ययने चास्य प्रवृत्तिर्भवेत्, इत्यादि । एवं सूत्रत्रयेण तं चिन्हितं कृत्वा, तस्याचारशिक्षाञ्च कृत्वा साकमाचार्येण मातापितरौ तमेवमुपदिश्य प्रेषयतः—गच्छ तात यथासुखम्, एतदाज्ञां कुरु, शास्त्राण्यधीत्य ब्रह्मतत्वं परिज्ञाय ब्रह्मभावं प्राप्य संसाराभिनिविष्टो भव, इत्यादि । तादृशज्ञानेच्छाक्रियानुसारेण तस्य चैकान्हपर्यन्तं गृहसंबन्धानुवर्तनमुचितं भवति । पश्चादाचार्य-स्यानुवर्तनेन यथावदङ्गोपाङ्गवेदाध्ययने सर्वप्रकारमात्मज्ञाने, प्रव-र्तनीयश्चेति विज्ञेयम् । त्रयाणां वर्णानाञ्चैवमन्तर्मुखत्वं सिद्धं भवति । अतस्त्रयाणामनुवर्णितवर्णानामेवोपवीतधारणाधिकारः। शूद्रधर्मे तु सर्वाभिषेवणमेव, न यस्यैतादृशी बुद्धिः, यथा चान्तर्मुखव्यापारो भवति । अत एव द्विजाद्बहिस्तत्संज्ञा भवति ।

अत्रांशे परंपरासंबन्धोऽपि वर्तते । परंपरया वर्णत्रय-मिदं वैश्यक्षत्रियब्राह्मणमन्तर्मुखाधिगम्यं भवति । येषामन्तर्मुखी-भवनमेव कार्यम्, तत्र जातानामपि तादृशं कार्यं भवति; इति हि लोकसिद्धं भवति । कर्मानुसारेणैव सर्वेषां जननं भवति । यादृशं यस्य यस्य च कर्म, तादृशं तस्य तस्य च कुलम्,

व्यवहारः, धनम्, राज्यम्, सुखदुःखे, भवन्ति । तथैव येषां किञ्चिन्मात्रमपि कर्म तादृशं, तेषामेव वर्णत्रये समुद्भवः । यद्यपि बहूनाञ्चोत्पत्तिमात्रमिष्टं भवति न तत्करणसामर्थ्यम्, तथापि तत्र चोत्पत्तौ सत्यां शिक्षादिकमपि जन्मान्तरे भवतीति निश्चयः । एवं बीजेन हि सर्वत्रोपवीतोपनयनविधिः । अयञ्च वर्णाश्रमधर्म-संस्कारः यज्ञादिकञ्च, सार्वत्रिकं सार्वकालिकं सर्वानुगतञ्चेति बोध्यम् । एतदनुकरणंच, धातुवृक्षादावपि सूक्ष्मतया वर्तते । मानवस्य हि, सर्वश्रैष्ठ्यात्सर्वोत्तमत्वाच्चाधिक्यं विज्ञायते । तत्रैवं विधानेन चोपवीतोपनयनसंस्कारो भवति । उपनयनोपवीतयो-रप्येवं भेदः । उपवीतञ्च स्थूलम्, उपनयनं हि सूक्ष्मं भवति ।

सदसदादिभावनञ्चेत्थं भवति । यदसत्तत्त्रकिञ्चिदिति नियमात्संस्कृतास्सर्वेऽपि चान्तश्शास्त्राधिकारिणो भवन्ति । एत-दन्तर्मुखप्रवृत्तौ सत्यां शूद्रस्यापि द्विजत्वं प्रतीयते । यो ह्येवं कदाप्यन्तर्मुखो न भवति, स नान्तश्शास्त्रे प्रवृत्तः पतितश्च भवति । संसारगतं हि सुखं दुःखञ्च क्षणभंगुरं भासते । मृतौ शोकः, जनने हर्षः, प्राप्तौ सुखम्, तदभावे दुःखञ्चेत्याद्यधमा गतिः । याथातथ्यं हि न सर्वस्य•भासते, इदमेव भ्रष्टता । अन्यथा न दुर्गतिः, न च सुगतिरिति च सर्वत्र न भवेत् । अत एव ब्राह्मणक्षत्रियवैश्यानां प्रसिद्धवर्णानां परंपरया प्रख्यातद्विजानाञ्चा-

युर्बलेन, कर्मानुयोगेन चाधिकार उक्तो भवति । यद्यूर्ध्वमस्ति चैदतत्कालः, न तस्यान्तः प्रभवति; तर्हि तस्यापि तादृशं पातित्यं वेदितव्यम् , नास्मिन्जन्मनि चान्तश्शास्त्रे प्रवृत्तिर्भवति, इत्यादि-तच्छ्रेष्ठानां परिभावना भवति । वर्णत्रयेऽपि, यथाकालं यथादेशं, यथावयश्च परंपरया नियतम्; तथा तस्मिन्तस्यौचित्यं भवति ।

एवं क्रमेण वर्णानां त्रयाणां जननादारभ्यान्तपर्यन्तञ्च सदसद्विशिष्टत्वम्, षोडशसंस्कारैः स्पष्टमुक्तं भवति । तन्मूलञ्चैकं महावाक्यमहमेतन्नेति, निश्चितं भवति । अत्र च बीजमेतन्महा-वाक्यम्, अहमेतन्नेति त्रीणि, समाहारश्च भवति । प्रत्येकं तत्र तादृशात्रितयपरिवर्तनं भवति, समाहारस्य सर्वत्र युक्तत्वात्। अतः प्रत्येकं चतुर्विधेन षोडश भवन्ति । ते च संस्कारत्वेन विधीयते । एतच्चतुर्णां परिवर्तनमेव, जननादारभ्य सामान्यनियतायुषां प्रभ-वति । यद्यपि जननकालेऽपि मृत्युर्भवति, एवं युवावस्थायां बाल्ये चान्यस्मिन्नपि च , अतो न नियतायुः कश्चिदपि भवति; तथापि सामान्यतः , यथाकालजननमायुरपि नियतं भवति । अस्मिन्युगे मन्वन्तरे वा सामान्यमायुरिदं भवति, तस्य च गतिः आचा-रपरिभ्रष्टानां त्वन्यथा हि भवति । तेषा हि विशेषविधिना प्रयोगः । संस्कारादयस्तु, सर्वसाधारणतया भवति । तस्मा-

त्सर्वार्थम्, षोडशसंस्काराश्च नियता भवन्ति । संस्कारा-णामेतेषां प्रणवेन संबन्धो विज्ञायते । स च, तादृशाश्वमेधादि-वत्पूर्वाख्यानेन बोध्यो भवति । अत एव

" गोमेधश्चाश्वमेधश्च नरमेधश्च सर्वशः ।
संस्काराष्षोडशैवैते प्रणवस्थास्समुद्भृताः ॥ "

इत्यादि प्रवचनम् । तस्मात्षोडशसंस्काराणामपि चाकारोकार-मकारप्रतिष्ठितत्वं विज्ञेयम् । अत एव तत्रासत्सदिति भेदद्वयम्, ज्ञानक्रियायाः प्रसिद्धत्वाख्यानादिच्छायास्संबन्धरूपत्वाच्च । सद-सत्परिभावनया, तद्विवर्तनपरिवर्तनाभ्याञ्च विधेरनन्तत्वम् । अत एव संस्कारस्याप्यनन्तत्वमुक्तं भवति । संस्काराणांकर्म प्रवचन-त्वेन क्रियायाः ग्रहणं भवति । अत एव

" यजुर्वेदस्थितास्सर्वे संस्काराश्च भवन्ति हि ।
संसाराणां हि सर्वेषां संस्कर्ता तु पितामहः ॥
महाविष्णोः प्रयत्नेन भासते सकलं जगत् ।
सर्वस्वं प्रणवस्य स्यात्सर्वान्तर्गतमेव तत् ॥
ज्ञानांशेन तु ऋग्वेदः विष्णुना कल्पितः पुरा ।
कर्मांशेन स्वयं ब्रह्मा यजुर्वेदं चकार च ।
सर्वेषां भूतमात्राणां ब्रह्मा संस्कारकारकः ॥
प्रत्येकमप्यणूनाञ्च भवेयज्ञादिभावना ।

संस्कारो हि भवेत्तत्र यथा भावानुसारतः ।
संस्कारेण विशुद्धानां ब्रह्मत्वमुपजायते ॥ ”

इत्यादि प्रवचनम् । तत्सर्वेषां संस्कारो नित्यो भवति । विना च संस्कारम् , त्रितयात्मकब्रह्मभवनमनुपपन्नम् । यद्यपि प्रत्येकं ब्रह्मत्वं सिद्धम् , तथापि बहूनामेकत्वात्संस्कारोऽयं केवलं सर्वेषामैक्योत्पादको भवति । अन्यथा ह्ययमात्मा निरस्तः, सर्वभिन्नः भवेत् । अत एव

“ न चैवायमात्मा ममत्वेन सिद्धः
न यज्ञेन दानव्रतेनानुशिष्टः ।
न तत्संस्कृतस्सुप्रयुक्तः प्रधानः
सदा सर्वदा चाहमेकोऽयमात्मा ॥
न चैवैतदेतत्समष्टिस्समस्तं
न च व्यष्टिरूपो न च ज्ञानरूपः ।
न तद्बोधको नैव बोध्यो भवेत्स्यात्
सदैवाहमेतद्विधानप्रयुक्तम् ॥
मदीयं त्वदीयं न चैवान्यदीयं
सुखं नैव दुःखं परं भावनीयम् ।
न जातो मृतो देहशुद्धोऽयमात्मा
सदैवाहमेतन्नकारप्रयुक्तः ॥

नैवायं नायमन्नस्थः तत्रस्थो नैव किञ्चन ।
सर्वत्रात्मा समानन्दः सर्वदा सर्वसंवृतः ॥
एकप्रणवशब्देन चोमित्येतत्परेण च ।
तद्बोधो जायते नित्यं सर्वगस्सर्वसिद्धिदः ।
अकारोकारमकारैस्संस्काराष्षोडश स्मृताः ॥ "

इत्यादि प्रवचनम् । तस्मात्षोडशसंस्काराणा धारणं धर्मत्वेनोक्तं भवति । उक्तेन हि नियमेनान्तर्मुखत्वप्रतीत्या, वैश्यक्षत्रिय ब्राह्मणानामेवाधिकारः । शूद्राणां हि तावत्सेवैव नियता भवति तत्सेवया तु पुनरन्तर्मुखत्वं तद्व्यापारसाधनं यदिचेद्भवति, तद स्वसद्गुरुणा सर्वाधिकारेण तेषामपि तत्संस्कारा भवन्ति अत एव

" सेवया हि च सर्वैस्तु त्रिवर्णत्वं सुलभ्यते ।
द्विजो भूत्वा यथायोग्यं कर्तव्यं कर्म चोत्तमम् ॥
संस्कारविहितं मुख्यं तथोपनयनादिकम् ।
तं प्राप्नोति मनुष्यश्च सेवया सर्वकर्मणा ॥
मनसा कर्मणा वाचा क्रियया ज्ञाननिष्ठया ।
सर्वथा सेवनं कुर्याद्भूतमात्रस्य निश्चयात् ॥
एवं कृतेन वैश्यत्वं जायते मानवस्य च ।
क्षत्रियत्वं लभेत्तेन ब्राह्मण्यञ्च परात्परम् ॥

लोके च ब्राह्मणो भूत्वा स्वयं संसारकल्पकः ।
बहुस्यामिति सङ्कल्पात्सर्वातितप्रदर्शनात् ॥
ओङ्कारजायमानत्वात्संसारे वितयक्रमः ।
वितयं ज्ञात्वैकरूपं ब्रह्मकार्यसुसाधनम् ॥ ”

इत्यादि प्रवचनम् । तस्मादहमयमन्यद्यत्तदिदं त्वमियमित्यादि-प्रपञ्चरूपन्नाशयित्वा सर्वं ब्रह्ममयं स्वात्मानञ्च विद्धि, एतदेव संस्कारफलं भवति । सर्वमयमहम् , मन्मयञ्च सर्वमिति हि तत्परिज्ञानम् । तस्मादेवं संस्कृतानां ब्रह्मपरिभावना च सर्वाधि-कारसिद्धा भवति । अस्मादेव हेतोर्ब्राह्मणादीनां त्रयाणां वर्णा-नाम् , ब्रह्मस्वरूपविज्ञानाधिकारस्सिद्धो भवति । शूद्राणान्तु, ब्रह्मप्रबोधमात्रात्सेवाकरणकार्यमुक्तं भवति ; “सम्यक्क्रियते पर-स्परप्रस्तावः संस्कारः” इति सूत्रात् । परस्परप्रस्तावैश्च यथायथं ज्ञानं भवति । सर्वैः प्रकारैस्तत्करणमिति हि विज्ञेयं भवति । तस्मात्संसारेणैव ब्रह्मज्ञानसिद्धिः । यद्यपि शूद्राणामपि कश्चित्संसार उक्तः, तथापि तस्य सेवान्तर्गतत्वमेव विज्ञेयम् ।

षोडशसंस्काराश्च वेदपरिगणिता भवन्ति । यद्यपि स्मृतिषु दशसंस्कारा उक्ताः, तथापि गौणमुख्यन्यायान्मुख्याश्च दशसं-स्काराः,षट्च गौणाः भवन्ति । एवमेव हि षोडशसंस्कारास्संप्रयुक्ता भवन्ति । सर्वेषां नियते चैकायुषि संस्काराणां सर्वेषामप्यावश्य-

कत्वम् । तद्धारणञ्च द्विजादीनामावश्यकं भवति । संस्कारश्च ब्रह्मानुभवनरूपः। तेषां नियमेन यथाक्रमं पूर्वोत्तरत्वमुक्तं भवति।

संस्कारोऽयं प्रथमः गर्भाधानरूपः। रजोदर्शनञ्च स्त्रीणां कामोत्पत्तौ सत्यां भवति। तच्च मासिकं भवति। प्रतिमासं मासान्तरे वा यद्रजो भवति, तदेव ऋतुरित्युच्यते। अतश्चैषा ऋतुमतीति चोच्यते। ऋतुमती दिनचतुष्टयं परिवर्जयेत्, यावद्रजोधर्मस्थितिः । पश्चाच्छुद्धानां तन्निवर्तनेन नारीणां कामोत्साहश्च भवति । तथोत्साहितानामेव तासां भोगो विहितो भवति। तत्रैव वीर्यरजसो योगाद्गर्भसंस्थापनं भवति। तत्स्थापनमेव प्रथमसंस्कारश्चैकः । गर्भवतीनां हि, सामान्याद्विशेषावगतिर्भवति, यथा—वृक्षाणां पुष्पात्परं फलप्रवचनम्। तत्फलस्वरूपसंभवश्चैकस्संस्कारः, बहुत्वप्रकल्पनात्। एवमेव हि नारीणामपि बहुत्वसाधकता वाच्या भवति। तदिदं गर्भाधानविषयं भवति। तन्निर्विघ्नगर्भसंस्थितये संस्कारस्य चैकस्यावश्यकत्वं भवति। एवं सत्संस्कारश्च तावद्ब्रह्मपरिभावनधारणः, कोऽहमस्मीत्येतद्रूपः, कस्मादागतोऽहमित्यादिरूपश्च।

अथ च सीमन्तोन्नयनसंस्कारो द्वितीयः। यस्मात्कालाद्गर्भाधानं भवति, तस्मात्तदभिवर्धनम्। यस्मिंश्च काले तद्विवर्धनपरिसमाप्तिः, रजोवीर्यस्थितपरमाणुभिस्तत्पूर्तिर्भवति, सर्वा-

ङ्गाङ्गीव्यवहारश्च स्पष्टो भवति; तदा सीमन्तोन्नयनसंस्कारः। स च जीवागमनकालकार्यो भवति। शरीरनिर्माणानन्तरमेव हि जीवाभिनिवेशनमिति सर्वत्रोक्तं भवति। शरीरनिर्माणं हि, रजोवीर्याणुभिर्ज्ञेयं भवति। अणूनां प्रत्येकमपि, तच्छक्तेर्विद्यमानत्वेन, तादृशत्रितयत्वेन च, तन्निर्माणभवनं सिद्धं भवति। पश्चाद्गर्भस्थिते देहे, अस्ति कश्चिदेकश्चात्मा तदणुसंबद्धः। स चागत्य तिष्ठति। तत्र तदागमनोत्साहात्तत्स्थितिसंबन्धपरिरक्षणार्थं सीमन्तोन्नयनसंस्कारः। सीमा हि, शरीरस्य तदन्तम्, तच्च तत्परिसमाप्तिरिति विज्ञेयम्। उन्नयनञ्च तत्संबन्धरूपप्रयोजनसाधनमिति तदर्थः। एवं सत्संस्कारे ह्यहमित्येतद्बोधमात्रम्। अहश्चात्मा भवति। स चाकारनिष्ठः, देशकालवस्तुभिन्न इत्येवं रूपः।

ततः पुंसवनसंस्कारस्तृतीयः। स च जीवस्य स्थितौ सत्यां या यावस्था भवति, तज्ज्ञापकोऽयं संस्कारः। तेन यस्मिन्यस्मिंश्च योनौ पूर्वमासीत्तत्सर्वयोनेरनुकरणञ्चैकयोनौ तत्परके च भवत्येवेति विज्ञेयम्। शरीरनिर्माणे हि, न स्थितयोनिक्रमेण शरीरनिर्माणं भवति; यथा—वृक्षस्थस्य जीवस्य पशुत्वप्राप्तौ प्रथमं वृक्षनिर्माणं वृक्षजातिव्यक्तिक्रमणे भवति, पश्चात्पशुत्वारोपः। एवमेव हि विधानं सर्वत्र द्रष्टव्यम्। अत

एव सीमन्तोन्नयनानन्तरं पूर्वयोनेः शरीरनिर्माणस्थस्यानुकरण-मुक्तं भवति । एतदनुकरणन्तु "जीवागमे सति पुनर्भवति" इत्युक्त्या तादृशः पुंसवनसंस्कारो बोध्यो भवति । एवं सत्पुं-सवनञ्च, अहमश्चैतदायोगरूपं भवति । तदहमेतन्मात्रं पुंस-वनं प्रधानम् ।

अथ जातकर्मसंस्कारश्चतुर्थः । स च स्यामित्येतत्सिद्धः । तत्सिद्धिमात्रं तत्कर्मेति विज्ञेयम् । यश्च कृतः पूर्वं संकल्पः, स्त्री-पुरुषयोगविहितः, तस्य सिद्धिरित्युत्साहः । तस्यैव संस्थितये जातकर्मसंस्कारः । उत्पत्तिस्थितिविनाशइति त्रिविधा क्रिया भवति । उत्पत्तौ सत्यां तत्स्थित्यर्थं चैवमुक्तं भवति । तत्संकल्पश्च स्थितिमात्रे भवतीति, तस्य कर्मेति भावो बोद्धव्यः । एवं तत्सं-स्कारेऽपि—एतत्किमस्ति, यदस्त्येतत्, तेन किमहमः, इत्यादि-परिभावना भवति ।

अथ च पुनर्नामकरणसंस्कारःपञ्चमः । सर्वञ्च ब्रह्मेत्युक्त्या सर्वे ब्रह्माण्डकल्पकाभवन्तीति व्याख्यानात्तेषां पृथक्पृथङ्नाम-करणं भवति । यद्यपि ब्रह्मणश्चैकत्वम्, एकं ब्रह्म न द्वितीयम्, "न द्वितीयं तृतीयमित्याद्युक्तेः; तथापि पृथक्पृथक्प्रतिभासमानं तथा भासनमात्रम् । अतः प्रतिभासमानानां तेषां नामान्यपि पृथक्पृथगेव सन्ति । वस्तुतस्तु सर्वाणि नामानि सर्वस्याख्यातानि

सन्ति । अतस्सार्वत्रिकत्वात्सर्वस्यातीतत्वाच्च नामकरणं भवति । एवं तन्नामकरणसंस्कारेण, अहमा चैतत्परिभावनम् , एतदा चाहं परिभावनञ्च स्पष्टं भवति । अहमेतदोः परस्परविज्ञानञ्च नामकरणसंस्कारतत्वं भवति, "ज्ञानाधीनन्नाम" इति सर्वत्राख्यातत्वात् , ज्ञानशब्दसंबन्धत्वाच्च । योऽयं जानाति, स तदर्थं शब्दमभिकल्पयतीति बोध्यम् । तज्ज्ञानस्येष्टसिद्धये शब्दोप्यावश्यको भवति । तज्ज्ञानादेव हि शब्दप्रतिपादनं नामकरणं भवति । एतेन शब्देन चास्योच्चारणं बोध्यमिति नामकरणस्वरूपं विज्ञायते । अहमित्युक्त्या चैवं ज्ञानमकारानिष्ठम् , एतदित्युक्त्या चैवं ज्ञानमुकारानिष्ठम् , अहम्यन्तर्गतमेतत् , एतदन्तर्गतमहमिति तद्बीजं भवति । द्वयोरन्तर्गतत्वेनाहन्नैतत्किञ्चिदिति तत्फलं भवति ।

अथ षष्ठोऽयं चूडाकर्मसंस्कारः । चूडाकर्मकरणञ्च जातानां कार्यकरणमिति विज्ञेयं भवति । यो हि जातः तस्य-किं प्रयोजनमिति विचार्य, तत्प्रयोजनं कार्यकरणं संसारव्यवहारसाधनमित्यभिप्रेत्य तस्य चूडाकर्म भवति । अस्मात्कालादेतस्यापि कार्यत्वेन प्रवेश इति तत्स्वरूपं भवति । तस्य च क्षौरकर्मकरणम् , मातृगर्भजातकेशनखापनयनरूपम् । तत्कृत्वैव संसारव्यवहारो द्रष्टव्य इति बोध्यं भवति । तस्मिंश्च दूरीकृते सत्यपि पुनस्तदुत्पत्तिर्दृश्यते। इतीदमेव संसरणफलं भवति , यो

भवति स विनश्यतीति नियमात् । केशाद्यपनयनरूपञ्च चूडा-कर्म कृत्वा पुनस्तस्य वस्त्रालंकारयोगोऽपि भवति । तत्रास्त्यहङ्का-रादिभावना । एवं संस्कारेणाहमेतदोरैक्यमुक्तं भवति। अहमेतच्चा-स्म्येवेत्यहमो ह्यहङ्कारः । तच्चैतदिति स्वयमपि जानाति । अहमे-तादस्मीति , पूर्णस्संसाराभिनिवेशो भवति । सैव ममभाववृद्धिरे-वम्—अहमेतदित्थम् ,नास्मत्सदृशोऽन्यः कश्चित् , इति । यदस्मि तदहमेवेत्येतत्स्थत्वम् । अहमः एतदश्च पूर्णं ज्ञानम्, एतदंशो चाहमः प्रवर्तनमिति चूडाकर्मतत्वमुक्तं भवति । अहम-श्चैतदि पूर्णाभिनिवेशनम् , ह्येतदाच्छादनञ्च भवति । एतदा ह्याच्छादनञ्च सद्वस्त्रालङ्कारः । एवं चूडाकर्मण्यपि केशादिकमप-नीय संसरणरूपवस्त्राद्युपचारो भवति । यथा च बालो वर्धते. तथा तस्य ह्यादिकमपि तत्क्रियोत्पन्नं भवति । अन्यथा तु बाल्ये स्वच्छन्द एव नात्मानं मन्यते , न परं सर्वञ्च । स्वमय-मित्यादि तु बालस्वरूपाचरणेन विज्ञेयं भवति । अत एव तत्संस्कारस्याप्यावश्यकत्वमुक्तं भवति ।

अथ कर्णवेधः संस्कारस्सप्तमः । तत्तच क्रियामात्रस्य परिज्ञातृत्वं भवति, क्रियते वेधः स्वपरान्यभवनामिति, प्रपञ्चपरमिति च तदर्थात् । तत्र च सर्वमिदं मदीयमस्ति, अन्यच्च निरर्थकमिति ज्ञानं भवति । यश्चायं संसारः स एव मुख्यो भवति । नात्म

परमात्मा चेति तत्परिभावना भवति । इत्थंभूते क्रियाप्रविष्टेऽपि क्रियायास्सत्त्वेन कर्णवेधसंस्कारो भवति । तत्राप्यस्ति क्रियाकरणजन्योत्साहः । एवं सत्संस्कारोऽपि तादृशश्चैतन्नास्मीति प्रयुक्तो भवति । एतज्ज्ञानञ्च—अहन्न किञ्चिदस्मि, यदस्ति तदेव, एतद्भूतोऽहम् ,इति । एतन्मात्रस्यप्रकल्पनं कर्णवेधसंस्कारः । एतत्संसारस्य याथातथ्यं विज्ञाय पुनरन्यापेक्षा भवति । अत एवायमपि सप्तमस्संस्कारोऽपि मुख्यो भवति । अस्यैवानुकरणमसत्संस्कारकर्णवेधः । श्रवणच्छेदनञ्च ह्यस्मात्कालाद्यावदेतत्संसारानुभवनञ्च कर्तव्यः, सन्त्यत्र मणयः, सौवर्णानि वस्तून्यनेकानि सन्तीति, तद्धारणे प्राप्तकरणे च प्रवृत्तिरपि तस्मात्कालाद्भवति। अनेनापि सप्तमस्याधिक्यं संसूच्यते । सत्संस्कारे तु चैतन्मात्रस्य ज्ञानं भवति । यद्यपीदमेतद्दुःखसुखमयम् , तथापि ममत्वञ्च तन्नाभिवर्ततएव ।

अथाष्टमस्संस्कारो व्रतबन्धः, यस्योपवीतत्वेन प्रवचनम्। अत्र च संसारकार्ये ममत्वव्यवहारं किञ्चिज्ज्ञात्वास्त्येवमेतत् । एतत्प्रकाराणां तन्नियन्तॄणां तत्कर्तॄणाञ्चापि ज्ञानप्रयोजनतयान्तर्मुखीकरणं भवति । केन केन प्रकारेण संसारस्साधयितव्यः, कोऽत्र नियमः, इत्यादिपरिज्ञानाय चैतदन्तशास्त्राध्ययने यस्मिन्नेतत्प्रकाराख्यानम् ; तत्र तन्माता पिता च प्रवर्तयति । अस्य

च द्विजादिकार्यत्वात्तन्मातापितरावपि तथैवेच्छतः ; इत्यपेक्षया तु स्वबालं तत्राभिनिवेशयेते । तज्ज्ञानारंभजन्योत्साहश्च भवति । तत्र च विघ्नपरिशान्त्यर्थमुपवीतसंस्कारं कृत्वा, संस्कृतश्च गृहान्निर्गमय्याचार्येण सहाभिनिवेशयते । तस्मै ददाति चेत्थमाज्ञाम्—गच्छ, प्रह्वतत्वमभिज्ञाय, अहमेतन्नेति च पूर्णं ज्ञात्वा, अहमिदमेतादिदम्, अहमेतदोः, इदं नेदं नैतदोः, नाहमोः, नाहमेतदोश्च योगं विज्ञाय ; अहमेतन्नेत्येतद्रूपसाधने प्रवृत्तो भवेति । एवं सत्संस्कारेण संसाराकुलो भूत्वा—एतत्किमस्ति, एतदेव सर्वथा मान्यं भवति, कथमेतादृशे दुःखेप्येतत्करणे प्रवृत्तिः, इत्यादि पर्यालोच्य विषीदति । सत्यपि च तस्मिन्विषादे योह्येतन्मात्रं जानाति, स स्वयमाचार्यत्वेन तं शिक्षति । एष एव हि संसारः । एतदर्थश्चावश्यकोऽयमेतत्परमपीत्यारभ्य अहमम्, एतदम्, नकारस्वरूपम्, तद्विवर्तनपरिवर्तनयोगं चाधिगच्छ ; इत्यादिकञ्च बोधयति स्वसदाचार्यः । इदमेव चोपनयनं भवति । एतत्संसारमात्रस्याहमेतन्नविशिष्टस्य च नियन्ता चाचार्यो भवति, यो हि नित्यं प्रेरयति । “ अहमित्यस्याचार्यो ह्यर्थो भवति । पृथक्च ह्येतादित्यस्याचार्यो भवति, पृथक्चनेत्यस्य एवमहमेतन्नेति विशिष्टस्य तद्योगस्य च ” इत्यादिसंसारप्रकारतया ह्याचार्याणामपि चानेकभेदः । तादृशेन नियमेन संस्कारमात्रं सर्वपुरुषस्य

यथायोग्यं भवति । तन्नियन्ता चाचार्यः कारयति । यस्य यस्य च यन्नियतम्, स तत्तत्प्रवर्तयतीति नियमेन हि सर्वं बोध्यं भवति । तस्मादुपनयनसंस्कारार्थमपि सद्गुरुर्भवति, यश्च यथावत्संसारादिकमहमेतन्नोति मात्रं ज्ञापयति ।

तत्र गायत्र्यादीनामप्यवधारणीयत्वेनोपदेशः । अत एव "एषा च गायत्री पूर्वमवधेया प्रणवप्रतिष्ठिता" इत्यादि प्रवचनम् । अतश्चैवमुपदिश्य वेदं पाठयति । एवमेव च "एतत्प्रकारविस्तारमीदृशमेषा क्रिया चैतज्ज्ञानमेतदिच्छा समाहारश्चायमेतदेकत्वमहमेतन्नेति योगं ब्रह्मतत्वमिदं ब्रह्मेदम्" इत्यादि प्रवप्रवचनं बोधयति । तदेव च सद्ब्रह्मचर्यं भवति । अत्रैवमपि शिक्षयन्ति—शब्दे चैतादृशी शक्तिरस्ति, एतादृगुच्चारणेनैवं भवति, एतादृशश्च शब्दक्रमारोपणे ह्ययं विकारः, एतादृशारोपणे ह्ययमुपलभ्यते, अनेन कारणेनैतयोर्योगः, अनेन चैतद्वियोगः, योगवियोगयोः फलं मूलञ्च, एतदिदानीं योक्तव्यं वियोक्तव्यञ्च, इत्यादिकर्तव्याकर्तव्यविषयं सर्वमपि ज्ञापयति । एतदनुकरणञ्चात्रासत्स्वपि वर्तते । यथावद्गायत्रीं प्रणवसहितां पूर्वं पाठयति । ततः प्रणवार्थः गायत्र्यर्थश्च द्रष्टव्यः । अत्रायं भेदः । एवं ह्युपवीताचार्यः पाठयति—एतज्जपं कुरु, जपस्तु सार्थकपदस्मरणम्, इदमित्थमेवास्ति, आसीदित्यपि, भवि-

ष्यत्यप्येवम्, इति । एवमेतस्यापि प्रातः सायं मध्याह्ने च त्रितयक्रमेण नियमः । प्रातरुत्थाय पूर्वं प्रणवसहितां गायत्रीमभिध्यायेत् । पुनः प्रणवगायत्र्यवधारणतया मूलाभिनियमेन पठने प्रवृत्तिः । तत्रैतत्प्रकाराणां यथाबोधमङ्गान्यध्येतव्यानि भवन्ति । पुनश्च तस्मिन्काले यदिदमधीतम्, तन्मूलं प्रणवगायत्र्येवेति परिभावनायै मध्याह्ने तत्स्मरणं भवति । पुनश्च तत्पठनं यथायोग्यङ्कर्तुमुचितं भवति । पुनश्च सायं प्राप्य यदिदमधीतम्, तन्मूलं सप्रणवगायत्र्येवेति विज्ञेयम् ।

एवं हि सन्ध्याविधिः । सप्रणवगायत्र्याः सर्वमूलत्वेन सर्वथा सर्वदा सन्ध्याकर्मोमयुक्तं भवति । यत्कृतं मया, तन्मूलं किमस्तीति परिशोधनाय सन्ध्याकरणम् । सम्यग्ध्यायति सर्वानिति सन्ध्या भवति । ध्यानन्तावन्मूलपरम् । सर्वन्तावज्ज्ञानपरमिति व्याख्यानात्स्वज्ञानमात्रं गायत्र्या वेदितव्यं भवति । प्रातर्मध्याह्नसायञ्च तावत्तादृशः कालत्रयपरो बोध्यः । आत्मानात्मा निषिद्धस्थश्च कालत्रयं वेदितव्यम् । आत्मा तु प्रातःकालरूपो ह्यकारनिष्ठः । तत्राहमेतन्मात्रं स्वच्छत्वं नवीनं सर्वज्ञानरहित भवति । अत एव प्रभातिस्य परमशोभाप्युक्ता भवति । योह्यात्मा सर्वतोऽपरिच्छिन्नस्स एव प्रभा भवति । प्रभैवास्ति स्वयमत्रेति प्रभातः । प्रकर्षेण स्वयत्नेन स्वयं भातीति हि तदर्थः । पश्चा-

न्मध्याह्नकालस्तावत्संसारपरः । आत्माचानात्मान्तर्गतः । तस्मा-न्मध्याह्नो ह्युकारनिष्ठः क्रियापरः सर्वज्ञानसहितो बोध्यः । सायंकालश्च निषिद्धपरो ह्यात्मानात्मक्रियायाः विरामरूपो मकार-निष्ठः । तदेव महमेतन्नेति परा त्रिसन्ध्या समभिधीयते । साय-मूर्ध्वं हि रात्रिः । तत्र प्रळयक्रिया नकारपरा नैतदहमेतद्घटयित्री च बोध्या भवति । एवमहमेतन्नेत्यस्य विवर्तनपरिवर्तनयोरनाद्य-नन्तत्वात्सन्ध्याया अपि तादृशस्वरूपत्वमुक्तं भवति । एतत्सन्ध्या-धिकार्यप्युपनीत एवेति विज्ञेयम् । उपनीतानामेव हि ब्रह्मतत्व-परिभावना भवति । तत्परिभावनैव हि सन्ध्येत्यभिधीयते । तस्याः कालेन सह योजना भवति । अहमेतन्नेति तु ज्ञानेच्छा-क्रियारूपं हि भवति । समाहारश्च तावत्समाधिः । तस्मादेत-ज्ज्ञानेच्छाक्रियापरिज्ञाननियमेन ह्युपनीतानामेव संध्यात्रयेऽधिकारो भवति । अत एव हि "सात्विकी राजसी चैव तामसी" इति सन्ध्याप्यभिधीयते । सात्विकी ज्ञानपरा, राजसी क्रियापरा, तामसी त्विच्छापरा निषिद्धरूपा । सन्याया अपि प्रत्येकं ह्येव-न्नियमेन तस्याः त्रैविध्यमुक्तं भवति । अत एव

"उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
जघन्या सूर्यसहिता प्रातस्सन्ध्या त्रिधा स्मृता ॥
एवं हि दिनमानेन मध्याह्नस्त्रिविधः स्मृतः ।

पूर्वाह्णो ह्यपराह्णश्च मध्याह्नश्चेतिहि क्रमः ॥
उत्तमा भास्करोपेता मध्यमा लुप्तभास्करा ।
अधमा तारकोपेता सायंसन्ध्या त्रिधा स्मृता ॥ ”

इत्यादि प्रवचनम् , अस्यार्थोऽपि च, तादृशज्ञानेच्छाक्रियानुसारेण बोध्यः । तारकोपेता हि प्रभाभवनमात्रस्थितिः । तारकायां विनष्टायां प्रभायाः पूर्णत्वं भवति । पूर्णप्रभायान्तु संसारस्याभियोगात्तत्प्राप्नोति । अहमः स्वच्छन्नत्वं केवलप्रकाशरूपत्वञ्च नानुभासते । अत एव तारकोपेता बालप्रभा सन्ध्याचोत्तमा पूर्णज्ञाननिष्ठा भवति । मध्यमा हि लुप्ततारका, केवलप्रकाररूपा प्रभा भवति । तत्र पशुपक्ष्यादीनां सर्वेषां सर्वसंसारकार्याणाञ्चारंभावशेषः । सूर्यसहिता या सा तु सन्ध्या संसारस्था निषिद्धपरा बोध्या भवति । प्रभायास्तु तत्र विनाश्यत्वम् , उष्णादिव्यापारतया तमः प्रकाशयुक्तत्वमेव भवति । एवं मध्याह्नेऽपि क्रियायाः बालत्वं तादृशं बोध्यम् । क्रियायाः कारणमात्रं तावदारंभाद्युपयुक्तं भवति । आरंभे सत्यपि तावन्मध्यमत्वम् । कार्यकारणव्यापारकालतया निषिद्धत्वं बोध्यम् । सायं सन्ध्या तावद्भास्करोपेता ज्ञाननिष्ठा समाप्तिकाललक्षणा च भवति । भास्कराभावेऽपि प्रभा क्रिया भवति । किञ्च प्रळयस्य समाहाररूपत्वं भवति । पुनस्तारकोपेता

तावत्प्रळयात्मिकी, निषिद्धाचभवति । एवंक्रमेणसंध्यात्रयास्य परिवर्तनं भवति । अहमेतन्नोति नियमेन प्रणवस्थेन च रात्रावपि तादृशत्रितयव्यवहारः । रात्रेश्चापि सात्विकी राजसीतामसी ज्ञान-क्रियेच्छारूपेति च व्यवहारः । एवं क्रमेण हि दिवा रात्र्यनुवर्तनं सर्वभूतानां भवतीति विज्ञेयम् । दिवारात्रिस्सन्ध्याचेति त्रितयसत्तापि दृश्यते । अत एव

"प्रातस्सन्ध्या ह्यकारस्था ह्यहमा चैव संयुता ।
ज्ञानरूपा परा प्रोक्ता चात्मानन्तत्ववाचिका ॥
उकारस्थश्च मध्याह्नश्चैतदा हि समन्वितः ।
क्रियापरायणी सन्ध्या चैषा माध्याह्निकी मता ॥
सायंसन्ध्या मकारस्था प्रळयान्तप्रवाचिका ।
ओमित्यन्तर्गता सन्ध्या त्रिविधा पर्युपासिता ॥
प्रातस्तु सात्विकी सन्ध्या मध्याह्ने राजसी मता ।
सायंसन्ध्या नकारस्था तामसी प्रळयात्मिका ॥
अहमेतन्न संयुक्ता चोमित्यन्तर्गता मता ।
कालातीतोह्यनन्तत्वात्सर्वदैवं विधिर्वृतः ॥
रात्रावपि क्रियास्सर्वाः कालोऽयं त्रितयात्मकः ।
सात्विकी राजसी चैषा तामसी ब्रह्मसंज्ञका ॥
दिवा रात्रिस्तथा सन्ध्या त्रितयं चैव तत्र हि ।

सर्वं तत्संविधानेन ज्ञातव्यं प्रणवात्मकम् ॥
अकारोकारमकारस्थं ज्ञानेच्छाक्रियापरम् ।
ब्रह्मप्रकल्पकत्वेन चाधिकारो विधीयते ॥
सर्वेषामुपनीतानां ब्रह्मकार्यानुवर्तिनाम् ।
एतदावश्यकं विद्याधिकारो भवेत्ततः ॥
शूद्राणां सेवा धर्मस्याद्ब्राह्मभूतानुकल्पनम् ।
अन्तर्मुखप्रभूतानां ब्रह्मज्ञानं प्रयोजनम् ॥
एतत्प्रयोजनेनैवं सम्यग्ध्यानं तदुच्यते ।
ध्यात्वा कृत्वा यथाशक्ति ब्रह्मतामधिगच्छति ॥
यादृशं विद्यते ध्यानं तादृशं लभते सदा ।
ध्यानं ब्रह्म स्वयं ब्रह्म ध्येयं ब्रह्मेति भावनात् ॥ ''

इत्यादि प्रवचनम् । तस्मात्सर्वभूतानां न संध्याधिकारः, किन्तु पनीता द्विजानामेवेत्युपदेशफलं भवति । अस्यास्सन्ध्यायाः कर णस्य तावद्ब्रह्मभावनं तत्प्राप्तिहेतुत्वं वेति व्याख्यानफलं भवति तस्मात् ''त्रिसन्ध्यामुपासमानो ब्रह्मत्वमधिगच्छति'' इतिवचनम् एवमेव

'' पूर्वां सन्ध्याञ्च नोपास्ते नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥

इत्यादि प्रवचनम् । अत्र सन्ध्यायाश्चाकरणे दोषो निरूपितः

अस्यार्थस्तु, यो हि सन्ध्यां पूर्वां ज्ञानावस्थितां नोपास्ते, न च पश्चिमाम्; तस्यैवमवस्था ज्ञातव्या भवति । नायं ब्रह्मभावे प्रवृत्तो भवेत्, न चास्यान्तर्मुखत्वम्; किन्तु केवलमुपवीतधारणमात्रेणैव द्विजत्वमस्य व्यवस्थितं भवति । अत एव "सर्वस्मात्साति द्विजत्वेऽपि द्विजकर्मणा बहिष्करणम्" इत्युक्तम् । यद्यपि जननादिकन्तावद्विजत्वप्रयुक्तम्, तथापि तद्विजत्वधर्मारोपणन्नतत्रेति नियमात्ततो बहिर्भवतीति विज्ञेयम् । अन्तर्भूतानामेव बहिर्भवनं युक्तम्, "अन्तर्भूतो बहिर्भवति" इत्यादिप्रवचनात् । तस्माद्विजत्वाच्छूद्रे पातित्यं व्याख्यातं भवति ।

अत्र सन्ध्यायास्तावदाचमनं प्राणायामः मुद्रादिकञ्च समुपन्यस्तं भवति । आचमनं हि तज्जलेन ब्रह्मत्वे पर्यभिनिवेशनम् । शुध्यर्थमिदं भवति । शुद्धिवाच्यतया तदाचमनाभिमन्त्रणप्रयोजनं भवति । मन्त्रेऽपि शब्दशक्तेर्विद्यमानत्वेन, तया संशोध्य तत्पानञ्च हृदयशुध्यर्थं व्यवस्थितं भवति । शब्दशक्तिस्तु सर्वतः प्रधाना भवति । अतस्तयाभिमन्त्रणं समुचितं भवति । अन्यथा मन्त्रं विना नाचमनमुपयुक्तं भवेत् । तत्रैवं प्राणायामोऽपि तादृशत्रितयात्मकः, कुंभकरेचकपूरकरूपइति व्याख्यातम् । त्रिभिरेतैश्च संसारो भासते । प्रतिक्षणमणूनां प्रत्येकमपि चैवं भासते । तादृशं ब्रह्म वेदितव्यमिति तत्फलं भवति । मुद्रा हि परस्परयो-

गश्चैकेनैकजातं वदति । एवं हि किल ज्ञायते—जनको जाते लुप्तः, पुनस्तेनान्यो जातः, स च तत्र लुप्तः इति । एवमनन्तानन्तं परस्परयोगमयं सृष्टिमात्रं वेदितव्यम् । येन कारणेन चतुर्विंशति-वर्णात्मिका गायत्री, चतुर्विंशत्प्रकारबोधिका, तत्पूर्वाख्यानतया तादृशचतुर्विंशतिमुद्रां परस्परप्रकारयोगसंवृतां वेदयित्री भवति । तद्विधानेन मुद्राकारणं हि संसारस्यैतादृशव्यवस्थारूपं भवति । एवमेव सर्वमस्तीति मनसा सम्यगवधार्य तादृशं सर्वयोगरूप-मैक्यं कर्तुमुचितं भवति । तत्स्वरूपं हि—इदमेव भाव्यमतोऽ हमप्येवमिति । अहमहमित्येका मुद्रा एतदेतदित्येका मुद्रा, अह-महमेतदित्येका मुद्रा, एतदेतदहमित्येका च भवति । एवमेतदे-तन्न, न नेत्येतत् , नैतदहम् , चेत्यादिक्रमेण चतुर्विंशतिप्रकारप-रिज्ञानं भवति । तदेकत्वञ्च वास्तवनिष्ठम् , मुद्रानुपयुक्तञ्चेति बोध्यम् । एवमपवित्रं पवित्रञ्च न किञ्चिदस्ति । न पापन्नपु-ण्यम् , सर्वमावश्यकं, सर्वपरम् , अवस्थानवस्थे, विधेयमवि-धेयमित्याद्यवधारणमेव मानसं स्नानं भवति । सर्वमेकरूपं ज्ञात्वा स्वयं शुद्धात्मा ब्रह्म संपद्यते, इति तदर्थो विज्ञेयः । तस्यैवानु-करणं तादृशेन मन्त्रेण, येन चैतद्विचारः । अतः स्नानमुक्तं भवति ।

एवं हि विधिस्सन्ध्याया भवति । प्रथमं हि चैकान्ते देशे, चैकासने समुपविश्य शाब्दत एवं परिचिन्तनीयम्—किङ्कर्त-

व्यम् , ब्रह्म किमस्ति, कोऽहम् , किमेतत् , कस्संबन्धश्च इत्यादि । एवं प्रश्नोत्पन्नस्योत्तरमन्त्रं पठितव्यम् ; तदेव ध्यानं भवति । ततः सर्वे सर्वशुध्यर्थं मन्त्रेणाभिमंत्र्य जलं प्रोक्षयेत् । तेनापि विभज्यस्य चैक्यं सूच्यते । तत्रैवं त्रितयमेकरूपं विज्ञाय तदावश्यकञ्च ज्ञातुमुचितं भवति। ततश्चाहमिति बुध्या सङ्कल्पङ्कुर्यात् । ततो बहिरिति प्रतिभासः । यदेतद्ब्रह्म, तदहमित्यनुकरणम् । ततः पुनराचमनं तादृशं शुद्धानुभावनं भवति । ततो नियमेन प्राणायामः। व्याहृतित्रयसहिता गायत्री प्रणवावधारणीया भवति। कृतेऽपि यदिचेच्छक्त्याधिक्यम् , तेन पुनस्सप्तव्याहृतिसहिता सप्रणवा च गायत्री सर्वमकारमयी सर्वाश्रयाश्रयभूता धारणीया भवति । धारणा च तस्यास्तादृशाचारकरणमित्युपदेशः । तत्र तावत्प्रकाराणां सर्वयोगवियोगव्यवस्थापरिज्ञानरूपा मुद्रा भवति। तस्याञ्च मुद्रायामैक्यं हि लक्ष्यार्थः भवति। मानसस्नानञ्चेत्यादिविधिना पुनर्गायत्रीमभिजपेत् । तदर्थानुसंधानम् , तादृशश्चाचारः कर्तुमुचितं भवति । अत एव "तज्जपस्तदर्थभवनम्" इति सूत्रम् , " आचारार्थमर्थभवनमिति सूत्राच्च । तस्मात्तादृशी सन्ध्या सर्वाभिरूपा सर्वाश्रयकर्त्री तन्नियमेन ज्ञातव्या भवति । तस्याञ्च ह्युपनीतानामेवाधिकारः । अत एव "अहरहस्सन्ध्यामुपासीत" इति श्रुतिः । एवेमव

" त्रिकालमाचरेत्सन्ध्यां सर्वसिद्धान्तवाचिकाम् ।
प्राप्यते परमं तत्त्वं सत्यं प्रणवगोचरम् ॥
अकारोकारमकारस्थं त्रयं सर्वसंज्ञकम् ।
त्रिकालानुष्ठितं नित्यं साक्षाद्ब्रह्मस्वरूपवत् ॥
एतदेतत्कृतं नित्यं ब्रह्मत्वपरिसर्जनम् ।
संसर्गात्सर्वसिद्धोऽयं तादृशस्तत्त्ववित्परः ॥
स्वयन्तु त्वं स्वयं ब्रह्म सन्ध्या चैव स्वयं स्वयम् ।
प्रणवात्मस्वयं विद्धि स्वात्मना त्वं हि सर्वथा ॥
ओमित्येकाक्षरो मन्त्रः सर्वगस्सर्वसंस्थितः ।
यश्चतं ध्यायते नित्यं सद्विजादधिको भवेत् ॥
तस्माद्वैश्यः क्षत्रियश्च ब्राह्मणस्सदसद्विधः ।
वर्णत्रयात्मकमिदं तत्त्वं ब्रह्मपरायणम् ॥
जपेदेवं त्रिकालं हि सर्वेभ्यो ह्यधिको भवेत् ॥"

इत्यादि प्रवचनम् । तस्मात्तदुपनीतानामेव सन्ध्यायामधिकारः । तादृशेनैव ब्रह्म विज्ञेयं भवति । एवं संस्कृतेन हि साङ्गोपाङ्गवेदोपवेदादिकं सर्वमध्येयं भवति । ज्ञात्वा च परमं तत्वं परंपरागतम्, सर्वाधिभूतं स्वकार्यम्, ब्रह्मकार्यञ्च साधयन्नथ कार्यान्तरपरो भवितुमर्हति ।

अथोद्वाहसंस्कारः । तत्र च भेदद्वयम् । प्रथमश्च संस्का-

रक्रमे नवमः स्नातकव्रतरूपः, द्वितीयश्चोद्वाहरूपः क्रमे च दशमः । स्नातकव्रतन्तावद्ब्रह्मचर्यसमाप्तिरूपम् । पूर्णे च ब्रह्मचर्ये ब्रह्मतत्वज्ञाने ब्रह्मभवनेच्छा भवति । ब्रह्मणश्च यद्यत्कार्यम्, तत्करणापेक्षैव स्नातकव्रतं भवति । तत्र चैवं भवति—अनेन प्राकारेण ब्रह्मतत्वसाधनं भवति, अयमेव तस्य सद्भावः, केन प्रकारेण चैतद्भवति , एतदाचाहमस्संबन्धफलम् , संबन्धप्रकारश्चावधारणीयः इति तस्यैवानुकरणम्। असत्स्नातकव्रतके कन्यावलोकनं हि—इत्थंभूतयाऽनयास्मिन्कुले निर्दोषे दोषं परिहृत्य वा दोषादोषयुक्तेऽदोषे केवले दोषसहिते च विवाहौचित्यम् , अनया सहेत्थंभूतया कृते ह्युद्वाहे सति चैवं फलं भवितुमर्हतीति विचाररूपम् । ततोद्वाहसंस्कारः । उद्वाहः कर्तव्यस्सर्वेषाम् । पूर्णे हि प्रगल्भवीर्ये , कामप्रेरणया स्ववयोन्यूनामुद्वहेत् । अत्र च ब्रह्मणः क्रिया परिसाधनीया । बहुस्यामिति संकल्पानुगुणं जातपूर्णोत्साहः भवति , तस्य ब्रह्मज्ञानसंयुक्तत्वात् । स्त्रीपुरुषयोरैक्यव्यवहारश्च , समानव्यसनशीलत्वतदैकमत्याभ्यां भवति । तत्र स्वयमहंरूपश्चात्माकारनिष्ठः । सा चैतद्रूपानात्माह्युकारनिष्ठा भवति । तयोरैक्यं हि समानशीलव्यसनत्वरूपम् , सामानाधिकरणम् , नकारात्मकम् , मकारनिष्ठं बोध्यम् । एवं क्रमेण ह्युद्वाहसंस्कारः क्रियाप्रधानो मुख्यश्च भवति ।

तदेवं सत्संस्कारोऽपि बोध्यः । अहमेतद्योगरूपौ प्रकृतिपुरुषौ , आत्मानात्मानौ व्याख्यातौ । यद्यप्यात्मानात्मनोरभेदः, तथापि कार्यव्यवसायेन तद्विधानम् । तस्य चानुकरणमेवेदं सर्वं भवति । कन्यापुरुषयोरपि ब्रह्मचर्यं पूर्वसाम्याद्द्रष्टव्यं भवति । ब्रह्मचारिणामुद्वाहस्तु , ब्रह्मचारिणीभिस्सह प्रशस्तो भवति । साति च द्वयोर्ब्रह्मज्ञाने, न हर्षशोकौ नापि चानियतकाले विकारोत्पत्तिर्न च रोगादिभवनम् । अतः स्वच्छन्नं सर्वनिरस्तं समस्तयुतं सर्वमेकमयं ज्ञात्वा गृहाश्रमं स्वीकरोतीति सिद्धान्तः । ब्रह्मचर्यमन्तरा ह्युद्वाहसंस्कारकरणे दुःखमेव भवेदिति प्रशस्तं भवति वेदोपवेदादिज्ञानेन सर्वेषां विकाराणां परिहारो भवेत् । यथ चास्मिन्संसारे स्वयमेव रोगः , स्वयमेव चौषधादिकम् , तथ सर्वदा जननञ्च भवति । तथा च रूपान्तरं प्रळयस्सर्जन शयनं जागरः, दिवा रात्रिश्चेत्येतेषां ज्ञानं भवति । न हि तेन कर्तुस्सुखदुःखे , न च हर्षशोकौ , नापि च तत्र काचित्परिभावना; किन्तु सर्वकाले सर्वदेशे च करणव्यापारएवेति विज्ञेयम् एवमेव ब्रह्मतत्त्वज्ञाने च गृहाश्रमधारणम् , न तेषां सुखदुःखादि परिज्ञानम् ; किन्तु सर्वानन्दमयं सच्चित्स्वरूपमेवेति बोध्यम् अत एव

" ज्ञात्वा ब्रह्म यथायोग्यं सर्वाश्रयफलावृतम् ।

स स्नातकव्रतं कृत्वा कन्यां ज्ञात्वा यथामति ॥
संबन्धं तत्प्रयोगार्हं स्वस्यैवं परिकल्पयेत् ।
अकारोकारविधिना ज्ञात्वा कन्यां समुद्वहेत् ॥
तस्मद्गृहाश्रमे धर्मे सच्चिदानन्दसंस्थितिः ।
एतत्त्रयाद्यत्भिन्नमेकैकप्रतिभासनम् ।
तदेव पापं तद्दुःखं तस्मादेवं विधिर्वृतः ।
ब्रह्मतत्त्वपरिज्ञाने चोद्वाहस्सुखदायकः ॥
आत्मा नात्माभियोगेन कर्तव्या ह्युचिता क्रिया ।
विद्ध्योङ्कारमयं सर्वमात्मा नात्मपरायणम् ॥
तद्विवाहव्रतं धृत्वा क्रियतां ब्रह्मसाधनम् ।
ब्रह्मज्ञानं विना त्वेवं नैवैषा नैष्ठिकी क्रिया ॥
अतस्सम्यक्परिज्ञेयो विवाहस्स्यात्परस्परम् ।"

इत्यादि प्रवचनम् । अस्मादेव हेतोर्जात्यादिपरिभावनाप्येवं भवति—ईदृशी हि मदीया व्यक्तिः, एतत्प्रकृतियुतोऽहम्, एतत्प्रकृतिकं वीर्यं मयि, अस्मत्कुलोत्पन्नाना हि चैषा रीतिः, अयञ्चविचारः, कार्यञ्चेदम्, इति । सति चैतेषामानुकूल्ये कन्याया ह्युद्वाहौचित्यं भवति । अकृते चैतादृशविचारे प्रकृते-र्विरोधः, परस्परमप्रीतिश्च भवेत् । किञ्च दोषाश्चाप्यनेके भवन्ति । तस्मात्—यादृशो यः, स्वयं यत्प्रकृतिकः, यादृशनियमाचा-

रवान्, यादृशकर्मकारी, तादृशीमेव कन्यां स्वयमेवं विचार्य समुद्वहेत् । अस्यैव हि ज्योतिश्शास्त्रे गणनादिना व्यवहारः । द्वयोर्नाम्ना, तज्जन्मकालेन, तल्लग्नाद्युपभावनया, राश्यादिव्यवहारेण च तयोः प्रकृतेस्स्वभावनिर्णयस्समुचितो भवति । किञ्च—अस्य चैषा प्रकृतिः, एवं व्यवहारः, कन्यायाश्चैवं प्रकृतिरेवं व्यवहारः, अनेनानेन संबन्धो भवति वा न भवति इत्यादिपरिभावना हि विवाहविचारो भवति । एवं कुलपरिज्ञानाय वृद्धादीनामेवं सम्मतिग्रहणम्,—एतदुत्पत्तिपरंपरा चैतादृशी, अत्र चैवं कार्यं भवति, अयमेवात्र सनातनो धर्मः इत्यादीतिहासेन तद्वृद्धानुमतिर्बोध्या भवति । किञ्च ततस्तयोर्वैद्येन शरीरधर्मपरीक्षा चैवं कार्या भवति—कफप्रकृतिकोऽयम्, वातप्रकृतिकोऽयम्, पैत्तिकोऽयं वा, इत्यादि । तस्मादनयोर्वीर्यादिप्रकारश्च कीदृशः, वृत्तिश्च कीदृशी इत्यादिविचारेण निश्चयं कृत्वा ह्युद्वाहः कार्यो भवति ।

अथ च पुनस्तयोः कामशास्त्राभ्यसनेन प्रागल्भ्यमपि विज्ञेयम् । तथा नीतिशास्त्रेणावस्थाविचारोऽपि कर्तव्यः, अवस्थाव्यतिक्रमे हि क्लीबत्वाद्यनेकदोषाणां संभवात् । पुनरेवङ्कलापशास्त्रेण तयोर्व्यापारस्य चैक्यमपि विज्ञेयं भवति, व्यापारभिन्ने ह्यतिमात्रप्रीतेरसंभवात् । एवं सर्वव्यवहारं यथायोग्यं

विचार्य तदुद्वाहसंस्कारः प्रतिष्ठितो भवतीति विज्ञेयम् । अत एव "सर्वशास्त्राभिमर्शनेनोद्वाहयेत्" इत्याद्युपदेशः ।

उद्वाहानन्तरञ्च नारीणा पुरुषपरिचयोऽभिलक्ष्यते । तत्त-द्वयोर्वृत्त्या हि द्वयोरेककालिकप्रसङ्गजन्योत्साहः परिवर्द्धते । तत्र च तयोः केवलं परस्परं ज्ञानमात्रस्य परिचयो भवति । ज्ञानेच्छा-क्रियासमाहारांशे, यादृशं यादृशञ्च तयोर्ज्ञानानुसन्धानम् ; तन्नि-श्चयरूप एव वधूप्रवेशश्चैकादशस्संस्कारः । वधूनां हि स्वव्या-पारादिभिर्ज्ञानक्रियेच्छासमाहारप्रकाशौचित्यं विद्यते । वधूवरयोः पित्रोः, तथान्यसंबन्धिनाञ्च प्रसादो हि ; तादृशनियततात्प-र्येण तद्धर्मो भवति । सर्वोऽप्ययं गुणप्रकाश एव । संसारमात्रे चास्मिन्गुणप्रकाशस्सर्वद्रव्याश्रयीभूतो दृश्यते । एवमत्रापि विज्ञेयं भवति । तत्र सत्संस्कारो वधूप्रवेशस्तावदहमेतन्नेत्यस्य संपूर्ण-ज्ञानम्, यथायोग्यं परिवर्तनञ्च भवति । तथा ज्ञात्वा सन्मार्गे प्रवेश इति तदर्थो विज्ञेयः । सन्मार्गप्रवेशो ह्यहमेतन्नेत्यर्थानुसा-रेणाचरणमेव भवति । अत एव

> "अहमेतन्नकारैश्च मन्तव्यस्सर्वनिश्चयः ।
> निदिध्यासनं नियतं क्रियाकार्यगुणावृता ॥"

इत्यादि प्रवचनम् । अस्यैवानुकरणमिति वधूप्रवेशोऽयं व्यव-स्थीयते ।

अथ च पुनर्द्वादशः द्विरागमनसंस्कारः । स च, द्विवारमागमनमिति व्युत्पत्त्या विवाहानन्तरं पितृगेहात्पतिगृहे वध्वाः पुनरागमनरूपः । अत्रेदमवधेयम् , वधूप्रवेशानन्तरं पुनर्नार्यः पितृगेहे मात्रा सह क्रियाशास्त्रं कामशास्त्रञ्चाधीत्य हि पूर्णाः क्रियानिष्ठाः भूत्वा, पुनः पतिगृहमागच्छान्ति; अयमेव पुनर्द्विरागमनसंस्कार इति । पतिगृहमागत्य पुरुषस्य , यथावगतकालं भोगप्रसङ्गे सहचरी भवति । तस्याः नियतकालं तद्भोगकरणौचित्यम् , पुनस्तयोः परस्परप्रीतेरुद्वर्द्धनम् , सर्वं ब्रह्मेति दृष्टया दर्शनम् , सहानुवर्तिनां संबन्धिनां गोत्रजानां वधूनां भ्रातॄणां यथावत्सेवनम् , ब्रह्मप्रभासकरणञ्च परमो धर्मो भवति ।

एवं सद्विरागमनन्तावत्पुनर्जन्माविधिज्ञानम् । येन येन प्रकारेण मानवो म्रियते , पुनर्जाते , पुनः पुनर्दिवा रात्रिश्च भवति , सृष्टिः प्रळयश्चानन्तक्रमः , भावोऽभावश्च दृश्यते , एवमन्येषाञ्च सर्वप्रकारबीजज्ञानञ्च द्विरागमनसंस्काररूपं भवति । दृश्यतामिह लोके द्विरागमनमेव सर्वत्र प्रकाशते । यद्यपि चागमनेऽपि बहुत्वमस्ति , तथापि द्विरित्यस्य भूयस्त्वमर्थः । अत एव

" तद्विरागमनं सर्वं संसारे च द्विधा क्रिया ।
गमनागमने नित्ये तदोङ्कारेण वेष्टितम् ॥

विद्धयन्तर्मुखं गमनमात्मानं सर्ववानिति ।
आगमनं जगत्सर्वं तयोर्भिन्नं न किञ्चन ॥
गतागतप्रयोगेण शब्दादिप्रतिभासनम् ।
अन्यथा नैव तद्वक्ता नैव वाच्यं न वाचकम् ॥"

इत्यादि प्रवचनम् । तस्मात्साद्विरागमनसंस्कारश्चेत्थंभूतः—एतदहम्, अहमेतदित्येतद्रूपः। यदहं तद्गमनम्, यदेतत्तदागमनम्, एतदनुकरणमिदं लोकप्रसिद्धं द्विरागमनम् । अत एव द्विरागमनमुहूर्ते शुक्रविचारोक्तिः ।

शुक्रस्तावद्वीर्यं भवति । तदधिपतिग्रहोऽपि शुक्रः । शुक्रविचारे प्रयोजनं हि वीर्यपुष्टिरेवेति विज्ञेयम् । सत्याञ्च ज्ञानपुष्टौ यथावयो वीर्यपुष्टिर्भवति । द्वयोर्वीर्यप्रागल्भ्यात्सृष्टिकार्यक्रियानुवर्तनं भवति । तच्छुक्रोऽप्येवम् । यश्चाहमो योगस्सएव ज्ञानं भवति । तेनैव स्मरणादिकं तदेव वीर्यमिति विज्ञेयम्। एतत्संसारस्य वीर्यं हि स्मरणादिकमेव। एवम्—अस्मत्पितृकृतम्, मया कृतम्, तेन चेदं भवति, अभूद्वा पुन, एवं कृते सत्येवं भविष्यति, अयमप्येवं करोति, त्वमपि करोषि कुरु वा, अहमपि करोमि करिष्यामि चेत्यादिस्मरणव्यापारतया विस्मृतिस्मृतिरनुस्मृतिनियमेन सृष्टिसाधनमस्तीति लोकोदाहरणेन बोध्यं भवति । यस्य चैवमेकस्मिन्काले स्मरणम्—इदमित्थमभूत्,

एतत्कृतेन, अहमप्येवं करिष्यामीति । एवं संकल्प्य, तेन करण-व्यापारस्य सर्वत्र विद्यमानतया च कार्यानुसाधनं भवति । तस्माद्विरागमनसंस्कारोऽप्यावश्यको भवति । वीर्याद्युपदर्शनेन तत्करणं भवति ।

तदनन्तरं प्रसूतसंस्कारस्त्रयोदशः । यदा हि ऋतुकाला-भिगमनेन चेत्प्रथमगर्भसंस्थितिः, तदा च कार्यारंभबहुत्वप्रक-ल्पनजन्योत्साहः प्रभवति । गर्भाभिनिवेशनेन हि तन्महतां गर्भ-कालत्वेन, तावन्नियतमन्त्रेण शब्दशक्तितया तत्प्रतिष्ठाकरणरूपः प्रसूतसंस्कार इति विज्ञेयम् । यद्यपि प्रसूतसंस्कारः प्रतिगर्भ-मपि व्यवस्थितः, तथापि मुख्यत्वेन तस्य विशेषतया संस्कार-त्वोक्तिः, । एवं तत्संस्कारे चाहमो ह्येतदन्तर्गतत्वं समीयते । यदिदमहन्तन्नकिञ्चित्, अहमित्येतच्छब्दोऽपि च न भवति, किन्तु सर्वमेतदन्तर्गतं भवति । अत एव

> " एतदञ्चैतदं ह्येतमेनमेतमनुष्ठितम् ।
> एतदेतत्क्रियास्सर्वाः ह्येतदेतस्य मूलकम् ॥
> एतदेतदि निष्ठं स्यादेतदेताद्धि भासते ।
> एतदेतत्परं तत्त्वमेतदेव सनातनम् ॥"

इत्यादि प्रवचनम् । तस्मादेतदित्येकज्ञानमात्रत्वेन बहुभेदप्रपञ्च-रूप एव प्रसूतसंस्कारो भवति । प्रकर्षेण स्वयत्नेन सूयते इति

प्रसूतशब्दार्थः। अत्र च फलं ह्येतन्मात्रबोधरूपं भवति । एतस्यैवानुकरणं प्रसवनमिति प्रतीयते ।

एवं प्रसवसंस्कारोऽयमपि भवति, यादृशं हि सर्वैरभिधानं भवति । प्रथमगर्भावधारणं हि बहुत्वसिद्धेः फलं भवति । अत एव तत्रापि मुहूर्तादिविचारः । निषेधविधिरप्येवं ज्योतिश्शास्त्रे परिदृश्यते। ऋतुकालानन्तरश्च पत्नीसङ्गमयोग्यदिवसत्वेन नियतो भवति। अस्मिश्च काले, लग्ने, नक्षत्रे, वासरे, योगे, करणे वा यदिचेद्भवति भोगः ; तदा पुत्रः पुत्री वा भवतीति सर्वव्यवहारः । अस्मिंश्च प्रथमप्रसवे गर्भावधारणाद्भोगो निषिद्धो भवति । यस्माच्च कालाद्गर्भिणी भवति, तस्मात्कालादेव भोगनिषेधः । द्वितीये तु तत्करणौचित्यमपि कामशास्त्रे तु स्पष्टमुक्तम्। नारीणां प्रथमप्रसवे तु, व्यवस्था हि नोत्तमा भवति । गर्भावधारणात्तच्छक्तेरल्पत्वं भवति । अतः पुरुषाणां पूर्णा हि रसप्राप्तिर्न भवति। रसावाप्तये हि नारीणां भोगप्रसङ्गस्सुखप्रद इति सर्वत्रोक्तो भवति । यद्यपि चैतदभावेऽपि रसप्राप्तिः , तथापि तत्रानेके दोषा भवन्ति । तस्मान्नियमपूर्वः प्रसवसंस्कारः कर्तव्यत्वेन मुख्यो भवति । अस्मिन्नपि शूद्राणां नाधिकारः। प्रसवसत्ता तु तत्रापि स्यात् , परन्तु तदा नारीणां सेवनमेव विधीयते। द्विजादीनां हि तादृशमन्त्रेण तच्छब्दाभिशक्त्या च प्रतिक्षणमन्तर्मु-

स्वीकरणोपायः, ब्रह्मप्रभाव.चिन्तना च धर्ममूलं भवति। अत एव द्विजानां सर्वमपि कर्म मंत्राभिविहितम्,समुचितविधिबद्धञ्च भवति।

अथ चतुर्दशः पुत्रोत्पत्तौ सत्यां क्रियमाणः। स च जननव्रतरूपः। अस्मिन्नेव हि नान्दीमुखादिश्राद्धोपस्थानम्। अत्र सङ्कल्पसिद्धिजन्यश्चोत्साहः। सत्यामप्येकोत्पत्तौ सृष्टिमात्रे प्रसन्नता भवति, सर्वस्य बहुत्वप्रकल्पनव्यापारात्, यथेष्टत्वाच्च। प्रथमपुत्रजनने महाविष्णोरप्युत्साहः। येन येन नियमेन प्रणवकार्यसंवर्द्धनम्, तदहंभूतमेतद्भूतनकारभूतञ्च सर्वोत्साहजनकं भवति। तस्माज्जननव्रतस्यापि संस्कारत्वेन प्रवचनम्। अत्र स्वपितृणामप्युत्साहस्समुदितो भवति। पितरो हि "तत्तत्कुलोद्धरणेऽभिवर्द्धने च पितरश्शक्ताः" इति प्रवचनात् परंपरानियामकाश्च तावत्प्रसीदन्ति। कुलमेव हि परंपरेत्युच्यते। अतस्सर्वपरंपरामात्रस्य नियामकाश्चापिभवन्तीति विज्ञेयम्। तेषामेव हि लोके कुलदेवतात्वमुच्यते। सर्वस्यामपि परंपरायां कुलोद्धरणकरणार्थं तद्वर्धनार्थं वा ह्याचार्यो नियतो भवति। उद्धरणकरणं हि— इदमस्मिन्कुले चैवमभूत्, भवत्येवमिदमेव भवनोचितम्, इत्यादि परिचिन्तनमेव। अभिवर्धनं हि महाविष्णोर्बहुत्वनियमेन बोध्यं भवति। एतत्कुलोद्धरणाभिवर्धनाचार्यास्तु ऋषयो महात्मानो ब्राह्मणाश्च यथाक्रमं भवन्ति। अतस्ते सर्वेऽपि कुलपि-

त्तरश्च भवन्ति, तेषां परमोत्साहो वा चेति सर्वत्र स्पष्टमुक्त भवति। अतश्च "पितृरूपी जनार्दनः" इत्याद्युक्तिः। संसारे चास्मिन्ब्रह्मकार्यप्रसाधनमेव सर्वमूलं भवति। अयमेव हि सर्वसिद्धान्तः। अस्यैवसर्वसिद्धान्तत्वेन पितृणामुत्साहः। एवं हि किल तेषामुत्साहस्समीचीनो भवति—अस्य पुत्रोऽभूत्, भूत्वा संसारकार्यं साधयति, अयञ्च बहुत्वकल्पनं करिष्यति, ज्ञानञ्च प्राप्स्यति, धर्ममाचरिष्यति, अहमेतन्नेति स्वरूपबोधो भविष्यति इति। इदमेव हि पितृ तर्पणं भवति, तर्प्यन्तेपितरो येनेति तदर्थात्। पितृणां तृप्तिर्हि ब्रह्मत्वप्रकल्पने सत्येवेति विज्ञेयम्। अत एव जननव्रते, जननकालिकपितृश्राद्धौचित्यम्। अत एव नान्दीमुखश्राद्धं प्रथमं कुर्यादित्युपदेशः। नान्दीमुखश्राद्धो हि, सर्वेषां भूतानां यथाशक्ति परितोषकरणम्। स्वप्राप्तवस्तूनि च तदुत्साहतया ह्यन्येभ्यस्तद्धीनेभ्यः प्रदातव्यानि भवन्ति। तच्चापूर्णस्य पूर्णताकरणम्, श्रद्धया श्राद्धमिति तदर्थात्। श्रद्धया च यत्क्रियते तत्सर्वं हि श्राद्धं भवति, करणं हि तावदकृतस्यैवेति निश्चयात्। अकृतमेवापूर्णमिति व्याख्यानात्तद्भावो ह्युपयुक्तो भवति। वस्तुतस्तु कृतमपि सर्वं पूर्णमेव। नन्दस्तावत्तदभिसंवर्द्धनम्। नन्दस्य भावः नान्दी, तन्मुखं तन्निमित्तञ्च यच्छ्राद्धम्, तन्नान्दीमुखश्राद्धमिति व्यवहारः। अस्यैवानुकरणं हव्यपिण्डप्रदानादिकं

भवति। एतद्धव्यपिण्डप्रदानेनापि भूतोपकारो भवति । प्राप्य च तन्मन्त्राभिवेष्टितं पिण्डं गृह्णन्तः परमोत्साहा भवन्ति । जननव्रत-संस्कारोऽप्ययं सद्रूपेऽपि वर्तते । एतदि चाहमः प्रदर्शनं भवति। एतद्यदहमस्मीति परिभवनम् । यद्यप्यहमेतदोबोंधो नास्ति, तथापि सामानाधिकरण्येनाधाराधेयभावपरिचिन्तना भवति , अधिकरणमात्रं सत्तेति न्यायप्रवचनात् । लोकप्रसिद्धश्च तदनुक-रणं भवति । तत्संस्कारे एव यथावत्स्वानुवर्तनं भवति । स्वेष्ट-सिद्धिश्च मान्या भवति । जननव्रतेन सर्वेषां परमोत्साहतया सर्वथा सर्वदा तत्करणौचित्यम् । अणुमात्रेऽपि तद्भवति । अत एव " जातेन कुलपुत्रेण तृप्यन्ति पितरो गणाः" इत्यादि प्रव-चनम् । तस्माज्जननव्रतसंस्कारप्रयोगे स्वेष्टपूर्त्या स्वसंबंधिनामपि ह्युत्साहः । अत्र च केवलं पुरुषस्यैवप्राधान्यात्क्रिया भवति । पुत्रपुत्रीसंवृते सर्वस्मिन्नपि स्थले चायं विधिः प्रभवति ।

अथ पञ्चदशस्संस्कारः । स च कृतकृत्यस्य स्वपुत्राभि-निविष्टसर्वकार्यस्य सपत्नीकस्य गृहान्निवर्तनरूपः । दंपतिस्थश्चायं परिदृश्यते । सर्वगतं सर्वं ज्ञात्वा हीत्थं भूतं कार्यं त्यक्त्वा कार्यान्तरपरो भूयात् , निवृत्तेश्चासंभवात् । नकारमात्रावधारणं हि, सह पत्न्या संसारमात्रस्य शुभचिन्तकत्वेन स्वच्छन्नविचाररूपम् । एवं सत्सं स्कारे नाहम्, नचैतदित्यादिबोधः । अत एव

" न तं नाहं न चैवैतदेतन्नाहमहन्न च ।
प्रणवस्थं सर्वमेवं परं प्रणवगोचरम् ॥"

इत्यादि प्रवचनम् । तदनुकरणं हि संसारेऽपीति विज्ञेयम् । एतदहमेतन्नेति नियमेनाकारोकारमकारैश्चावस्थापि नियता भवति । बालो युवा वृद्धश्चेति चैतत्त्रयाणान्तादृशात्मानात्मनिषेधैर्बोधो युक्तो भवति । अत्रापि तादृशा ह्यनेकेभेदाः । " बाल्यकौमारकैशोरयौवनजरावार्द्धक्यमरणानि सप्त प्रतिपुरुषम् " इत्यादिकं तादृशज्ञानेच्छाक्रियासमाहारसंबद्धं बोध्यम् ।

तदनन्तरं मरणसंस्कारष्षोडशः । सर्वाणि कृत्वा निश्शङ्को भूत्वा दोषं परित्यजति । दृश्यतामिह—द्विविधा हि प्रसिद्धा क्रिया भवति , आकर्षणरूपा मान्द्यरूपा चेति । आकर्षणरूपा हि कार्यसंपादयित्री, मान्द्यरूपा चाशक्तता । विचारेणैव हि चैवं बोध्यं भवति । यो हि कार्यं करोति, तस्य शक्तेः प्राबल्यम् । शक्तिश्च सा प्रबला । केनचित्कारणेन न सा भवति।कारणन्त्विदमेव, यदिदं कार्यं करोति, कृतेऽकृतेऽपि मन्दो भवति । तन्मान्द्ये च पूर्वकार्यपरिपाक एव कारणं भवति । तत्परिपाके पुनः शक्तिश्च भवति । ततः पुनस्संपादनमिति विज्ञेयम् । दृश्यताम्—कृते भोजने हि भोजनपरिपाकाय शयनं नियतं भवति । कृते च शयने भोजनाद्वीर्याभिवृद्धिः । पुनश्च शयनादुत्थिते सति नव्या

शक्तिरुत्पद्यते । तया च सम्यक्कार्यं साधयति, यावत्तच्छक्तेरनु-स्थितिः । अयमेव जननमरणव्यापारः, प्रळयसृष्टिव्यवहारश्चेत्यादि विज्ञेयम् । जननादारभ्य हि कार्यं करोति । कृते च कार्ये तत्परि-पाकाय मन्दतां याति । तन्मन्दतैव मरणक्रियेति विज्ञेयम् । यदा चास्मिन्स्थूलदेहे शक्तिर्न तिष्ठति, तदैवैतत्परित्यागः, अशक्तः परित्याज्य इत्युक्तेः । स्थूलशरीरं हि कारणरूपम्, तद्भोगपरि-पाकादिक्रिया हि सूक्ष्मदेहे भवति । प्राप्य च कालं तस्मिन्नपि मन्दता भवति । ततः कारणदेहे कार्यं भवति । एतद्देहस्य परि-त्यागो न कदापीति विज्ञेयम् । तस्मात्पुनश्शक्तिं प्राप्य यथाक्रमं स्थूलधारणमेव जननमिति सिद्धान्तः । अत्र स्थूलसूक्ष्मकारण-रूपाणि त्रीणि च शरीराणि तादृशात्मानात्मनिषिद्धपराण्येवेति वेदितव्यानि भवन्ति । तस्मान्मरणं हि मन्दे च सति स्थूले तत्परित्यज्य जीवस्य सूक्ष्मशरीराभिगमनरूपकार्यकरणमेव । अत एव "मृते सति यमालयं गच्छति" इत्यादि प्रवचनम् । यमो हि निवृत्तिः, तदालयस्सूक्ष्मदेहः । निवर्तनं हि प्रवर्त्तनस्यैव भवति । यदिदं प्रवर्तनं स्थूलदेहस्थितिरूपम्, ततो निवृत्या-न्यत्र गच्छतीति विज्ञेयम् । सोऽयं यमालयो हि सूक्ष्मदेहः, तस्मिन्जीवस्य स्थितिः, स्थित्वा कामलोकादिके निवसति जीव इति विज्ञेयम् । तत्रैव सूक्ष्मकर्मणां भोगो भवति । स च दुः-

स्वरूपः , तत्रैव नरकादिव्यवहारः । कामनायाः लोकः कामलोक इति व्युत्पत्तिः । तत्रत्यानामशुभकामनानां तस्य परिचिन्तना भवति । अत एव तत्र अनेकदुःखानुभवः । अतस्तन्त्यक्त्वा , स्वीकृत्य च कारणदेहं स्वर्गमभिगच्छति । स्वर्गो हि सुखस्वरूपः , कारणश्चात्मदेह इति विज्ञेयम् । अत्र व्याख्यानेन हि केवलमिदं बोध्यं भवति , जीवमात्रस्य क्रियानिवृत्तिर्न कदापि भवति ; अनवस्थया ह्यवस्थानिवृत्तिरेवेति फलितं भवति। तदिदं हि मरणसंस्कार इति विज्ञेयम् । अत्र च शक्त्युत्पादनजन्योत्साहः । नकारप्रवचनतया चात्र शोकमनुतिष्ठति । एतन्नेति योगादेतन्मनुष्याणां तद्विनाशवत्त्वेन शोकोत्पत्तिर्दृश्यते। मरणमेव हीदं संन्यासाश्रमः , निवर्तनमेव वानप्रस्थधर्मः , प्रवर्तनं हि गार्हस्थ्यम् , तत्संपादनं ब्रह्मचर्यञ्चेत्येतत्सर्वं ज्ञानेच्छाक्रियासमाहारविशिष्टं बोध्यम् । यदेतज्जीवकाले संन्यासावस्थेति , तदेव संस्कारांशे मरणावस्थेति प्रतीयते ।

अत्र च मृतानां देहस्य दाहोक्तिः। सूक्ष्मस्थूलयोर्नित्यसंबन्धात्सूक्ष्मदेहस्थश्च जीवः कामलोकादागन्तुमिच्छति। यदि चेत्स्थूलशरीरस्य वर्तमानता, तर्हि मृतेऽपि स्थूलदेहे ह्येतदागमनम् ; तदेवात्र प्रेतादित्वेन विज्ञेयं भवति । पूर्वमिष्टपदार्थानां परिचिन्तनम् , तस्य कामलोकेऽपि भवति । अत्यन्तमिष्टतया चागत्य,

तादृशस्थूलदेहेन तेषां पदार्थानां भोगसाधनत्वं भवति । तत्राप्य नेके च दोषास्संभवन्ति । तद्वारणाय हि चास्य स्थूलदेहस्याग्नौ प्रक्षेपः। स्थूलदेहाभावेऽपि स्थूलसदृशमेकं लिङ्गशरीरमधितिष्ठति। सोऽपि स्थूलान्तर्गतमेव । तत्र स्थितौ सत्यामपि पदार्थभोगो भवति । ईप्सिततमानां तद्वारा प्राप्तिरिति विज्ञेयम् । दृश्यता-मिह लौकिकसंबन्धे दूरस्थानां पदार्थानामप्यतिचेष्टाकरणेन लिङ्ग-देहद्वारा तत्समागमो भवतीति स्वप्नेन परिभाव्यते । भिन्न-देशस्थितयोरपि पुरुषयोरेकत्र संबन्धो दृश्यते । दैशिका हि सर्वे पदार्थाः, दैशिकी च तावदीप्सा तल्लिङ्गदेहद्वारा देशेऽभिनिवेशनम्। अत एव हठयोगिनां हठरूपकुञ्जरादिक्रियाकरणेन, सति स्थूल-देहसंबन्धेऽपि देहं त्यक्त्वा प्रगमने शक्तिर्भवति । तस्माल्लिङ्ग-देहेनाप्यनेकदोषास्संभवन्त्येवेति, लिङ्गदेहपरित्यागोऽपि कर्मानुसा-रेण भवति । लिङ्गदेहस्थाश्च ये जीवास्ते सर्वेऽप्यत्र विचरन्ति । लिङ्गदेहत्यागानन्तरं कामलोके तेषां संस्थितिः । तस्मात्स्वशक्ति-रहितः स्थूलो देहश्चाग्नौ होतव्य इति, स एव दाहो भवति । केवलं तद्वारणमेव दाहकारणं भवति । देहस्य दाहेऽकृते जीवः क्रुध्यति। तस्मिंश्च श्मशानभूमेरारभ्य च तस्मात्कालाज्जीवो लिङ्गस्थो भवति । दग्ध्वा च कर्ता तस्याः श्मशानभूमेरागच्छति । भय-मेव तत्र कारणं भवति । यद्यपि स तु श्मशानभूमौ तिष्ठति,

तथापि तदीप्सया तस्य भयवत्त्वमभिधीयते। यदि च दाहकर्ता श्मशाने तिष्ठति, तर्हि तस्यापि मरणमवश्यं भवेद्भयेनेति विज्ञेयम्। अत एव तन्त्रशास्त्रे प्रेतसिध्यर्थं श्मशानजपो ह्यनुष्ठितो भवति, कृते हि च जपे स प्रसीदति, तदर्थं तत्प्रियपदार्था दीयन्ते, तत्प्रदानेन प्रेतसिद्धिरिति स्पष्टमवगम्यते। तत्रापि च प्रेतागमनाद्भीतानामप्यधमा गतिर्भवति, मरणं वा, प्रमत्तताद्यनेकविक्षेपो वाभवति। तस्मादेव भयाद्दाहकर्तॄणां लोहाद्युपधारणम्।

अथ दग्धानामस्थिसंचयनं कर्तव्यम्। अस्थिसञ्चयनं हि तद्भस्मास्थिनां जले प्रक्षेपणम्। यदि चेन्नप्रक्षेपणम्, तर्हि स प्रेतः क्रुद्धस्तद्भस्मनाप्यनेकविघ्नान्युत्पादयन्ति। तद्भस्मनाप्यनेकरोगास्संभवन्ति। अतस्तत्प्रक्षेपणमावश्यकं भवति। भस्म प्राक्षिप्तं दृष्ट्वा हि प्रेतः सह च कर्त्रा तत्स्थानादनुसरति। अथ चानुसरतस्तस्य वारणाय, गृहाद्बहिर्ग्रामाद्बहिश्च वा मन्त्रशक्त्या कुत्रचित्तं संस्थापयति कर्ता। यद्यपि प्रबलश्च प्रेतः, तथापि मन्त्रशक्तिद्वारा तत्स्थितिसंभवः। यावन्नप्रसीदति, तावत्तदर्थं यत्नः कार्यो भवति; तदेव घटादि संस्थापनमित्युच्यते। किञ्च तदर्थं सजलमन्नं हि तस्मै दातव्यं भवति। तेन प्रसन्नाय तस्मै दीपादिदाननियमः। एवं कृतेन हि जलान्नादिदानेन तस्य तच्छरीरसंबन्धविस्मृतिर्भवति। इतः परमेव तस्य प्रसादो भवति। तदेवं क्रमेण दशरात्रं पिण्डबलि-

प्रदानादिकार्यं भवति । एकैकपिण्डदानेन चैकैकगात्रसंबन्धपरि त्यागो भवतीति तत्फलं विज्ञायते । अत एव दशगात्रविधानं द्विजानां विहितं परिदृश्यते । अत एव

" कृत्वा वै दशगात्राणि संबन्धस्त्यज्यते नरैः ।
दशगात्रं विना लोके दाहकर्ता भयावृतः ॥"

इत्यादि प्रवचनम् । तस्माद्दशगात्राणां प्रत्येकं नियमेन संब न्धपरित्यागार्थं तन्नियतमन्त्रेण कर्म कर्तुमुचितं भवति । अय मेव दशगात्रश्राद्ध इत्युच्यते ।

दाहात्पूर्वमपि षट्पिण्डप्रदानान्युक्तानि । तानि च गृहेचेष्टपदार्थानां परित्यागाय भवन्तीति विज्ञेयम् । ज्ञानेच्छाक्रियाण क्रमेण हि षट्पिण्डदानानि विज्ञायंते । तेन गृहादिकोष्ठं प्रेते विसृजति । तावत्तच्छरीरसंबन्धे , पिण्डलोभान्मन्त्रामन्त्रिते सति प्रेतोऽपि श्मशानं गच्छतीति विज्ञेयम् । तस्मात्तदेतत्षोडशपि· ण्डानां प्रदानं व्यवस्थितं भवति । एतज्ज्ञानेच्छाक्रियासंबन्धस्य च समाहारत्वात् , दाहात्पूर्वं श्मशानेऽपि चैकः पिण्डः प्रदा तव्यः । एतत्समाहारमन्त्रेण च श्राद्धाभिधानम् । तदेवं दश गात्रविधिं कृत्वा चैकादशः पिण्डः प्रदातव्यः , यस्य लोभात्पु· नश्शरीरं न स्मरतीति सिद्धान्तात् । एतत्स्मृतिविनाशमन्त्रेण चैकादशाहकर्तव्यान्युचितानि भवन्ति । तदेकादशाहे वृषोत्स·

र्गादिकमपि व्यवस्थितं भवति, तत्प्रयोजनं हि प्रेतपरितोष एवेति विज्ञेयम् । प्रेतानाञ्चाधमा गतिरिति स्पष्टतया तावत्तत्प्र-योजनसिद्धये वृषभप्रदानम् । प्रेतानामीश्वरश्च कामलोकस्थः, स च वृषभेण प्रसीदति । तं प्राप्य च शीघ्रमेव लिङ्गदेहपरित्यागो भवति । इदमेव प्रेतत्वविमोचनं भवति । अत एव

"नश्यन्ते सर्वपापानि वृषोत्सर्गेण सर्वथा ।
अतस्सर्वस्य भूतस्य वृषोत्सर्गो ह्यनुष्ठितः ॥
गृहेष्टानां परित्यागं प्रेतो येन करोति च ।
तदर्थानि षट्पिण्डानि दातव्यानि यथाक्रमम् ॥
दह्यमाने शरीरे तु कर्त्रे प्रेतश्च क्रुध्यति ।
तस्य सम्यग्वियोगस्य शान्त्यर्थं प्रेतकर्म च ॥
दशगात्राणि मन्त्रेण कर्तव्यानि विधानतः ।
एवं कृते त्वनेनैवं संबन्धस्त्यज्यते तथा ॥
त्यक्त्वा तस्य चसंबन्धं पुनस्संस्मरणं भवेत् ।
तद्विनाशाय भूतानां भवेदेकादशाहिकम् ॥
तृप्तये प्रेतनाथस्य वृषोत्सर्गो विधीयते ।
तत्र शय्यादिकं देयं कामलोकस्य सिद्धये ॥
अत्र स्थूलप्रदानं हि कामलोकेषु लभ्यते ।
मन्त्रात्सूक्ष्मतरो भूत्वा तत्प्राप्तिः परिवेष्टिता ॥

सर्वेषां विश्वभूतानां कामलोके च संस्थितिः ।
तत्र संस्मरणं नित्यं बन्धुमित्रादिकस्य च ॥
अस्त्यत्र स्मरणं तस्य संबन्धोऽत्र विधीयते ।
तस्मादेवं तदर्थस्याद्दातव्यमुचितं परम् ॥"

इत्यादि प्रवचनम् । तस्मादेव कामलोकस्थानामत्र स्थितानाञ्च संबन्धो विज्ञायते । अत्रैवं कृते सति कर्मणि, मन्त्रद्वारा शब्द-शक्तितया तत्प्राप्तिरावश्यकी भवति । अतश्चैकादशाहविधाने तत्परितोषाय कामलोकार्थे शय्यादिप्रदानमुपन्यस्तं भवति ।

तदनन्तरं षोडशसंस्कारनियमेन द्वादशाहविधिः । तत्र षोडशपिण्डप्रदानम् । अस्यैव हि षोडशश्राद्धत्वेनोक्तिः । पूर्वोक्त-ब्रह्मचर्याद्याश्रमनियमेन, कार्यनियमेनच श्राद्धोऽयं कार्यो भवति - तत्तत्कार्याणामाश्रमधर्माणाञ्च सर्वेषां क्रमपरित्यागाय ह्ययं श्राद्धो भवति । यद्यपि शरीरसंबन्धत्यागेनैव हि तत्यागस्समुचितो भवति, तथापि तत्र कालाधिक्यात्तदाधिकरणाच्च, लिङ्गदेहप्राबल्येन तत्स्म रणं भवति । यद्यपि तन्निष्फलम्,तथापि तस्य ह्रीप्सिततमत्वेन दोषो भवत्येव । तस्मात्तन्निवृत्तये हि श्राद्धोऽयं कर्तव्यो भवति । अत एवह्येकमासिकः द्विमासिकः त्रिमासिकः चतुर्मासिकः पञ्चमा-सिकः षाण्मासिकः, इति श्राद्धसङ्कल्पो विज्ञायते । अत्र मासि-कपदेनावस्थायाः ग्रहणं भवति । प्रथमद्वितीयतृतीयचतुर्थादयो

ह्यवस्था भवन्ति । अस्मादेव बीजान्मरणान्ताष्षोडश्योऽवस्था विधीयन्ते । अत एव

> " अवस्थाष्षोडशीस्त्यक्त्वा कामलोके वसत्यसौ ।
> भुक्त्वा तत्र कृतङ्कर्म पुनस्स्वर्गं स गच्छति ॥
> दुःखकर्माणि सर्वाणि कामलोककृतानि च ।
> सुखकर्माणि सर्वाणि स्वर्गस्थेनानुभूयन्ते ॥ "

इत्यादि प्रवचनम् । तदेवं विधानेन ह्यवस्थानिवृत्यर्थं षोडशापिण्ड-प्रदानानि भवन्ति । तान्प्राप्य ग्रामादिसंबन्धञ्च त्यक्त्वा लिङ्गदेह-विनाशश्शीघ्रं भवति । लिङ्गदेहस्तावल्लोकेषणाधिकरणरूपः, स्थूल-देह इव तत्स्वरूपविज्ञानं भवति । अतः " तदाकारं परित्यज्य कामलोके तिष्ठति " इति सर्वसंमतं भवति । अत एव षट्पिण्डाः, दशगात्राणि, श्मशानपिण्डाः, एकादशाहकर्तव्यम् , षोडशश्राद्धाः सर्वनियमेनोक्तानि भवन्ति । यथा यथा कालश्च व्यतीतो भवति, तथा तथा तस्य परिज्ञेयतया संबन्धत्यागो भवतीति विज्ञेयम् ।

अथ चैवमारभ्य मरणाद्वर्षपर्यन्तं तत्प्रेतसंबन्धपरित्यागाय क्रियायाः कर्तव्यत्वम्, प्रतिमास तदर्थमेकपिण्डप्रदानञ्चभवति; येन तल्लिङ्गदेहविनाशस्स्यात् । पुनरेवं हि लिङ्गदेहस्यापि षोडशावस्था-त्वेन तत्परित्यागार्थं प्रतिमासं षोडशपिण्डप्रदानम् , तल्लिङ्गशरीरा-वस्थानुगुणं कर्तव्यत्वेन समुचितं भवति । अत एव यस्मिन्यस्मिंश्च

काले तद्देहस्य विनाशावस्था नियता, तस्मिन्तस्मिन्काले तद्विधान-मुक्तं भवति ।

अथ लिङ्गदेहपरित्यागे सत्यपि पिण्डप्रदानञ्च वार्षिकं भवति। अत एव "वार्षिकी क्रिया तावल्लोकप्रसिद्धा, वार्षिक-पिण्डप्रदाने सत्यपि तदुपास्थितिश्च केवले सूक्ष्मदेहे भवति, "स्थूल-मन्तरा हि वार्षिकं लिङ्गायुः परिदृश्यते" इति सामान्यं विधि-वचनम्। विशेषविधिना हि स्थूलनाशकाले चैतद्विनाशो भवति। यद्वा तदायुरप्यनेकवार्षिकमिति सर्वत्र स्पष्टमुक्तं भवति। अत एव

"नष्टे स्थूले क्रिया नष्टा संसारस्था हि भौतिकी ।
लिङ्गदेहे च संप्राप्ते वर्षमेकं हि सा भवेत् ॥
पुनस्सूक्ष्मतरो भूत्वा कामलोकक्रियावृतः ।
संप्राप्ते कारणे देहे सुखं स्वर्गस्य भुज्यते ॥
लिङ्गदेहस्यैकवर्षमायुरुक्तं व्यवस्थया ॥
कर्मणास्वल्पमधिकं नियतः प्रणवाभिधः ।
ओमित्येकविधानेन शरीरं तच्चतुष्टयम् ।
स्यात्तत्रान्तर्गतं सर्वमहमेतत्र संयुतम् ॥"

इत्यादि प्रवचनम्। तस्मात्तादृशं विधानं वार्षिकमेवेति स्पष्टमुक्तं भवति। लिङ्गदेहस्यैवात्र प्रेतत्वोक्त्या तदुचितक्रियायाः विधानं समुचितं भवति ।

अथ चैवं विधानेन पञ्चाशत्पिण्डप्रदानमुक्तं भवति। श्मशानकर्तव्यपिण्डगणना हि न कुत्रचिन्निरूपिता इत्यपि बोध्यम्। तत्र हि केवलं स्वसंबन्धनिवृत्तये तत्पिण्डप्रदानं विधीयते। अतस्तस्य स्वार्थत्वान्न स प्रैतिको भवति। अत एव मरणसंस्कारे तद्विधानन्तावद्देशमात्रम्, न च वस्तुत इति प्रशस्तं भवति। अत एव "शतार्द्धपिण्डदानेन प्रेतो याति परां गतिम्" इत्याद्युक्तिः। अत्र च पराङ्गतिमित्युक्तेन, आभ्यां स्थूललिङ्गाभ्यां परावस्थां गच्छतीत्यर्थो विज्ञायते। एतल्लिङ्गलोकस्यैव प्रेतलोकत्वप्रवचनात्। परामित्यनेन परलोकः कामस्वर्गस्सूक्ष्मकारणपरः वेदितव्यो भवति। अत एव

" स्थूलं लिङ्गं परित्यज्य कामस्वर्गमुपासते।
अतीतत्वादनन्तत्वाज्जायते म्रियते पुनः॥
योऽयं हि लिङ्गलोकस्यात्प्रेतलोकस्स उच्यते।
तत्रैव प्राप्यते सर्वं बलिपिण्डादिकं तथा॥
पिण्डान्शतार्धान्संप्राप्य स याति परमां गतिम्।
भुक्त्वा तत्र सुखं दुःखं शक्तिं प्राप्य नवावृताम्॥
पुनरागच्छन्ति लोकं क्रियन्ते कर्म तैस्तथा।"

इत्यादि प्रवचनम्। एवमेव

" दाहात्पूर्वं हि दातव्याः षट्पिण्डाः परमोदयाः।

दशश्राद्धं पुनः कुर्यात्तथैवैकादशाहिकम् ॥
कुर्याद्वै षोडशश्राद्धं पुनश्च षोडशान्वयम् ।
तत्पश्चाद्वार्षिकं कुर्याच्छतार्धं पिण्डमुत्तरम् ॥
एवं कृतेन प्रेतत्वं सर्वथा हि प्रमुच्यते ।
तस्मात्पिण्डाः प्रदातव्याः शतार्धा विधिपूर्वकम्

इत्यादि प्रवचनम् । अत एव दशश्राद्धादीनि, कर्तव्यानि वेदविहितानीति विज्ञेयम् । एवमेव सत्संस्कारेऽप्येषा क्रिया भवति । यदिदमहमेतच्च, तन्न; किन्तु सर्वथा नकार एव प्रयुज्यते । सर्वं हि नकारमूलमिति हि भावना भवति । अत एव

" नाहं ब्रह्म न त्वं ब्रह्म नायं ब्रह्मेति किञ्चन ।
नायमात्मा न चानात्मा संबन्धो नैव किञ्चन ॥
नेति नेति च यत्किञ्चित्तद्ब्रह्मेति विधीयते ।
अहं त्वञ्चायमन्यद्वा चेति भेदः प्रपञ्चितः ॥
नकारोऽयं नकारोऽयं सर्वसिद्धो न चात्मकः ।
नायं सर्वो न सर्वस्वः सिद्धस्साध्यो न साधकः ॥
न शक्तश्शक्तिमान्नैव न प्रसक्तो नकारकः ।
कारणं कार्यविक्षेपः न ब्रह्मेति सनातनम् ॥
एतद्ब्रह्म चाहं ब्रह्म सर्वस्वं सर्वसंवृतम् ।
न ब्रह्मेति परिज्ञानाद्ब्रह्मतां ब्रह्म गच्छति ॥

ब्रह्मतां समनुप्राप्य योऽश्नुते परमं सुखम् ।
परानन्दमयं विश्वं नेति नेति हि भासते ॥
अत्र तत्र न यच्चैवं सर्वत्रास्मीति निश्चितम् ।
नास्ति नास्ति न चैवास्ति सर्वत्रानुगतं परम् ॥"

इत्यादि प्रवचनम् । तस्मान्नकारात्मकं परं ज्ञानमेव मरणसंस्कारो भवति । अत्र ह्यहमेतदोर्योगविनाश एव तयोः परस्परविमोकजन्योत्साहः। द्वयोस्तत्रैक्यं हि विज्ञायते,सर्वं तद्विरोधाभासस्य विनाशरूपमेव तत्कार्यं भवति । तत्राहमः, एतदः, नस्य च यज्ज्ञानम्; तदेवाहमादीना यथाक्रमं ज्ञानाग्निसंस्कार इति विज्ञेयम् । अहमेतन्नेति विज्ञानतया, नाहं नैतन्न च न इति, प्राधान्यात्तस्यापि तादृशप्रेतत्वं विज्ञातं भवति ; प्रकर्षेण इतः प्राप्तः प्रेत इति तदर्थात्। प्रकर्षश्च प्रयत्नः, सति चप्रयत्ने चैवं ज्ञानं भवति। तादृशज्ञानत्वेन तस्य प्रेतत्व भावना भवति।एतत्प्राप्तिश्च, अहमेतन्नानां पूर्णविज्ञानरूपमेव । तस्य चैवं विचारः—यदहमेतदेतदितिमन्ये, यदेतदेतत्तदहंमन्ये, यदहमेतदौ मन्ये तन्नकिञ्चिदिति । तच्च, न केवलं प्रपञ्चात्मकम्, किन्तु प्रपञ्चोऽपि नतादृशः ब्रह्मस्वरूपानुसन्धानरूपइति च तद्विशेषव्यवसायः । विनापि केवलनकार विज्ञानं मुक्तो भवति, न च ब्रह्मभावमधिगच्छति; किन्त्वहमश्चैतदन्तयोर्योगस्य च तदुदाहरणानि ज्ञात्वा परमसुखीभवतीति विज्ञेयम्।

तत्रापि शतार्धपिण्डादिप्रदानं दृश्यते । अहमेतन्नेत्यस्य प्रत्येकं ज्ञानसंबन्धक्रमेण षट्पिण्डाश्च भवन्ति, यदिमे दाहात्पूर्वं भवन्ति । अत्रापि ज्ञानदाहोक्त्या, नकारज्ञानपूर्वकं ज्ञानेच्छा-क्रियानुसारेण तदनुवर्तनसहितज्ञानषट्कञ्च भवतीति विज्ञे-यम् । यश्च श्मशानपिण्डस्सप्तमः, स च षण्णामेकत्र कार्यकर-णज्ञानरूपः । तदिमे कर्तृकरणकार्यप्रयोजनानि, तत्संबन्धः, तदनुसरणम्, पुनस्तद्विनाश इति सप्त भवन्ति । कर्ता चाहं रूपः, अहम्येतद्विशिष्टत्वङ्करणम्, अहं भूतमेतत्कार्यम्, अह-मेतस्यैतन्नस्यामिति प्रयोजनम्, अहमेतदोर्योगस्संबन्धः, अहमे-तदेतदेतदेतन्नेति व्यवस्थितस्सप्तमो भवति । अथ तावदहमेतन्ना स्मीत्यस्य चास्धातुना सह प्रयोगः । इदमेव हि नानात्वं भवति । तत्र च त्रयाणामन्तर्गतत्वान्नवमः । अहमेतन्नेत्येतत्परमपि यत्तद्द-शमः । शून्यस्वरूपो नकारोऽपि न चेतीत्येतत्परमवस्थारूपो भवति । तदेवं समाहृत्य तत्रदशगात्राणि भवन्ति । पुनरहमेतन्नेत्यस्य, कार्यं क्रियाकरणं संयोगवियोगौ तदनुयोगःप्रतियोगश्च चतुर्विधो भवति । तेन षोडशपिण्डप्रदानं भवति । एकादशाहे च सर्वस्य चैकीकर णम्, वास्तवनियतं भवति । एवं परितुष्टे सति हि प्रळयः । स एव नकारकार्यं भवति । प्रळायानन्तरञ्च पुनश्शक्तिं प्राप्य कार्यकरणे प्रवृत्तिर्भवति । न चैकस्मिन्काले पूर्णः प्रळयः, किन्तु

क्रमानुष्ठानेन तत्प्रयोगसंभवः, सर्वस्य क्रमिकत्वात् । अतःपरं षोडशविधानम्, अहन्त्वमयमन्यदिति चतुर्विधानियमप्रपञ्चेन भवति। तत्र वार्षिकं पिण्डप्रदानं हि, अहन्त्वमयमन्यदिति भेदपरित्याग-रूपन्तदैक्यारोपरूपञ्च भवति । अत एव

"न त्वं नाहं न चैवाहमन्यं नैव हि किञ्चन ।
अहन्त्वमयमन्यच्च परिज्ञानैककालिकः ॥
तदिदं वार्षिकं पिण्डदान ज्ञानपराश्रयम् ।
इत्थं ब्रह्मपरो भूत्वा क्रियावाञ्ज्ञानवानपि ॥
क्रियाज्ञा भेभिन्नोऽयं सत्यं प्रणवसंयुतम् ।
अकारोकारमकारस्थं हि ब्रह्म सनातनम् ॥"

इत्यादि प्रवचनम् । तस्मात्तदिदं ज्ञानावस्थायामपि शतार्धपिण्ड-दानं भवति ।

अत्रापि च वृषोत्सर्गः । स च, यदिदं भेदरूपम् "वृषभो रोरवीति" इति शब्दरूपेण प्रतिभासते; तत्परित्याग एवेति विज्ञेयः। वृषभश्च भेदज्ञानम्, तच्च–मदीयन्तदीयमन्यदीयमित्येतत्स्वरूपम्, तदुत्सर्ग एव तद्विधिः । अत्र शय्यादि प्रदानञ्च, सर्वभूतानि चैक त्वेनाभिवीक्ष्य तन्निषेवणमेव । यच्च किञ्चित्स्वात्मना प्राप्नोति,प्राप, प्राप्स्यति वा,तदात्मार्थंप्रदेयम् ।सर्वमात्मेति मत्वा न स्वार्थतयापरार्थ तया वा दातव्यम्, किन्तु परमार्थतयेति विज्ञेयं भवति।अत एवाम्नि-

न्संस्कारे ब्राह्मणादीना भोजनं विहितं भवति । यादृशश्च यस्य ज्ञानाधिक्यम्, तज्ज्ञानाधिक्ये न तदर्थङ्कर्म कर्तव्यं भवति । ब्राह्मणाना ज्ञानाधिक्यात्, स्वात्मपरमात्मनोर्भेदाभावात्, सर्वस्यैकरूपत्वेन मन्तव्यत्वाच्च तद्भोजनस्य पुण्यत्वेन प्रवचनम्। सत्यञ्च स्वजनस्य पूर्णतायान्तु सर्वभूत निष्ठारूपायाम्, सर्वेभ्यः संप्रादनं समुचितं भवति। किञ्च सर्वभूतस्य तृप्तिकरणे पुण्यमुक्तं भवति। तस्मात्तदिदङ्कर्तव्यं सत्संस्कारेऽपि भवति। अत्र ब्राह्मणभोजनम्, ज्ञानप्रसङ्गरूपम्। तत्वज्ञानान्मुक्तिरिति बीजात्तत्वव्याख्यनमेव तद्भोजनाच्छादनरूपं भवति। यो ह्येतादृशं चिन्तयति, तस्य तु तन्नित्यब्राह्मणभोजनं प्रतीयते। सर्वसर्वस्यास्त्येवेति मन्तव्यमिति तदनुमानं भवति। तत्र भेदाभावाद्यथायोग्यं ज्ञानसाधनमन्वेष्टव्यं भवति। एवं भूतो हि मरणसंस्कारः, अस्यैवानुकरणमिदमिति विज्ञेयम्।

अनेनैव बीजेन मरणाशौचमपि विधीयते, न शौचमिति तदर्थात्। सति च प्रेतदाहे तदाशौचप्रपञ्चः परिदृश्यते। आशौचं हि प्रकृतेर्विरुद्धस्वरूपं भवति, "यादृशी प्रकृतिरस्ति, तस्यास्तथानुवर्तनमाशौचम्" इति वचनात्। दृश्यतामिह—यो ह्येकस्य पवित्रः, स एवान्यस्यापवित्रो भवति, एवमपवित्रश्च पवित्रो भवति। अतः पवित्रमपवित्रमिति च कालदेशानुगुणं निर्णेयं भवति।

तत्र दाहकरणं हि स्थूलदेहाभावकरणरूपम्। ततः प्रेतक्रोधस्सम-भिवर्तते। तस्माद्भयार्तो भवति। तद्भयार्तत्वञ्चापवित्रत्वरूपम्। यादृशी च यस्य ज्ञानवृत्तिः, तादृशस्तदर्थस्तस्य दोषः प्रभवति। अत एव

"पवित्रश्चापवित्रश्च देशकालपरो भवेत्।
देहाभावे च संप्राप्ते प्रेतक्रोधो हि जायते॥
तद्भयार्तो भवेद्भ्रान्तस्तस्याशौचं प्रकल्प्यते।
यादृशं विद्यते यस्य विज्ञानञ्च यदात्मकम्॥
तादृशो हि भवेद्दोषः स्याद्वर्णत्रयसंस्थितः॥"

इत्यादि प्रवचनम्। तस्मादल्पाधिकभेदेनाशौचं भवतीति विज्ञे-यम्। अत एव

"विप्रश्शुद्ध्येद्दशाहेन द्वादशाहेन क्षत्रियः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति॥"

इत्यादि प्रवचनम्। एवमस्यार्थो विज्ञायते—विप्रस्य ज्ञानपरत्वा-ज्ज्ञानक्रियेच्छासंबन्धस्य प्रत्येकं त्रितयत्वाच्च दशाहे शुद्धिः, क्षत्रि-यस्य क्रियापरत्वाज्ज्ञानक्रियायास्समाहारतया द्वादशाहे शुद्धिः, क्रियाज्ञानयोर्योगमात्रत्वाद्वैश्यस्य तदधिकरणत्वाच्च तस्य पञ्चद-शाहे शुद्धिः, शूद्राणां हि सेवामूलत्वाद्यथाक्रमं सेवायां कृतायामपि मासेन शुद्धिरिति। शोधनं हि शुद्धिरित्यर्थात्, पूर्वशुद्धिश्च

अयार्तत्वमिति च स्पष्टमुक्तं भवति। कृते हि दशरात्रादौ भयाद्वि मुक्तस्य या च परमानन्दसंप्राप्तिः सा शुद्धिरिति विज्ञेयं भवति एवं क्रमेण हि चतुर्णां वर्णानां व्यवहार उक्तो भवति । एषो हि मरणसंस्कारस्सर्वेषां विहितो भवति । अतः प्रत्यणु सर्वसंस्कार प्रदर्शनम् । तस्मात्सर्वसंस्कारमयं ब्रह्मेति प्रतिपादितं भवति अत एव

" ज्ञानाज्ञानद्वयोर्भावे वर्तते परमा क्रिया ।
सतोऽनुकरणं सिद्धं सर्वसंस्कारसाधनम् ॥"

इत्यादि प्रवचनम् । तस्मादिमे सर्वे संस्काराः प्रणवस्थाः प्रण वानुगताः प्रणवभूताश्च भवन्तीति विज्ञेयम् ।

अत्रैकोद्दिष्टपार्वणसपिण्डीकरणानीति त्रीणि परिदृश्यन्ते तत्र चैकोद्दिष्टं हि तस्मिन्वर्षे प्रतिमासं तिथौ क्रियमाणं भवति तच्च जीवस्य ह्येतच्छब्दशक्त्या स्वर्गे, तथा कामलोके च सुख प्रदं भवति । एकोद्दिष्टमन्त्रेण हि कामलोके सुखं भवति । पार्व णश्राद्धश्च, कारणदेहप्राबल्यसिद्धये, कामलोकाद्बहिर्भवनसिद्धये च क्रियमाणः पर्वभूतत्वेनोपन्यस्तो भवति । तस्मिंश्च पार्वण श्राद्धे, ये च कामलोकेशाः विश्वेदेवाः, तेभ्यः प्रार्थना क्रियते सा ह्यस्माल्लोकादेनं निष्क्रामय, स्वर्गे हि सकार्यं करोत्विति संभावनारूपा भवति । पर्वकाले हि विश्वेदेवः प्रार्थनाश्रवणं

प्रवृत्तो भवेत् । अन्यथा तु कर्मानुसारेण द्वयोस्स्थाने तिष्ठत्येव । यद्यपि कर्मविश्लेषो न भवति, तथापि तत्कर्मणां शीघ्रं भोगो भवतीति व्याख्यानात्प्रार्थनौचित्यं संभवति । तस्मिश्च श्राद्धे सजलमन्नं वस्त्राद्यलङ्कारश्च नानाविधः परिकल्प्यते दातव्यमिति । स च शब्दशक्त्या सूक्ष्मरूपो भूत्वाऽन्यं प्राप्नोति । तदपि ह्यधिकार्यनधिकारिविचारेण प्रदेयं भवति । तत्र च तर्पणादिग्राहकाः विश्वेदेवा भवन्ति । विश्वेदेवाश्च सर्वत्रोपस्थितास्सर्वाधिगताश्च तस्मात्तदर्थं सलिलादिप्रदानं व्यवस्थितं भवति ।

एवमेव सत्संस्काररूपञ्चैकोद्दिष्टश्राद्धं पार्वणादिकञ्च सर्वं ज्ञानपरं वेदितव्यं भवति । एकोद्दिष्टं हि केवलाहंरूपं भवति । अतस्सर्वत्राहमहमिति चैतदेकोद्दिष्टं भासते । अहमित्यस्य चैतदा योगस्संसरणनिष्ठश्च श्राद्धः पार्वणः । पर्वतावद्योगेन भवतीति व्याख्यानादहमेतदोर्योग एव पर्व इति विज्ञायते । यथैवमाह— अनेनायमात्मा तिष्ठति, इदमौषधं कुरु, नातो म्रियते, न जायते म्रियते जायते वा इति । अयमेव पार्वणश्राद्धः । अतः श्रद्धया सर्वपर्वसु अस्त्यात्मेति मत्वा सह च सर्वैस्स्ववत्प्रीतिकरणं पार्वणश्राद्ध इत्युपदेशः । एवमेव सपिण्डीकरणमप्युपस्थितं भवति । सपिण्डीकरणं हि समानपिण्डकरणार्थकं भवति । सर्वेषां सामानाधिकरण्यकरणं हि सपिण्डीकरणशब्दार्थो भवति । एकमेव हि

ब्रह्म, नेहनानास्ति किञ्चन इति बुध्या नानेकं किञ्चित्। तद नेकाभासस्य चैकत्वेन बोधान्नेदमनेकमिति विज्ञायते। "यदेकं तदनेकम्, यदनेकं तदेकमिति न नश्यति, न भवति, न तिष्ठति, नाशस्थितिश्च तावद्भवनमेव, भवनमेव नाशस्थितिः, भूतानां स्थितिः, स्थितानां नाशः, नष्टानां भवनम्" इत्यादिक्रमेण बोधस्तु तत्समानाधिकरणो भवति। अतश्च सपिण्डीकरणमेवं ज्ञायते—इदमित्थं जायते, तिष्ठति, म्रियते, तदित्थमेवास्ति, इदमयमेवेत्याद्यैक्यरूपमिति। तत्र त्रितयक्रमोऽपि चात्मानात्म-निषिद्धरूप एव। अतस्तेषामेकसत्तया चैक्यम्, एकत्वद्वित्व-त्रित्वराहित्यम्, तत्साहित्यम्, सहितरहितयोरभेदश्च सपिण्डी-करणमिति विज्ञेयम्। तच्च—यदहन्तदेतत्, यदेतत्तन्न, यन्न-तदेतत्, यन्नैतत्तदहम्, इत्यादि स्वरूपं भवति। अत एव

"अहमेतन्नकारस्य कार्यमेकं परं भवेत्।
अतस्सपिण्डीकरणं ब्रह्मरूपं सनातनम्॥
वर्णानां हि त्रयाणाञ्च सन्धिरेतेन भाव्यते।
सपिण्डीकरणं नित्यमतश्चात्र प्रशस्यते।

इत्यादि प्रवचनम्। एवमेव

"एकोद्दिष्टं पार्वणञ्च सपिण्डीकरणं तथा।
वर्णेन हि त्रयेणेदं कर्तव्यं प्रणवात्परम्॥

एकोद्दिष्टमहं विद्धि चाहमेतद्धि पार्वणम् ।
तत्स्यात्सपिण्डीकरणमहमेतन्नयोगतः ॥
सपिण्डीकरणश्राद्धः पूर्णे ज्ञाने भविष्यति ।
न च मोक्षो न मुक्तिश्च नैव मुक्तो हि कश्चन ॥
सर्वथा सर्वदा सिद्धः सर्वत्रैक्यानुवर्तनम् ।
अनेकानेकयोर्भिन्नमेकानेकं न किञ्चन ॥
न च शून्यं न चाशून्यं केवलाकेवलं न च ।
सर्वसिद्धस्समरूपः सच्चिदानन्दविग्रहः ॥
क्रियाज्ञानेच्छया युक्तः सपिण्डस्सर्वगोत्रजः ॥"

इत्यादि प्रवचनम् । तस्मात्प्रत्यणवपि सपिण्डीकरणं विज्ञेयम् । अस्यैवानुकरणमसत्संस्कारे सपिण्डीकरणं भवति । तच्च तत्पितृपितामहप्रपितामहैर्योजनरूपं भवति । तद्योजनं हि तादृशनियमेन परंपरानियन्तृत्वेन बोध्यं भवति । परंपरायानियन्तारश्च ऋषयो ब्राह्मणादयश्चेत्युक्ता भवन्ति । तेषा तादृशनियतानुष्ठानतया, पितृपितामहप्रपितामहेभ्यस्तत्समर्पणामितिविज्ञेयम्। तच्च–ओः दृश्यताममुं जीवं कामलोकादिषु रक्षत इत्यादिस्वरूपमन्त्रेण तदभियोजनमेव । अस्य च लोके पितृलोकसंमेळनत्वेनोक्तिः । पितृगणेषु तस्य संस्थितिः , तन्नियोगकरणत्वञ्चेति तद्भावो विज्ञेयः । किञ्च विश्वेदेवादीनभिपूज्य कामलोकादिषु संरक्षणार्थं

मिथ्यात्वान्न तथा संसारस्य; आत्मनो हि स्वतोभावस्वरूपत्वाच्च। उकारबुद्ध्या ह्यस्त्येव संसारः, नास्ति चात्मेति फलितं भवति। अस्तिनास्तीति द्वाभ्यां भावाभावपदार्थावुच्येते। तयोः प्रकाशस्त्वकारोकाराभ्यामेव भवति। यस्य येन संबन्धः, स तद्गुणं हि परस्परं लभते। अतो भावाभावयोर्गुणः परस्पराधिकरणो भवति। न ताभ्याञ्च यत्किञ्चिदन्यद्वस्तु विज्ञेयं भवतीति सिद्धम्।

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तामिव सर्वतः॥"

इत्येतदर्थस्तु केवलात्मसंसारयोरेव चरितार्थः। तम इव तमश्चात्मनस्संसारो भवति। अस्यैव भावाभावौ च भवतः। न चाप्रतर्क्यादिप्रवचनमात्मन्येव न संसारे इति केनापि वाक्येन वक्तुं शक्यमिति वाच्यम्, मकारार्थवैय्यर्थ्यापत्तेः। अत एव नार्थोऽनर्थः, प्रसुप्तोऽप्रसुप्तश्च, प्रतर्क्योऽप्रतर्क्यो वितर्क्यश्च, ज्ञेयोऽज्ञेयो विज्ञेयश्च, भिन्नोऽभिन्नो विभिन्नश्च न भवति; किन्तु केवलमर्धमात्रन्तादिति स्पष्टं भवति। यद्यपि "ब्रह्मणि सर्वाणि लीयन्ते" इत्याद्युक्तिः, तथापि तदात्मन एव ग्रहणं भवति। ब्रह्मणः पदार्थत्वाभावात्तत्र लयोत्पत्तिस्थितिसामर्थ्यन्न वक्तुं युक्तम्। सर्वन्तत्सामर्थ्यासामर्थ्यञ्चात्मन्येव भवति। आत्मा हि किलासहायवान्व्यापकस्सर्वद्रष्टा सर्वशक्तश्च भवति। तस्माद्वेदे प्राणेन्द्रियपरो-

स्वयमेव समुद्भासं तत्वमेव परंविदः ।"

इत्यादि प्रवचनम्। एवमस्यार्थो हि विज्ञायते—कृतस्य करणं न भवति, करणं तावत्कृतस्यैव, सर्वमिदमतीतं कृतमेव, नात्र करणप्रयोजनम् ' मत्कृतं त्वत्कृतमित्यादि भेदप्रसङ्गः, मृतस्य मरणन्नास्ति, इदन्त्वमृतमेव, नात्रमरणमुपयुक्तम् , ज्ञानदग्धशरीराणां दाहो न भवति, तर्हि ज्ञानं प्राप्यताम् , नात्र दुःखशोकाद्यग्निना वाग्नितत्वेन दाहकरणमुचितमिति । अत एव तत्वविज्ञानिनां सन्यासिनां न दाहौचित्यम् । प्राप्ते च ज्ञाने, ज्ञानमेव सर्वसंस्कारो भवति। अत्रैतदनुकरणसंस्काराणामप्रयोजनमिति व्याख्यानफलम् । तस्मात्सर्वमेवैनमनुकरणसंस्कारङ्कृत्वा, सत्संस्कारानुभवं स्वीकुर्वित्युपदिश्यते । एतत्सर्वं पञ्चमहायज्ञादिकम् , पञ्चमेधाश्च सर्वे संस्कारा ह्यन्यकार्या भवन्ति । अस्माल्लोकादारभ्य स्वर्गपर्यन्ताख्यानम् , पुनरागमनकारणम् , शरीरादिप्राप्तिहेतुश्च, पुनर्दुःखसुखाभिनिवेशः , पदार्थसंबन्धः, पदानामुत्पत्तिः , सर्वमेतत्क्रियातत्वञ्च यजुर्वेदोपन्यस्तं भवति ।

अस्मिंश्च यजुर्वेदे क्रियामन्त्रस्य संसरणव्यवहारस्यावश्यकत्वम् , तस्य चास्तित्वम् , तदनस्तित्वमिति च सर्वमाख्यातं भवतीति सिद्धान्तः । अस्य च प्रथमो मन्त्रः, इषेत्वोर्जेत्वेति च विज्ञेयम्। अत्र चा..न्म चान्तपर्यन्तं सर्वक्रियाणां क्रमशः देशका-

त्वानुगुणं व्याख्यानं भवति, देशकालमन्तरा क्रियाया अनुपपत्तेः । एतत्त्रयमेव संसरणमिति सर्वप्रधानमुक्तं भवति । देशकालक्रियाः परिज्ञाय ब्रह्मकार्यसाधनफलमित्युपदेशः । अन्यथा त्वयमात्मा न क्रियावान् , न देशवान् , न कालवान् , न रहितः, न सहितश्चेति सिद्धान्तः विरुद्ध्येत । अत एव

"न मेधाभिभूतो न तद्यज्ञसाध्यः
सदैवायमात्मा प्रसिद्धः पुराणः ।
न चायं वृतो नैव संस्कारबद्धो
न चैवोपनीतो न चोद्वाहयुक्तः ॥
न चैवायमात्मायुतः कर्मविद्धो
न सिद्धः परो वाक्यमान्योऽयमात्मा ।
सुखं सर्वदा शुद्धबुद्धस्वरूपो
न जातो मृतो नैव सम्यक्करोति ॥
न गर्भावृतो नैव सीमन्तयुक्तो
सदैवाहमेतन्नकारस्वरूपः ।
अतीतादनन्तादनादिप्रगल्भात्
परस्तत्वसिद्धान्तरूपो विधाता ॥
तथैवाहमेतन्नकारस्थआत्मा
सदा सर्वदा सच्चिदानन्दरूपः ।

न कालानुविद्धो न देशप्रबद्धः
सुखी नैवदुःखी न संयुक्तआत्मा ॥
क्रियाकालयोगैर्न बद्धोऽयमात्मा
विरूपोऽविरूपः प्रनष्टोऽयमात्मा ।"

इत्यादि प्रवचनम् । तस्मादात्मनश्च देशकालव्यवहारेषु सत्स्वेव सर्वं विशेषणम् । अत एव "यजुर्वेदासिद्धः परमात्मा क्रिया च" इत्याद्युक्तिः । तदेवं क्रमेण क्रियाश्रवणं भवति । तस्माद्ब्रह्मसनातनम्, सर्वाभिभूतम्, सर्वकारणम्, अकारोकारमकारस्थम्, त्रितयम्, तादृशयोगवियोगरहितम्, सर्वक्रियासिद्धम्, सर्वम्, सर्वानुगतञ्च बोध्यमिति सर्वसिद्धान्तोऽवगम्यते ।

श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे तृतीयप्रकरणे
॥ षष्ठस्तरङ्गः ॥
ॐ



ॐ

## ॥ अथ सप्तमस्तरङ्गः ॥

अथातस्सामवेदं व्याख्यास्यामः । सचेच्छानिष्ठशिवप्रणीतश्च भवति । अत्र चेच्छामात्रस्य व्याख्यानं परिदृश्यते । इच्छा च तयोस्सम्बन्धरूपिणी भवति । अत एव सामवेदस्यापि

ऋग्यजुस्संबन्धरूपत्वेन मकारस्थेन प्रवचन भवात । अत एव

" ऋग्वेदो ज्ञाननिष्ठस्स्यादहमो धर्मबोधकः ।
यजुर्वेदः क्रियानिष्ठः सामत्विच्छापरः कृतः ॥
ज्ञानक्रियाविशेषस्य चेच्छासंबन्धरूपिणी ।
त्रिभिश्च भासते सर्वं स एव प्रणवः परः ॥
ओङ्कारविधिना ज्ञेयं ब्रह्मतत्वं त्रयात्मकम् ।
एतत्त्रिभिश्च संयुक्ते भवेत्संसारसाधनम् ॥
इच्छामात्रं यथायोग्यं सर्वाध्ययानस्य कारणम् ।
वेदितव्यञ्च साम्येन क्रियाज्ञानपरा वरा ॥"

इत्यादि प्रवचनम् । तस्मात्क्रियाज्ञानयोस्संबन्धरूपिणी चेच्छा-शक्तिर्भवति । सामवेदनिष्ठा शिवप्रणीता हि शैवी शक्तिरिति विज्ञायते । सर्वस्य हि या वा शक्तिः, सा त्विच्छारूपा भवति। शक्तिर्हि सर्वत्रोपन्यस्ता परिदृश्यते । विना च शक्तिं संबन्धासं-भवः, वस्तुद्वयोरुपस्थितिस्संबन्ध इति न्यायप्रवचनात् । पदा-र्थद्वयस्य हि संबन्धप्रवचनम् । तत्र तृतीयमावश्यकं भवति, येन द्वयोरेकस्मिन्भवनमुच्यते । महाविष्णोरवतीर्णो वेद इति बीजात्, ज्ञानक्रिययोस्संबन्धेन सर्वमपि कार्यं भवतीति बीजाद्वा तयो-स्संबन्धरूपिणी हीच्छा शक्तिर्भवति । यथादेशं यथाकालञ्च क्रिया-व्यवहारः भवतीति सर्वत्र नियतमस्ति । अत्र च संसरणमपि

त्रयाणामेतेषामेवेति सिद्धान्तितत्वाच्छक्तेरेव मूलमुपन्यस्तं भवति । त्रयाणामेतेषां पृथक्पृथगुपादानन्तु तावत्प्राधान्यबोधार्थमेव । वस्तुतस्तु सर्वमेकमेव । तस्मादेकैव ब्रह्मशक्तिः, ब्राह्मी वैष्णवी शैवीति चोच्यते । यद्यपि ज्ञानक्रियायामेव सा संबन्धानुरोधेन वक्तुमुचिता, तथापि पृथक्पृथगुपस्थितत्वाच्छक्तेः कार्यानुरोधाच्छक्तित्रयाणामिच्छामात्राणा सामवेदे व्याख्यानं भवति । एतच्छक्तित्रयाणामपि चोमित्यनेन बोधो ह्युपयुक्तो भवति । अकारनिष्ठा हि वैष्णवी शक्तिरिति बोध्यम् । अत एव

"शक्तिर्या वैष्णवी प्रोक्ता क्रियायास्संविवर्तिनी ।
अकारेण परा बोध्या ज्ञाननिष्ठानुवर्तिनी ॥
ब्राह्मी शक्तिस्समारब्धा क्रिया कार्यानुवर्तिनी ।
विवर्तिनी च विद्यायाश्चोङ्कारेण समन्विता ॥
शैवी शक्तिस्ततःप्रोक्ता तयोस्संबन्धरूपिणी ।
मकारात्पर्युपस्थितात्वेच्छामात्रप्रवर्तिनी ॥
एवं संबन्धहेतुस्था शक्तिस्सर्वार्थसाधनी ।
देशकालानुसारेण क्रियाज्ञानविवर्तिनी ॥
विवर्तनञ्च यत्किञ्चिद्यत्किञ्चित्परिवर्तनम् ।
शक्त्या संदृश्यते सर्वं सर्वमूला सनातनी ॥
ओङ्कारान्तर्गता नित्या चोत्पत्तिस्थितिकारिणी ।

नाशिनी सर्वसंपन्ना प्रस्थिता सामवेदगा ॥"

इत्यादि प्रवचनम् । तस्माज्ज्ञानपरा क्रियापरा च या शक्तिः, सैवेच्छारूपा सर्वार्थदायिनी सामवेदव्यवस्थिता भवति । अत एव सामवेदे सप्तस्वराः परिदृश्यन्ते । सर्वसंबन्धकारिणी शक्तिरिति व्याख्यातत्वात्सर्वाख्यानमप्यत्र बुध्यते । अस्याश्च शक्त्यां क्रियाज्ञानयोर्विद्यमानत्वेन तादृशष्षड्भेदः, सप्तमस्समाहार इति नियमेन सप्तस्वराश्च विधीयन्ते । एवं नियतप्राथम्याद्वैष्णवी ब्राह्मी शैवीति च क्रमेण संहितायास्स्वरत्रयमेव । एवमेव ऋग्वेदे यजुर्वेदेऽपि च त्रिस्वरोपन्यासो भवति । इच्छायास्सर्वानुवर्धनं भवतीति बीजादिच्छाव्याख्याने सप्तस्वराश्चाभिधीयन्ते । विनाचेच्छानिरूपणं ज्ञानच्छाक्रियामात्रज्ञाने त्रित्वस्यैव ज्ञानं भवति । तद्विवर्धनज्ञानस्यासंभवात् , ऋग्वेदादौ न सप्तस्वराः प्रशस्ता भवन्ति । अत एव " ज्ञाननिष्ठा क्रियानिष्ठा हीच्छानिष्ठा च त्रिविधा प्रयोज्यमाना विद्या भवति, आसां परमा हि विद्या सर्वविद्या प्रतिष्ठा ब्रह्मविद्या चोच्यत " इति प्रवचनम् । यावदेतद्विद्यानां तिसृणां प्राप्तिर्न भवति, तावद्विवर्तनपरिवर्तनज्ञानस्यासंभव एवेति विज्ञेयम् । विवर्तनपरिवर्तनज्ञानमन्तरा ब्रह्मभावं नोपगच्छतीति सर्वसंमतं भवति । अत एव ब्रह्माधिकारे " त्रैविद्यामुपासीत " इत्याद्युपदेशः । अत एव

"एषा च परमा विद्या त्रैविद्या हि सनातनी ।
क्रिया ज्ञानपरा शक्तिरूपा सर्वार्थसाधिका ॥
ब्रह्मविद्या परा प्रोक्ता प्रणवस्था प्रतिष्ठिता ।
तां संप्राप्य च भूतानां ब्रह्मत्वमुपलभ्यते ॥
तस्माद्विद्यात्रयीमेनां प्राप्य मुक्ति प्रपद्यते ।"

इत्यादि प्रवचनम्। तस्मादियं सर्वथा ह्युपास्या भवति। सा च शक्तित्रयस्वरूपा भवति। सा च सामवेदस्था सामविद्या वा भवति। एवमेव

"ऋग्विद्याञ्च यजुर्विद्यां सामविद्यामथर्विकाम् ।
प्राप्य संमुच्यते नित्यं स्वयंब्रह्मेति तद्विदः ॥"

इत्यादि प्रवचनम् । एवमेव

"ऋग्यजुस्सामाथर्वाणं क्रियाज्ञानाभिशक्तिजम् ।
ज्ञात्वा ब्रह्ममयं विद्धि सर्वतत्वं परात्परम् ॥
वर्णत्रयगतं तत्स्यादोमित्येतच्चतुष्टयम् ।
धर्मार्थकाममोक्षांश्च लब्ध्वा ब्रह्मणि लीयते ॥"

इत्याद्युक्त्या वा। तस्मात्सामवेदपरायणी शक्तिर्हि स्पष्टं व्याख्याता भवति सर्वैः। शक्तिर्हि क्रियाज्ञानयोरात्मानात्मनोर्द्वंद्वभूतयोरेवावश्यकी भवति । यदेतद्द्वयमात्मानात्मरूपमकारोकाररूपञ्च तयोर्योगावश्यकतया शक्तिरिति फलितं भवति ।

आवश्यकतामन्तरेण किञ्चिदपि न भवतीति लोकोदाहरणेन द्रष्टव्यम् । आवश्यकता च हि भवनमात्रे स्वभावस्था वेदितव्या भवति, भवनमात्रावश्यकता चेति न्यायप्रवचनात् । भवतीति भवनम्, भवनमात्रमेव यत्किञ्चित्तदावश्यकतेति तद्व्याख्यानम् । यत्किञ्चित्तत्सर्वमसर्वमन्यत् । इदञ्च, शब्दमात्रम्, कालमात्रम्, देशमात्रम्, ज्ञानमात्रम्, क्रियामात्रम्, ज्ञातम्, अज्ञातम्; अनुष्ठितमननुष्ठितम्, भूताभूतम्, वर्तमानमवर्तमानम्, प्रधानाप्रधानं भवति । सर्वस्यास्तित्वात्, भवत्येव भवनार्थः । यन्नभवति तस्य च परिगणनमपि नास्ति, न तदर्थकश्शब्दः, न च ज्ञानम्, न तदर्थपरिभावनम्, न स्मरणम्, न विस्मरणम्, नानुस्मरणम्, न संकल्पः, न विकल्पः, न संभवो, नासंभव इति निश्चितं भवति । "यन्न तदपि स्वयं भवत्येवेति, नभवतिचान्तरा नेति" इत्यादि प्रवचनम् । नस्येति नायोगोऽपि न भवति । नेदम्, नायम्, नैतत्, नान्यन्नत्वम्, नाहम्, नास्ति, अनस्ति, नान्तन्नादिः, नानन्तोनादिः इत्यादिशब्देन नस्य योगो दृश्यते । तद्योगमात्रं हि भवनमेव । योगमन्तरा नेत्यस्य प्रवचनं तज्ज्ञानञ्च न भवतीति हि सिद्धान्तः । "तस्य अस्मात्रावश्यकता चेति ब्रह्मसूत्रम्, "असः परमशब्दमकालमदेशान्नातो भिन्नमभिन्नमनभिन्नङ्किञ्चित्" इतिव्याख्यानात्, भवनमात्राव-

श्यकता मन्तव्या भवति । अत एव " सर्वावश्यकता नानाव-श्यकं किञ्चित् " इति वैशेषिकप्रवचनम् । अनावश्यकञ्चावश्य-ककल्पितं सोऽप्यावश्यकमिति तद्व्याख्यानम् । तस्माद्यत्किञ्चि-द्भवति, तच्च व्यापारमात्रञ्चावश्यकमिति बोध्यम् ।

एवमेवावश्यकमस्तित्वमिति सांख्यप्रवचनम् । ना साव-श्यकमहमेनदौ च नावश्यकाविति सर्वसिद्धान्तः । आवश्यकता च शक्तेरिति बीजात्, सर्वत्रावश्यकतया हि कार्यं परिदृश्यते । एकावश्यकतामारोप्य किञ्चिन्मात्रं स्वज्ञानानुसारि कार्यमभि-कल्पयतीति प्रत्यणुव्यवहारेण बोध्यम् । दृश्यतामिह—लोके प्रथमप्रश्ने कथमत्रागतस्त्वम्, किं प्रयोजनम्, कस्त्वम्, कुत्र-निवासः, इत्यादिवाक्यस्य सर्वावश्यकतया सामर्थ्यमिति । अत्रा-गमने का वावश्यकता, केन वावश्यकप्रकारेण चागत इति तदर्थः । कुत्र निवासः कस्मिन्स्थाने कया वावश्यकतया तव निवास इति वा । निवासस्याप्यावश्यकत्वं मूलं भवति । आव-श्यकत्वं विना न कस्मिन्नपि स्थाने स्थितिर्भवेत्, आत्मनस्स-र्वस्थानित्वात् सर्वाश्रयत्वाच्च । स्थाननियतकारणे चावश्यकतैव प्रधानमूलं भवति । कस्त्वमिति प्रश्ने प्यावश्यकत्वं दृश्यते, यस्त्वमसि तस्य का वावश्यकता, केन वावश्यकत्वेन त्वमिति तदर्थः। एवं त्वमः बोधरयाप्यावश्यकत्वं भवति । अन्यथा हि बहूनान्नित्यत्वप्रदर्शनं

भवेत् । नसर्वं प्रत्येव प्रश्नः क्रियते । किं प्रयोजनमित्युक्त्यापि स्पष्टै
वावश्यकता प्रयुज्यते । स्वात्मानमस्मिन्निति हि प्रयोजन भवति
यस्मिन्स्वात्मा हि प्रयुज्यते, तत्तस्यावश्यकं भवति । अन्यथ
स्वात्मनः प्रयत्नेन प्रयोजनन्न भवति । यद्वा प्रयुज्यते अनेनेति प्रयो
जनमित्यर्थमङ्गीकृत्य चानया युक्त्या चैतदावश्यकेनेति विज्ञेयम्
अन्यथा सर्वं प्रयुक्तमेव, न तत्रानेन येन तेन केन मया त्वय
सर्वेणेत्यस्य च किं प्रयोजनं भविष्यति । तस्मात्सर्वस्यावश्य
कता मन्तव्या भवति । अत एव " प्रश्नश्चावश्यकत्व
मपेक्षते " इति ब्रह्मसूत्रम् । " अवश्यकपरः प्रश्न " इत्या
द्यपि च । अत एवशब्दमात्रं सर्वञ्चावश्यकं भवति । अवश्यकम
न्तरा शब्दोच्चारणं परिभावना च न भवतीति शब्दशास्त्रसिद्धान्तः।
अनावश्यकमसंबद्धम् , तच्च न प्रयोक्तव्यम् । सर्वथा हि सुप्र
युक्तश्च शब्दो ह्यावश्यकस्सुलभो भवतीति परिभावनया वक्तव्य
इत्याद्युपदेशः । दृश्यतामिह —न किञ्चिदपि शब्दो वर्तते, यस्याव
श्यकत्वन्नास्ति, येन नावश्यकत्वेन शब्दप्रयोगः क्रियते, स एवासंब
द्धोऽनिष्टश्च भवति । अप्रयुक्तो दोषयुक्तो भवति । अन्यथा
शब्दब्रह्मस्वरूपत्वात्सर्वे शब्दाश्शुद्धास्सर्वनिष्ठाश्च भवन्तीति व्याख्या
भवेत् । अत एव " शब्दश्चावश्यकपरो निर्देश्यः" इत्यङ्गसूत्रम्
विषयावश्यकेनार्थक्रमेण शब्दः प्रयोक्तव्यः " इति छन्दःप्रवच

नम्, "परिभावना चावश्यकीयं परिभावना ह्यर्थो भवति तत्प्रकाशकश्च शब्दः" इतिकल्पसूत्रम्। अत एवार्थालङ्कारस्य शब्दालङ्कारस्य चैका हि क्रिया सर्वत्रोक्ता भवति। अर्थालङ्कारस्यैवावश्यकता, तत्प्रकाशनाय तदावश्यकतया तत्तात्पर्यप्रकाशनमेव शब्दालङ्कारः। अन्यथा तु केवले शब्दालङ्कारप्रयोगे कवेरसूया स्यात्। अत एव "शब्दालङ्कारार्थालङ्कारौ च संबद्धौ" इति साहित्यसूत्रं भवति। "शब्दार्थौ च प्रयोक्तव्यौ तदर्थप्रतिपत्तये" इत्याद्यपि च। "अर्थावश्यकप्रतिपत्तये हि शब्दः प्रयोक्तव्यः" इति च। एवम् "व्यर्थः कालो न गमयितव्यः" इत्याद्युक्तिः। कालस्य वैयर्थ्यकरणं तावदिदं भवति, परिमिश्रकाले यदावश्यकन्तदेव कर्तव्यं भवति। नान्यकालावश्यकरणं हि युक्तं भवति। अत एव "वृथा कालक्षेपो दोषरूपः" इति प्रवचनम्। अन्यथा हि कालस्यानाद्यनन्तत्वान्न तस्य क्षेपसंभवः। एतत्करणे वान्यकरणे वा युष्मत्कार्येऽस्मत्कार्ये च कालगतिर्भवत्येव। अतीतत्वादनन्तत्वाच्च तस्य, समाप्तिर्न कदापि भवति; नैतादृशी च तत्र भावनास्ति। यद्यपि व्यतीतो हि कालः पुनर्नागच्छति, तथाप्यावश्यकतयातीतकालस्यापि नियतकालपरिभावना। नियतश्चायमावश्यको भवति। अतीतान्तर्गते च, तदर्थोऽयं कालो नियतो भवति। यदि चेदयमस्मादारभ्य चैतत्पर्यन्तन्नियतो भवति,

न तस्य भवनम्; किन्तु तद्वैयर्थ्यमेव । तस्मिंश्च काले गते शोकः । आवश्यकतायास्सिद्धत्वात्, सत्यावश्यकत्वे सिद्धेऽपि कालो गतो भवति, न तत्र शोकः; किन्तु तेनातिहर्षः । अत एव "हर्षशोकावावश्यकपरौ" इति स्पष्टमुक्तं भवति । अत एव "कालसंख्ये कार्यावश्यकपरे भवतः" इति ज्योतिः प्रवचनम् । तस्मादावश्यकता सर्वं भवनमात्रं भवति । भवनं हि योगरूपमेव । योगस्तु द्विनिष्ठः । तस्माद्द्वयोरावश्यकता भवनमात्ररूपा सत्तात्तृतीया च भवति । येयं सा हि शक्तिः । अत एव

"आवश्यकपरं कार्यं संसारेष्वभिधीयते ।
कार्य एव हि संसारो द्वयोर्योगेन भासते ॥
स्वयं प्रकाशश्चात्मैकस्स्यादनात्माभिधोऽपरः ।
द्वयोर्योगश्च संसारो योगस्त्वावश्यकेन च ॥
द्वयोरावश्यकं यच्च तच्छक्तिरिति कथ्यते ।
शक्त्या हि भासते विश्वं शक्तिस्सर्वानुगामिनी ॥
अकारोकारविधिना तयोर्मध्यप्रवर्तिनी ।
अन्तप्रवर्तिनी चैवं तदादेस्संविवर्तिनी ॥"

इत्यादि प्रवचनम् । तस्माद्द्वयादिमध्यान्तप्रवर्तिनी विवर्तिनी चानुवर्तिनी ह्यारंभावसाना चाकारोकारमकारपरा चाहमेतन्निष्ठा भवति शक्तिरिति विज्ञेयम् । तच्छक्तेः स्वरूपञ्चासित्येतद्द-

वति । अत एव अहमस्मि, एतदस्मि, नास्मीति । एव-मित्थमस्मि, चेत्थन्नास्मि, कथमस्मि, कस्मादस्मि, कस्मान्ना-स्मि, कथन्नास्मि, अस्म्येवेति तत्प्रकाशः । असित्येनं विना चाहमेतन्न न किञ्च न । एवमस्यास्त्यपि तावदस्मि परत्वम् । अहमस्मीति मत्वा चैवं परिपृच्छति—त्वमसि, एतदसि, इत्थमसि, इत्थन्नासि, कथमसि, कस्मादसि, कस्मान्ना-सीति, अस्त्येवेति वा इति । एवमन्यत्रापि बोध्यम् । अस्मीत्ये-तद्विना नासीत्यस्य कश्चिद्वक्ता, नासीत्यस्य च वक्तारमन्तरा मध्यमप्रथमपुरुषप्रयोगोऽपि न भवति, सर्वत्राहमित्यस्य विद्यमान-त्वात् । असीत्यस्यैतन्निष्ठत्वाच्च स्वस्वस्थाने प्रतिमुखोन्मुखनियमेन सर्वोत्तमपुरुषः भवति, तथा प्रथमपुरुषोमध्यमपुरुषश्च । वस्तु-तस्तु सर्वमस्मात्रमावश्यकं भवति । प्रथमोत्तममध्यमाश्च नेति बोध्यम् । सर्वत्राप्यस्मीत्यहमात्मा, असीत्येतत्, अस्तीति नाना-त्मनिषेधः । प्रतिपुरुषमहमेतन्नेति ज्ञानस्य सत्वात्, सर्वत्र विद्य-मानत्वाच्च भेदो भासते । प्रतिपुरूषमेवं जानाति चाहमेतन्नेति भेदेन स्वात्मानमहं मन्यते, अन्यत्सर्वमेतन्नान्तर्गतं बुध्यते, तस्मात्प्रथममध्यमोत्तमपुरुषा अप्येवमभिधीयन्ते । अन्यथा सर्वं धातुमात्रन्त्वेकमेव भवेत् । धातोश्च सर्वाः क्रियाः भवन्ति । तस्मात्सर्वक्रियामात्रस्य चैकत्वं बोध्यं भवति । अतश्चासी-

स्यैतदावश्यकता, सैव शक्तिरिति निश्चितं भवति । सर्व-कार्यसाधनी शक्तिरिति व्याख्यानतया संबन्धमात्रस्य, सा कारणरूपा भवति । संबन्धमात्रं हि संसारः । अतस्संबन्धकारिणी शक्तिरिति सर्वत्रोक्तं भवति । अत एव

" एषा च परमा विद्या शक्तिरूपा सनातनी ।
महत्प्रतिष्ठिता चैषा सर्वस्थित्यन्तकारिणी ॥
शक्त्या चोत्पद्यते सर्वं शक्तिरिच्छापरायणी ।
शक्त्या विनश्यते सर्वं शक्त्या सर्वस्थितिर्भवेत् ॥
इच्छा चावश्यकी नित्याहीच्छैवावश्यके सदा ।
तस्माच्छक्तिः परा सर्वा सर्वसिद्धान्तकारिणी ॥
सृष्टिस्थितिलयानाञ्च शक्तिरेव हि कारणम् ।
आवश्यकपरं सर्वमतश्शक्तिपरा क्रिया ॥ "

इत्यादि प्रवचनम् । तस्मादेव ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्तिश्चेति चोच्यते । शक्तिः सा चतुर्विधा त्रितयमूलिका त्रितयान्तर्गता त्रिविधा च भवति । यद्यपि चतुर्विधेत्युक्त्या त्रितयभिन्ना हीति सूच्यते, तथापि त्रितयस्य भेदस्यावश्यकत्वात्तत्रान्तर्गतास्सर्वा अपि भवन्ति ; यो यस्यावश्यकस्स तदन्तर्गत इति व्याख्यानात् । आवश्यके च न भेदः, किन्तु केवलं तथा भेदप्रदर्शनमात्रमेवा । वस्तु तस्तु तत्क्षणे स्वयं न किञ्चित् , किन्तु स्वकीयमावश्यकमेव मन्यते ।

यद्यपि चावश्यकात्स्थानादन्यत्राप्यस्ति चावश्यकं दूरम् , तथापि तत्संवित्तत्रैव तिष्ठतीति सम्यग्वेत्ति—योयं सत्त्वयमपि वेद्यो भवतीति बीजात् , आत्मा तत्रैव तदन्तर्गतो भवतीति । अत एव दृष्टादृष्टयोरभेदस्सर्वत्राख्यातो भवति । इदमेवाभेदबीजं भवति । वास्तवस्यैकत्वात्ताद्भिन्नेऽपि स्वावश्यकतात्पर्यतया, यच्च स्वभासा तदन्तर्भूतम् ; तेनैव तदनुवर्तनं बीजं भवतीति विज्ञेयम् । यथा च स्त्रीपुरुषयोगादपत्यं भवति, तत्रैकः पुरुषः, द्वितीया स्त्री, तृतीयः पुरुषः, पुत्री वा, तथा तदावश्यकः कामो भवति; स कामश्च त्रिष्वन्तर्भूतो भवति । अतो न बाह्ये कामगणना भवति । कामगणना हि त्रिभिरेव भवति । यद्यपि पदार्थव्याख्याने कामपरिगणना, तथापि तद्बहिरेव तदस्तित्वकालः तदन्तर्गत एवेति बोध्यम्-एवमेवाकारोकारमकाराणां यदस्तित्वम् , तदेव शक्तिस्वरूपमिति विज्ञेयम् । अस्तित्वं हि यस्याभावः, ततो भिन्नम् । तस्मात्त्रिष्वन्तर्गता शक्तिरिति सर्वत्राख्याता भवति । अत एव

" सा सर्वावश्यकी शक्तिस्सर्वमूलोपसाधिका ।
सर्वस्यान्तर्गता शक्तिः सिद्धान्तज्ञापिका सदा ॥
शक्तिश्च परमा माया माया चावश्यकी क्रिया ।
ओमित्येतत्स्वरूपस्था सर्वेषां चानुवर्तिनी ॥
सर्वमात्रञ्च यत्किञ्चित्सदसच्च हि सत्परम् ।

सर्वशक्तिरिति प्रोक्ता चाखिला सार्वभौतिकी ॥
शक्तिर्भवति शक्त्या हि शक्त्या शक्तिर्भविष्यति ।
भूतं भव्यं भविष्यच्च शक्तिश्शक्तिसमात्मिका ॥
सर्वानुहारिणी नित्याद्या परमार्थसाधनी ।
सर्वनिष्ठा प्रतिष्ठा च विद्या चैषा परा वरा ॥
विद्याविद्या द्विधा प्रोक्ता क्रिया ज्ञानानुसारिणी ।
तत्परा परमा विद्या तयोस्संबन्धरूपिणी ॥
अनन्ता परमा शक्तिः प्रणवान्तर्गता स्वयम् ।
साक्षात्प्रणवरूपा च सर्वमूलप्रभासिका ॥"

इत्यादि प्रवचनम् । तस्मात्सर्वसाधनकर्त्री चाद्या शक्तिस्सर्वानुगामिनी सर्वसिद्धान्तपरा चेति विज्ञेयम् । त्रयाणामावश्यकत्वात् , आवश्यकतायाश्शक्तित्वप्रवचनाच्च , सर्वाद्येति तद्विशेषणम् । दृश्यतामिह—सर्वकार्यात्पूर्वं हीच्छा भवति, तदिच्छैवावश्यकता, पश्चात्सर्वक्रियायाः करणम् , सा हि साधनत्वेन व्यवस्थीयते इति । अत एवाद्या हि चेच्छाशक्तिर्भवति शक्तेरिच्छायाश्च केवलश्चैष भेदः—सार्वत्रिके हि परमे शक्तिरुच्यते, अपरमे सार्वत्रिकेच्छा चोच्यते इति ।

सर्वातीता हि माया भवति । एवमनन्तनाम्न्याः, कार्यानुसारिण्याः, शक्तेरावश्यकता चेति विज्ञेयम् । अतीतानतीतयोः

परस्मिन्नपि भवनमात्रं विज्ञेयम् । तच्चावश्यकं भवति । तदभिधानान्मायेति चोच्यते । अन्यथा तु माया न किञ्चिदिति व्याख्यातं भवेत् । माया न काचिदपीति व्याख्यानेऽपि नेत्यस्यावश्यकतया तदुपस्थितिर्भवति । आवश्यकतायास्स्वरूपन्तु न किञ्चिदपि नियतं भवति, किन्त्वनियतातीतस्वरूपम्; सर्वातीतत्वात्कालदेशक्रियातीतत्वाच्च । तस्मादेषा शक्तिस्तादशातीतनाम्नी भवतीति व्याख्यानफलम् । प्रतिशब्दमावश्यकतया हि तदभिधानम् । तस्मात्प्रतिशब्दं तन्नामभेदः, शब्दस्य कार्यपरत्वात् कार्यस्यावश्यकत्वाच्च । पुनरेतासु ज्ञानेच्छाक्रियास्वपि, त्रितयसंबन्धाभिधानतया प्रत्येकमपि तदावश्यकत्वात्, तदनुसारेण शक्तेर्नामाभिविधानम् । यद्यपि मायाब्रह्मणोर्भेदस्सर्वत्रोक्तः, निर्मायो भूत्वा ब्रह्म भवेत्यादिप्रवचनात् "माया च भेदकर्त्री, अतो मायां त्यक्त्वा ब्रह्म संपद्यते" इत्यादिप्रवचनाद्वा; तथापि ब्रह्मभिन्ना मायानुपयुक्ता, "त्रितयं ब्रह्म" इत्युक्त्या त्रितयावश्यकत्वेन मायापि ब्रह्मपरा साक्षाद्ब्रह्मस्वरूपा चेति बोध्या भवति । "मायां परित्यजेत्" इत्युक्त्या मायाशब्दस्य, ममत्वेच्छाभेदरूपार्थः प्रतीयते। मदीयं त्वदीयमन्यदीयमित्याद्यावश्यकम्।स्वाज्ञानकल्पितम्--कर्तव्यमिदमकर्तव्यमिदमुत्पन्नोऽयन्नष्टोऽयंध्रुवोऽयमध्रुवो यमिष्टमिदमनिष्टमिदमित्यादिपरिभावनमिति तत्परित्यागाय ह्येवमु-

पदेशः।उपदेशाशयश्चेत्थम्-सर्वमिष्टम्, सर्वं त्वदीयम्, अहमपि-त्वम्,कथं मदीयम्, त्वञ्चाहम्, कथं त्वदीयम्, अन्यश्चाहम्,अहमन्यः, कथमन्यदीयम्, सर्वमावश्यकम्, कृतमपि सर्वं भवतीह भाव्यम्, कथमकर्तव्यम्, सर्वं कर्तुमुचितम्,सर्वमेकम्, एकञ्च सर्वम्, नानेकैकम्, सर्वथा सर्वदा सर्वत्र सर्वं सर्वस्य, सर्वञ्च सर्वं सर्वस्य चेत्थमावश्यकं बोध्यमिति । या पूर्वा माया ममत्वेच्छाविशिष्टा, सा भेदकर्त्री भवति, तां परित्यज्य ब्रह्मभावम्, ब्रह्मपरां मायामेकावश्यकीं त्रितयात्मिकामनुभावय इत्युपदेशफलं भवति । एतत्त्रितयमन्तरा केवलावश्यकतामात्रमायायास्स्मरणमपि नोपयुक्तम् । किञ्चावश्यकता कस्य चिद्भवति, त्रितयमन्तरा कस्यावश्यकता, इत्यबोधसंभावना भवति । तत्र चैवं न्यायेनावधेयम्, यस्य चावश्यकता भवति स कः पदार्थः, स तु सर्वभवनमात्ररूप.। यच्च किञ्चिद्भवति अस्ति नास्ति वा, तत्सर्वम्; अतस्सर्वाभिधानेनावश्यकताभिधानमिति । एवमवधार्य ब्रह्ममाययोरभेदस्सूचनीयः । अत एव

" सत्वं मायात्मकं ब्रह्म माया ब्रह्मात्मिका भवेत् ।
ब्रह्ममाया द्वयेर्योगे संसारानुप्रदर्शनम् ॥
यद्ब्रह्म त्रितयं रूपमात्मानात्मानिषिद्धकम् ।
मायात्रयावश्यकी च तया भेदोह्यनन्वयः ॥

मायानन्यद्भवेद्ब्रह्म परं हृदयगोचरम् ।
ब्रह्मानन्या भवेन्माया सर्वमूलोपकारिणी ॥
एतेषामेकदेश्यञ्च ब्रह्मशब्दप्रतिष्ठितम् ।
प्रणवान्तर्गतं सर्वमोमित्येकार्णवं स्वयम् ॥"

इत्यादि प्रवचनम् । तस्माद्ब्रह्ममाययोरभेदस्सिद्धो भवति । "ब्रह्म च ब्रह्म ब्रह्मास्मि" इति माया निरूपिता । अत एव "मायया ब्रह्म भासते, माययैवं विधो भवति, अत्रास्मि ब्रह्म , तत्र ब्रह्म, यत्र ब्रह्म, कुत्र ब्रह्म, सर्वत्र ब्रह्म, अस्ति ब्रह्म, नास्ति ब्रह्म, अस्ति नास्त्यस् ब्रह्म" इत्यादि प्रवचनेन मायायाः स्वरूपमुक्तं भवति । किञ्चैवम्

"सर्वा गुणवती माया सर्वस्यावश्यकी क्रिया ।
सा सर्वार्थप्रदा चास्ति सर्वस्यैवानुकारिणी ॥
सर्वत्र यत्र तत्रेति चात्र कुत्रेति निश्चिता ।
नात्र तत्र न यत्रैवं यत्तन्नेदं न तद्भवेत् ॥
नेत्थमित्थन्तदित्थञ्च ह्यस्ति नास्ति तदस्क्रिया ।
सर्वानुकारिणी माया ब्रह्मभेदपरायणी ॥
अहमेतन्नेति योगात्प्रणवार्णवसंयुता ।
बोध्या च परमा माया विद्याविद्या परात्मिका ॥
सर्वविद्या प्रतिष्ठा च सर्वशक्तिस्सनातनी ।

सर्वानुगामिनी सर्वा सर्वभूता ह्यभौतिकी ॥
सत्ता निष्ठा समा साध्या सर्वस्यैवानुवर्तिनी ।
आदिमध्यान्तनिष्ठा चानन्तानादिपराभिधा ॥
ओमित्येकानुभावेन बोध्या माया प्रसारिणी ।
संसरणक्रिया सर्वा शक्त्या सर्वं प्रशस्यते ॥
अतो निर्वर्तिनी माया माया चैव प्रवर्तिनी ।
अनुवर्तिनी तथा प्रोक्ता सम्यक्संपरिवर्तिनी ॥
कालदेशक्रियानिष्ठा तस्यैवावश्यकी परा ।
एतद्बोधेन सर्वस्वं ब्रह्ममात्रं तदेकधा॥
बुध्यते प्रणवस्थञ्च सर्वं सर्वपरायणम् ॥"

इत्यादि प्रवचनम् । तस्मात्सर्वनिष्ठा ब्रह्मात्मिका माया, मायात्मकञ्च ब्रह्म भवतीति बोध्यं भवति । शक्तिश्चैषा सर्वावश्यकी सर्वसाधनकर्त्रीति सिद्धान्तः । अत एव

"अनन्तनाम्नी सा माया हेतुभूता सनातनी ।
शक्तित्रयपरा वेद्या शैवी ब्राह्मी च वैष्णवी ॥
योगमाया योगनिद्रा सर्वरूपा भगवती ॥
अतीता परमारंभा सर्वान्ता सर्वसाधनी ॥"

इत्यादि प्रवचनम् । तस्मादेतत्त्रितयनियमेन शक्तेरनन्तत्वं बोध्यम् । तत्त्रितयञ्च ज्ञानेच्छाक्रियापरं बोध्यम् । तत्र ज्ञानपरा च शक्ति-

वैष्णवी, क्रियापरा च ब्राह्मी, इच्छापरा च शैवी शक्तिरिति विज्ञेयम्। एवं हि माया—सर्वपरमात्मिकातीता च भवति । अत्र च त्रिविधो भेदः, योगमाया भगवती योगनिद्रा चेति । योगमाया हि वैष्णवी, भगवती हि ब्राह्मी, योगनिद्रा शैवीति च विज्ञेयम् । यया मायया येनावश्यकेन ह्यहमेतदोश्च योगो भवति, सा योग-माया सर्वसंस्कारकारिणी, अहमेतदोर्योगं विना संसारोपस्थितिर्न भवति, किन्त्वहमेतदोर्योगस्यैव संसार इति व्यवहारः । तस्मादत्र योगमाया हि शक्तिरित्युक्तं भवति । अत एव

" को वेत्ति भूमन्भगवन्परात्मन्
योगेश्वरी क्रीडति च त्रिलोक्याम् ।
क्व वा कथं वा कतिवा कदेति
विस्तारयन्क्रीडसि योगमायाम् ॥ "

इत्यादि प्रवचनम् । अस्यार्थश्च, एतज्जगन्न यो वेत्ति न कोऽपि विज्ञातुं शक्तः, एतदित्यस्यापरिमितत्वादतीतत्वात् । युज्यते इति योगः योगस्य ईश्वरः योग एव ऐश्वर्यं यस्येति वा योगेश्वरः । अहमेतदोर्योगः, तदेवैश्वर्यं ब्रह्मणस्त्रितयस्य । ययेत्थंभूतयोगेश्वर-शक्तिः, क्रिया योगेन या या भवति चे ; तां ज्ञातुं न कोऽपि शक्तः। कुत्र भवत्यनियतत्वादिदमपि न बुध्यते सर्वत्र भवति । अतीतत्वादिदमपि न वाच्यम् , अतः क्व भवतीति चाबोधाव-

श्यकतया बोधकामनावश्यकतया च, विचारस्यावश्यकतया च वा वक्तुमुचितम् । केन प्रकारेण वा कतिचित्कदा कस्मात्कालारम्भः इत्यादिकम्, न केनापि ज्ञातुं शक्यम्, ज्ञानस्याविषयत्वात् । यश्च ज्ञाता स स्वात्मानं कथं जानाति । यः कश्चिज्ज्ञातुं शक्तः तेनैतदतीतेन त्रितयक्रमेऽभेदो भवति । सति त्रितयत्वेऽप्यैक्य-मेव, तदेकसत्ताप्राधान्यात् । यदर्थश्च प्रश्नः, स स्वयमेव चैत-द्रूपेण पृथग्भासते, तत्रायं प्रश्नः । तस्माज्ज्ञातृज्ञेययोरभेदाख्यान-तया जिज्ञासाकरणमनर्थमिति तदाशयो विज्ञेयः । सर्वमनन्तम-तीतं सर्वाश्रयं बुध्यतामित्युपदेशः, एतद्विस्तारयन्त्वं योगमायां क्रीडसीत्युक्ता त्वमहमोरभेदात् । योगमायया हि योगावश्यक-तायां सर्वेऽपि क्रीडन्तीति तदाशयः । एतन्मध्यमपुरुषप्रयोगस्तु योगपरः । योगे हि पृथक्त्वप्रतिभासः, अतस्सर्वदृष्ट्या सर्वं त्वमे-वेति युष्मत्स्वरूपम् । तस्माद्योगमाया ज्ञाननिष्ठा वैष्णवीयशक्तिः । वैष्णव्यामपि महावैष्णवी योगमाया भवति ।

तत्र च क्रियापरा च भगवती। भगो ह्यैक्यम्, तदस्यास्तीति भगवती। क्रियैवैश्वर्यमिति चात्राभिधीयते, तस्यैव तत्स्वरूपत्वम्। अहमस्स्वरूपमात्मा भवतिविष्णुः । अहमेतदोर्योगस्तदावश्य-कता च योगमात्रा । एतदावश्यकतैव भगवती चेति विज्ञे-यम् । ततः परा योगनिद्रा शैवी शक्तिर्नकारात्मिका, योगे

निद्रयतीति तदर्थात् । अहमेतदोर्योगरूपत्वाच्च । वियोगावश्यक-
ताया अपि योगनिद्रात्वेन प्रवचनम् । योगनिद्राप्रभावेन सर्वमे-
तत्संसारमात्रं स्थलं भवति । अत एव

"वैष्णवी योगमाया हि महाविष्णुप्रतिष्ठिता ।
ज्ञानरूपा परा शक्तिरहमेतदनुक्रमा ॥
एतदावश्यकी शक्तिः ब्राह्मी भगवती मता ।
ऐश्वर्यं विद्यते सर्वं यया संभासते जगत् ॥
योगनिद्रा परा माया शैवी शक्तिर्निषेधिका ।
अहमेतद्द्वितीयस्य कारिणी सार्वकालिकी ॥
एतत्त्रितयशक्तीनां संसारेषु प्रवर्तनम् ।
संसरणक्रियास्सर्वाः भान्ति तत्तत्क्रमेणाहि ॥"

इत्यादि प्रवचनम् । एतत्त्रितयसमूह एव प्रणवपरा सिद्धान्तरूपिणी
सन्धिस्था महामाया समाहाररूपिणी बोध्या भवति । कार्यविशेष-
तया चाहमेतन्नेति त्रितयावश्यकतया वा तस्याः महत्वं बोध्यम् ।
महामन्वन्तरादारभ्य चास्य संसारस्यारंभः । यद्यपि व्याख्यानादेव
ह्यतीतस्संसूच्यते, तथाप्यतीतानन्ते ह्यारंभावसानोक्त्या सर्वं बोध्यं
भवति । ततो मन्वन्तराधिपतेर्महाविष्णोश्शक्तिर्हि महामाया भवति ।
महाविष्णोश्शक्तिविशिष्टत्वन्न बोध्यम् , किन्तु महाविष्णौ तत्स-
न्निधाने च वा यातीता ह्यावश्यकी ; सा तस्या एव तारतम्येन

महत्त्वलघुत्वयोगरूपविशेषणम् । तस्मादतीततायास्सर्वत्रानुकरणात् , सर्वत्र तद्विद्यमानत्वाच्च व्यक्त्यव्यक्तिसहितत्वं तद्रहितत्वञ्च सर्वथा सर्वदा बोध्यम् । तस्मान्महामाया परमातीता महामन्वन्तरादिशक्तिः भवति । अत एव

"महामायाप्रभावेन यथामन्वन्तराधिपः ।
सर्वं संसृज्यते साक्षात्स्वयं सर्वं विनश्यति ॥"

इत्यादि प्रवचनम् । परमावश्यकतया सर्वाणीमानि कार्याणि महामन्वन्तराधिपः करोतीति विज्ञेयम् । एवमेव

"महामायानुभावेन यथा मन्वन्तराधिपः ।
स बभूव महाभागः सावर्णिस्तनयो रवेः ॥"

इत्यादि प्रवचनम् । अत्रायमाशयः—यथा येन प्रकारेण नियतावश्यकतया महामायानुभावेन, महामन्वन्तराधिपशक्त्या तदावश्यकः सावर्णिः बभूव, स च सावर्णिः रवेस्तनयः, कालाभिनियामकश्च भवति, रविस्तु अनन्तकालनियन्ता भवति, साक्षान्नियमरूपश्च सावर्णिर्मनुः इति । दृश्यतामिह—चतुर्दश मनवश्च तथा पूर्वं परिकल्पिता भवन्ति । तत्र द्वयोर्योगेन सप्तमन्वन्तराण्युक्तानि । अस्मिन्महामन्वन्तरेऽपि तादृशमहाविष्णुर्विष्णुर्ब्रह्मा शिवइत्यनुसरणेन ज्ञानेच्छाक्रियासमाहारनियमेन च व्यवस्था भवति । तस्मिन्महामन्वन्तरविभागेऽप्ये

ककालस्य मुख्यत्वम् । यः कालः तत्परकालस्यैवसोऽधिपः ।
तत्र चतुर्दशमनुष्वष्टमश्च मनुस्सावर्णिः । स च त्रयोदश-
मनूनां सप्तमन्वन्तराणामाधिपश्च भवतीति विज्ञेयम् । व्यती-
तेषु तप्तमन्वन्तरेषु सावर्णेरेव पुनरारंभः । मन्वन्तराणामा-
दिमन्वन्तरस्सावर्णिरिति तद्व्याख्यानम् । मनूनां परिगणने
ह्यष्टमो मनुस्सावर्णिः । कारणञ्चास्य संसरण व्यवहार एव ।
अस्मिंश्च संसारे सर्वेऽपि पदार्थाः प्रथमाः , एवं द्वितीयाः तृतीयाः,
चतुर्थाश्च भवन्ति । सर्वे ह्यादयोऽनन्ताश्च भवन्ति । एतज्ज्ञाने-
च्छाक्रियाम्रमाहारपरिवर्तनेन मनुगणनायां सावर्णिरष्टमो मनुः ।
मन्वन्तरपरिगणने, तादृशनियमसत्वेन हि मन्वन्तराधिपः। अत
एव महामायानुभावेनेत्युच्यते । दृश्यतामिह—प्रयोजनाद्धि भूत-
त्वम् । एषा हि महामाया महामन्वन्तरावश्यकता प्राबल्येन
भवति । तस्याः प्रकृष्टत्वनियमेन ज्ञानादिसंपरिवर्तनपरिवर्तनवि-
वर्तनानुवर्तनविधानतया, अष्टमस्य मनोस्सावर्णेः मन्वन्तराधिप-
तित्वं स्पष्टमवगम्यते । बभूव इत्युक्त्या चैकमहामन्वन्तर-
स्यायान्नियमः , द्वितीये कश्चिदन्य इत्यनुमेयम् । इदानीं हि
चतुर्थो मन्वन्तरः , "सप्तमो वैवस्वतो मनुः" इति सर्वत्र
स्पष्टमुक्तं भवति । तस्माद्विवस्वतोऽपि चाष्टाविंशतितमं वियु-
गामिदं भवति । सर्वनियमस्तु महामन्वन्तरारंभकाले एव नि-

यतो भवति । तत्रैव महामायानुभावेनास्मिन्महामन्वन्तरमात्रस्या धिपत्वम् । सावर्णेरभूत् , यश्चाष्टमो मनुः । अत्र स्तोत्रानुसंधान तया, शक्तेरावश्यकताया महत्वप्रभावप्रदर्शनाय स्वप्ने तत्प्रक शनाय च, सत्यभूतातिशयोक्त्यलङ्कारेणेदमुक्तं भवति । अयमेव पूर्णातिशयोक्तिः । प्रभा हि चात्रेयं भवति । यो ह्यष्टमः तस्या धिपत्यसूचनमत्रेदं भवति । अत एव

" नैव कश्चित्परः पूर्वः नैवाद्यन्तप्रधानकः ।
यथावश्यकता लोके यथा कार्यं भविष्यति ॥ "

इत्यादि प्रवचनम् । अत एवास्मिँल्लोके बभूवेऽति परोक्षकालः पूर्णस्सामान्यरूपश्शीघ्रोपस्थितिकश्च भवति । अस्मिंश्च मन्वन्तरे हि शीघ्रमेवैवं भवतीति महामायाप्रभावानुप्रदर्शनोत्कण्ठां प्रदर्शयितुं तत्तात्पर्यनिरूपणं बोध्यं भवति । तस्मान्महामायामहामन्वन्तरा-दिशक्तिः प्रणवरूपा भवति ।

सावर्ण्यादयश्च सप्तमन्वन्तराधिपतयः रवेस्सूर्यस्य विनिहितका-लस्य तनया इति प्रशस्ता भवन्ति। अत एव सूर्यस्य पुत्रः, योऽष्टमो मनुः । नान्ये मनवश्चेति तद्भावः । एवमेव हि पूर्वमाख्या-तम् । क्रियाज्ञानेच्छासमाहारपरिवर्तनेन सप्त भवन्ति , तेषामपि च पुनः पुनरनन्तं परिवर्तनं भवति। तस्मात्तत्सप्तानामपि समा-हारो ह्यष्टमः। अतस्तस्याधिपतित्वमिह सप्तानां व्यवस्थितामिति तु

मुख्यकारणं भवति । तस्मादेषा महामाया परमसाधनकर्त्री भवति । तत्र योगमाया भगवती योगनिद्राचेति विज्ञेयम् । अत एवात्र ज्ञानेच्छाक्रियानुसारेण विष्णुब्रह्मशिवानां नियता हि तिस्रश्शक्तय इति स्पष्टं भवति । योगमायादयस्तु सार्वत्रिक्यश्चाहमेतत्रेति विशिष्टाः प्रत्यणुव्यवस्थिताश्च भवन्ति । एतत्संसारनियन्तृणां व्यक्तिशक्तिस्त्रिविधा, लक्ष्मीस्सरस्वती सती चेति । तत्र हि नियतक्रमस्त्वेवं विज्ञेयः—सरस्वती लक्ष्मीस्सतीच, सती लक्ष्मीस्सरस्वती चेति । अत एव

> "सार्वत्रिकी परा शक्तिः ज्ञाननिष्ठा सरस्वती ।
> लक्ष्मीश्चैवं क्रियानिष्ठा हीच्छानिष्ठा सती स्मृता ॥
> विष्णोस्तिस्रश्शक्तयश्च ह्यहंसंभावनेन च ।
> परिवर्तननियमात्कार्यमस्याः पृथक्पृथक् ॥"

इत्यादि प्रवचनम् । तस्माज्ज्ञाननिष्ठा सरस्वती, लक्ष्मीश्च क्रियानिष्ठा, इच्छानिष्ठा च सती चेति विज्ञेयम् । एतत्त्रितयशक्तेः संस्थितिस्तु चाहमि विष्णावेवेति विज्ञेयम् । तत्र विष्णुर्हि ज्ञानपरत्वादिच्छापरत्वात्क्रियापरत्वाच्च तिस्रः परिवर्तयति । यश्च ब्रह्मा हि क्रियामधिष्ठितो निश्चितः, स च ज्ञानशक्तिमन्तरा क्रियाकरणे ह्यसमर्थो भवति । ज्ञानमन्तरा क्रियाकरणं नोपयुक्तम् । सम्यक्क्रमाद्यनुवर्तनं न भवतीति नियमेन ब्रह्मा ज्ञानशक्तिं सर-

स्वतीं गृह्णाति । अन्तरा च क्रियाशक्तिं ज्ञानशक्तेरपि न कार्यकर्तृक्षमत्वम् ; अतस्स्वयं विष्णुर्हि क्रियाशक्तिं लक्ष्मीं गृह्णाति । अहमेतदोर्योगेन क्रियाज्ञानयोः परस्परसापेक्षतया शक्त्यनुवर्तनं भवति। विष्णुस्तावत्स्वय ज्ञानवान् , किञ्च ज्ञानस्वरूपश्च । अहश्चात्मा, तस्य च, एतदा अनात्मना, क्रियायोगे तच्छक्तेरावश्यकता भवति । येन सह योगो भवति, यो यस्य तच्छक्तिं तत्कार्यं तत्कालञ्च गृह्णाति, यावत्कालञ्च शक्तेः कार्यं सर्वांशे सामानाधिकरण्यं सर्वभावेनैक्यञ्च न स्वीकरोति; न तावद्योगस्य संभवः । न हि तद्योगे किञ्चिदस्तित्वम् । यो ह्येतत्क्रियामात्रपरो ब्रह्मा, सोऽपि चाहमः, शक्तिकालकारणकार्याणि च गृह्णाति; तादृशयोगस्य नियतत्वात् । यद्यपि एतद्व्यस्यावश्यकता, क्रियारूपा च लक्ष्मीर्ब्राह्मी शक्तिः, सरस्वतीज्ञानरूपा वैष्णवी शक्तिः ; तथापि योगफलेन परिवर्तनम् ।

इदमेव हि विवाहविधानं भवति । लोकेऽपि च तदनुकरणं दृश्यते—सर्वासामपि स्त्रीणामेकरूपो हि स्वभावः , सर्वा अप्येकावयविन्यः इति । यद्यपि एकमेव हि कार्यं सर्वासाम्, सर्वथा सर्वदा च तासामैक्यमेव , तथापि स्वावस्थानुगुणं लोकव्यवहारात्सर्वाभिस्सह पृथक्पृथक्संबन्धः इति । मदीया कन्या पत्नी चान्यस्य , अन्यस्य कन्या मदीया हि पत्नीति सार्वत्रिको

व्यवहारः । अयमेव हि लौकिकस्संबन्धः । मुख्यश्चेद स्त्रीमात्राणां पत्नीत्वमिति तदाशयो विज्ञेयः । बीजं हि चात्राहमेतदोर्योग एव, "द्वयोरपूर्णयोः पूर्णत्वमेव योगः" इति ब्रह्मसूत्रात् । ततो हि परा चेच्छाशक्तिश्शिवस्य सती नकारात्मिका । सर्वस्मिन्शेते शिव इति व्याख्यानादहमेतदोरन्तर्गतो नकारो भवति । एतद्वयमेव हि सर्वं भवति । तत्रैवेच्छारूपो नकारः शेते, अहमेतदौ विनाशयति । तस्यैवेच्छा शक्तिस्सती, सा च द्वयोर्योगस्य वियोगकारिणी भवति । पूर्णानामपूर्णताकरणमेव वियोग इति व्याख्यानान्नकारेणाहमेतदोर्वियोगो भवति । नकारस्त्वहम्येतद्यपि तन्मध्ये तदादौ तदन्ते च वा सर्वथा सर्वकाले चाहमेतदौ वियोजयति । देशकालवस्त्वपरिच्छिन्नं सत्, तदस्यास्तीति सती । अहमेतत्तु देशकालवस्तुपरिच्छिन्नम्, सत्वे तदपरिच्छिन्नम् । तस्माच्छैवी शक्तिस्सती चेति विज्ञेयम् । एतासां समूहरूपा महाविष्णोश्शक्तिः परमा संप्रयुक्ता भवति । पुनरेतत्त्रयाणामप्यनेकभेदः । या वैष्णवी शक्तिः लक्ष्मीः, तस्याश्चैतास्तिस्रः रमालक्ष्मीशारदाः भवन्ति । रमन्तेऽस्यां सर्वे इति तद्भावः । रमन्ते क्रीडन्ते विस्तारयन्त इत्यर्थो वा । विस्तरणमेव हि क्रीडा भवति । तच्चातीतमनन्तञ्च भवति । एवं लक्ष्यन्तेऽनया इति लक्ष्मीः । लक्ष्यते सर्वः पदार्थ इति व्याख्यानात्क्रियापरा रमा च ज्ञान-

परा प्रोक्ता भवति । शारदा चेच्छापरा, शरयते लज्यते सर्व-मनयेति तदर्थात् । अतश्च शारदा हीच्छापरा प्रशस्ता भवति । तिसृणामेतासां वैष्णवी शक्तिरिति व्यवहारः । द्वितीया हि ब्राह्मी शक्तिः । सापि त्रिविधा, ऐन्द्री ब्राह्मी सरस्वती चेति । इन्दति सर्वं व्याप्नोतीति इन्द्रः । तद्व्यापकतावश्यकतया चैन्द्री क्रियापरा भवति । ब्राह्मी चेच्छापरा । सरस्वती ज्ञानपरा । एवञ्चात्र त्रैविध्यं नियतं भवति । एवं तृतीया शैवी शक्तिरपि त्रिविधा, सती गौरी पार्वती चेति । तत्र सती हीच्छापरा, गौरी ज्ञान-परा, पार्वती क्रियापरा चेति । गौरीत्यस्य ज्ञानप्रदातृत्वरूप-गुरुत्वमप्यस्ति । तत्रैव ज्ञानं भवति—एतन्नोपयुक्तम्, नाहं किञ्चित्, नाहमेतत्, नैतदहमित्यादि । अत एव लोकेऽपि सति च किञ्चिज्ज्ञाने, क्रोधवैराग्यखेदाद्युत्पत्तिः ततः परा पार्वती पर्वतस्येयं कन्या पार्वती । पर्वतश्चैतन्निषेधातीतस्वरूपः । तस्य क्रियायास्संपादनी शक्तिश्च पार्वती भवति । तादृश-क्रियायाः करणम्, "यस्यान्तमशुभं विनाशरूपं स्वस्या-न्यस्य" इति लोकानुकरणरूपं भवति । अत एव "हिमाचल-सुता नाथसंस्तुता परमेश्वरी" इत्यादि प्रवचनम् । हिमो हि विनाशः केवलं शून्यस्वरूपः, हिमं अचलं यस्मिन्निति हिमाचलः । हिमस्य अचलनं हि ज्ञानक्रियायान्निषेधाचलनरूपं भवति । तच्च

तयोस्संबन्धरूपं भवति।तत्सुता हि,तदावश्यकी शक्तिः,तस्या नाथः तदधिपश्शिवो भवति। तेन संस्तुतेति तद्भावो विज्ञेयः।अत्रापि स्तोत्रानुसंधानतया, तदावश्यकतया च वा महत्वप्रदर्शनम्। दृश्यतामिह—यो हि चेत्थं भूतः शिवः सर्वस्मिन्शेते, सोऽपि त्वां स्तौतीति तद्भावः। इदञ्चात्र सूचितं भवति—त्वं हि महती प्रधानभूता इति। अत्रेदं बोध्यम्—आवश्यकता हि सर्वमूलं भवति, यं यमिच्छति, तं सर्वं कारयतीति। करणमात्रं हि सर्वमावश्यकं परमिति, तत्र नाशुभन्न शुभन्न तत्परिधावनं लघुत्वनीचत्वोच्चत्वमहत्वादिकन्तावदावश्यकपरमित्यतिशयोक्त्या चोपदेशकरणमिति तदाशयः। तस्मात्तदेवं प्रकारेण ऐन्द्रयादिव्यवहारेण च नवविधाश्शक्तयो भवन्ति। आसान्नवानामपि समाहाररूपा शक्तिः शून्यात्मिका दशमा भैरवी भवति। भैरं संसारं अवति रक्षति तद्भैरवः। तद्रक्षणरूपा शक्तिर्भैरवी। एवं विधानेन हि दशमहाविद्या अपि, कार्यपरतया क्रियाज्ञानेच्छानुसारेण परिवर्तनादिनियमेन च लोके प्रशस्ता भवन्ति। एतेषां त्रयाणामेव सर्वसामर्थ्यम्। सर्वं चेदं सामर्थ्यमेव शक्तिः। तस्मात्सर्वशक्तिमानीश्वर इति वचनं दृश्यते। एतेषां चतुर्णां महाविष्णुविष्णुब्रह्मशिवानामेतत्संसारेश्वरत्वम्, तत्रैव सर्वशक्तिमत्वञ्चेति विज्ञेयम्। शक्तीनामेतेषाञ्च परस्परसाक्षात्कारस्संबन्धः, सामर्थ्यसामर्थ्यवतोरभे-

दात् । सामर्थ्यं हि, यश्च समर्थो भूत्वा कार्यं करोति तद्भाव इति विज्ञेयम् । अत एव चैतेषामेकावस्थैवोक्ता भवति । तदवस्थैव तद्वाहनमिति विज्ञेयम् । गरुडो हि वाहनं विष्णोः, ब्रह्मणश्च हंसः, शिवस्य वृषभः इति सर्वत्र स्पष्टमुक्तम् । अत एव

"गरुडो वाहनं विष्णोर्ब्रह्मा वै हंसवाहनः ।
द्वाभ्यां संसृज्यते सर्वं शिवो वृषभवाहनः ॥"

इत्यादि प्रवचनम् । अस्यार्थश्च, गरुडश्च कालातीतक्रमिकज्ञानांशमात्ररूपः, हंसो हि देशमात्रस्वरूपः, वृषभश्च क्रियामात्ररूप इति । दृश्यताम्—महाविष्णुस्तु कालानन्तर्गतः, स चैककालिकः । एवं विष्णुरपि महाविष्णोः कालस्य प्रवर्तकः । तत्र ज्ञानांशमात्रश्च यः कालः तदंशभूतो गरुड इति सर्वत्राख्यातं भवति । कालगतेर्महत्वञ्चापि सर्वत्रोक्तम् । गरुडगमनमपि तादृशं बोध्यम् । तेन ज्ञानकाले सर्वपरम्, अतीततायां हि सर्वातीतञ्च भवतीति प्रत्यणव्येवं भावनाभिवर्तते, तेनानुमेयं सर्वं भवति । विष्णुस्तावत्संसारप्रज्ञापकः । स तु ज्ञानकाले सर्वनियतमात्रमन्विष्य तिष्ठति । इदञ्चात्र सूचितं भवति—सर्वात्मानं स्वान्तर्गतं स्वसन्निहितं स्वकार्यरूपं चिन्तयतीति । एवमेव प्रसिद्धमिदम् ।

"भक्तानां हि यदा दुःखं तदा विष्णुस्सहायकः ।
स च स्वगरुडं त्यक्त्वा भक्तार्थमुपगच्छति ॥"

इत्यादि प्रवचनम् । अत्रापि चैतत्सूचितं भवति—यद्यपि नियतावश्यकत्वेन तद्दुःखनाशः भवत्येव, तथापि तदिच्छया तदत्यावश्यकत्वात्तत्कालप्राप्तं विनापि तदर्थमुपगच्छति ; तत्प्रयोजनसाधनं भवत्येवेति। आवश्यकतामात्रस्य पूर्णत्वप्रवचनात्, यावश्यकता सैव पूर्णता भवति । भेदो ह्यत्र केवलमेतदावश्यकताशः, स एव क्रमश्चापीति विज्ञेयम् । आवश्यकतायां हि द्वित्वम् । तस्मिन्द्वित्वे हि क्रमश्चेत्थम्, प्रथममिदं पश्चादिदम्, प्रथमपश्चाद्विषयाभ्यां चावश्यकतायाः पूर्णत्वमपूर्णत्वञ्च भवति । या च प्रथमावश्यकता तां पूरयित्वा नाम तस्यास्साधनम्, ततःपरमन्यस्या द्वितीयायाश्चेति हि क्रमफलं भवति । तदर्थेनैव हीदं पूर्णमिति विज्ञेयम् ।

ततःपरं ब्रह्मणोऽहंसो वाहनः, हंसस्तावद्देशः, देशे एव सर्वाः क्रियाश्च भवन्ति। अतः क्रियाकर्तृदेशे वाहनानिभवन्ति । हंसे दिग्विभाग इति न्यायप्रवचनादेशस्याप्यतीतता, तादृशानियमेन तत्रैतत्संसारादिनियमे क्रमस्यैव चैषा संज्ञा । एवं वृष्येते देशकालविति वृषभः । स च शिवस्य वाहनम्, ज्ञानक्रियापरञ्च ज्ञानक्रियाभ्यां देशकालयोरेव विनाशसंभवात्, वृषभवाहन इत्युक्तिः । एतत्प्रकारस्यापि तादृशातीतत्वसत्वात्, "तत्कर्म वृषभसंज्ञकः" इति व्याख्यानादेतेषां शक्तेरपि, स्वस्ववाहने प्रश

न्तम्म् । यथा—ब्रह्मविष्णुशिवस्थाने , क्रमसंज्ञा , तद्भेदश्च , तद्वाहनञ्च , तथा क्रमेण शक्तेरपि च बोध्यत्वञ्च भवति ; शक्तिशक्तिमतोरभेदात् । दृश्यतामिह—इह लोके कस्यचिल्लोकवाहनस्थितौ न शक्तेः पृथक्त्वं संपरिदृश्यते ; किन्तु तच्छक्त्यैव तत्र स्थितिरिति विज्ञेयम् । अत एव

"ऐन्द्री गजसमारूढा वैष्णवी गरुडासना ।
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥
ब्राह्मी हंससमारूढा सर्वाभरणभूषिता ।
लक्ष्मीः पद्मासना देवी पद्महस्ता हरिप्रिया ॥
श्वेतरूपा धरा देवी चेश्वरी मृगवाहना ।
इत्येता मातरस्सर्वास्सर्वयोगसमन्विताः ॥
नानाभरणशोभाढ्याः नानारत्नोपशोभिताः ।
शिष्टैश्चमुक्तैस्सर्वादिव्यवहारप्रलंबिभिः ॥"

इत्यादि प्रवचनम् । अत्र च ऐन्द्री गजसमारूढा । क्रियायामुन्मत्तः, ज्ञानक्रियासंबन्धे प्रवृत्तः, स एव वाहनं यस्येति तदर्थः । देशकालसमाहारौ हि गज इति व्याख्यानात्, द्वयोःपरस्परसापेक्षत्वाच्च. वैष्णवी च कैवलं कालानुगामिनी भवति । माहेश्वरी हि शैवी वृषभासना । एवं कौमार्यादयः भवन्ति । तासां प्रत्येककार्यभेदेन बहवो भेदास्संभवन्ति । तेषाञ्च तादृशक्रिया-

दिनियमेन परिवर्तनादिकेन नवोध्यत्वम् । ब्राह्मी च हंसवाहना, देशपरा प्रसिद्धा, सर्वाभरणभूषिताच भवति । भूषणाभरणस्व-रूपन्तु क्रियानिष्ठम्, तेन भूषिता इति तद्भावो विज्ञेयः। क्रिया-मात्रेण मरणमिति बीजाद्यच्च किञ्चिदस्ति, तत्सर्वं तस्याश्च भूष-णाभरणरूपं भवति । एवं लक्ष्मीः पद्मासना ज्ञानावस्थारूपा भवति, पद्मं ज्ञानमिति व्याख्यानात् । अत एव "ब्रह्मापि पद्मो-द्भवः ज्ञानेन जातः" इत्युक्तम् । अहमेतदोर्योगस्वरूपमेव ज्ञानं भवति, द्वयोस्सम्मुखीकरणं ज्ञानमिति व्याख्यानात् । तत्रैव ब्रह्मेति नामाभिधानं भवति । सम्मुखीकरणमेव ज्ञानमकरणं भवति, आह्वनादौ हि तत्प्रयोजनम्। यर्हि यश्चैकं जानाति, तर्हि तस्य सम्मुखीकरणाय एकस्यैकनामाभिधीयते,तदर्थश्चायमेकशब्द-प्रयोगः; सर्वस्यैक्यात्। तत्प्राधान्यबोधज्ञापनार्थं परस्परं नामाभिधा-नम् । तस्मात्तस्मिन्नेव योगे विष्णुर्ब्रह्मा शिवश्चेति प्रशस्तं नामकरणं भवति। तस्माल्लक्ष्म्याः, ज्ञानपरत्वं पद्मासनत्वं पद्महस्तत्वञ्च भवति। लक्ष्म्याश्च क्रियाशक्तित्वात्, ज्ञानस्यैव कारणत्वं भवतीति बीजात्, हस्त एव कारक इति मूलाच्च पद्महस्तेति विशेषणम् । हरिप्रिया, हरणं प्रापणं करोति, सर्वं प्राप्नोति प्रापयति वा चेति हरिः, तस्य प्रियानाम हरणरूपा शक्तिः । श्वेतरूपा हि प्रकाशरूपा च धरादेवी । धरति सर्वं यथायथं नियोजयति, स्थापयति, प्रति-

देशं प्रतिदिशञ्च प्रतिकार्यञ्चेति धरा इति व्युत्पत्तिः । एवं भूता हि दीव्यतीति देवी भवति । एवमीश्वरी त्रितयसमाहाररूपा परमा शक्तिर्महाविष्णोर्भवति । सा च मृगवाहना, महाविष्णोर्मृगवाहनत्वात्। मृग इति विनिहितकालत्वान्महामन्वन्तरान्तकाल समूहस्यैव संज्ञा । स एव वाहनं यस्येति तद्भावः । मृगमारुह्य सर्वत्र प्रयातीति सर्वं प्रपश्यतीति च विज्ञेयम् ।सर्वाभियोजनं हि सर्वकरणं भवति । सर्वकरणमेव तत्प्रदर्शनं भवति । एवं ज्ञानेच्छाक्रियासमाहारानुसारेण परिवर्तनादिनियमेन च नाना भवति । तेन नानाविधाभरणशोभयाभियुक्ताः सर्वाश्शक्तयो भवन्ति, सर्वस्मिन्सर्वस्य विद्यमानत्वात् । नानारत्नप्रशोभिता इत्यस्य प्रकर्षेण रत्ने द्रव्यमात्रे तदुपस्थितिरित्यर्थः । एवं सर्वा अपि सर्वयोगसमन्विताः योगमातृकाः शक्तयः संविधानेन बोध्या भवन्ति । नचैतद्व्याख्यानेन नानात्वं विज्ञेयम्, किन्त्वेकस्यैव प्रकारो नानेति तदाशयः । यद्यप्येकस्मिन्प्रकारोऽनुपयुक्तः, तथापि चैकस्य स्थितौ सत्यां तत्कार्यावश्यकत्वं भवति । कर्तृकार्ययोरभेदात्, सर्वभूतत्वाच्च तदेकत्वमेव । तत्प्रकारो हि नानात्ववन्तः, अत एव अहमेतन्नेत्यस्यावश्यकता शक्तिः । अहमेतन्नानामावश्यकताया हि भवने एव नानात्वम् । अहमेतन्नेत्यस्य चैककालानुवर्तनरूपं हि तदस्तित्वम् । त्रितययुक्तञ्च यदावश्यकं तदेव नानात्वविशिष्टं

भवति। अत एव "नानात्वेन सर्वं प्रति भासते" इत्युक्तिः।
एवमेव

"नाना द्रव्यं क्रिया नाना नाना कर्म विधानजम्।
विधिर्नाना परं नाना पूर्वं नाना भिधीयते ॥
नाना शक्तिस्तथा कालः नाना देश इतीर्यते।
नाना योगः क्रमो नाना नाना नानेति नामतः॥
नाना च विद्धि सर्वज्ञ नानात्वं तत्प्रकारकम्।
वस्तुतस्त्वेकवद्रूपमेकसत्तापरायणम्॥
ओमित्यन्तर्गतं सर्वं नानात्वं तद्विवर्तनम्।"

इत्यादि प्रवचनम्। तस्मात्सर्वशक्तयः नानाभरणशोभाढ्या नानाप्रकारयुक्तास्तैश्शोभिताः प्रकाशिताश्चेन्ति तद्भावो विज्ञेयः। अत एवैतासामेतेषाञ्चैक्यं भवति। तत्तुल्यत्वञ्च सर्वत्राख्यातं भवति। सर्वशक्तिमातस्य चैकत्वेन सर्वत्रोक्तिः। अत एव

"महाविद्या महामाया महामेधा महास्मृतिः।
महामोहा च भवती महादेवी महेश्वरी॥"

इत्यादि प्रवचनम्। एवमेव

"महास्वाहा स्वधात्वञ्च वषट्कारादयः क्रियाः।
त्वमेव सर्वभूतानां साधिकान्तप्रदायिनी॥
त्वञ्च धर्मेश्वरी सिद्धा शारदा सर्वसंयुता।

ब्राह्मी शैत्री समारब्धा पार्वती परमेश्वरी ॥
धूमावती प्रगल्भा च भैरवी हेमवत्सरा ।
दुर्गा काळी महामाया चामुण्डा चन्द्रवक्त्रिका ॥
कमला नळिनी गौरी तथा सोमवती परा ।
महामेधा महाविद्या महाकाळी कराळिका ॥
आद्या हि व्यापिनी दिव्या मुक्तामाला दुरानना ।
चामुण्डा चारुनेत्रा च योगमाया मनोविधा ॥
सार्वत्रिकी ह्यनन्ता च ह्योमित्येकाक्षरायणी ।
शक्तिस्सर्वमयी सर्वा संभूता भावपूर्विका ॥
शुद्धा प्रवर्त्तिनी नित्यं त्वं देवी च रसात्मिका ।
सर्वदावश्यकी मेधा सर्वकर्मानुगामिनी ॥
सर्वाश्रयसमायुक्ता सामवेदपरायणी ।"

इत्यादि प्रवचनम् । तस्मादनेकनाम्नी सर्वशक्तिर्भवति । अगण्या हि चास्यास्संख्या । प्रत्यण्वपि चैतत्त्रितयावश्यकता विद्यते । अतस्संसारस्त्रितयात्मक इत्युच्यते, एतत्त्रितयस्यैव प्रत्यण्वप्युपस्थितत्वात् । संसरणं हि सर्वथा परमातीततादशायां भवति । अतश्चान्तर्गतो भवति संसारः । पुनश्च तदणुसंस्पृष्टो संसारोऽप्यणुर्भवति । पुनस्तत्रत्याणुना पृथग्भूतेनापि संसारः । एवं क्रमेणानन्तातीतः क्रमः । एतत्सामानाधिकरण्यायैव हि सर्व-

इत्यादि प्रवचनम्। ध्रुवं तावदावश्यकं भवति। तन्नपरित्याज्य-मिति तु चोपदेशफलं भवति। अत एव

"अवमानं पुरस्कृत्य मानङ्कृत्वा तु पृष्ठतः।
स्वकार्यं धारयेद्धीमान्कार्यध्वंसो हि मूर्खता॥"

इत्यादि प्रवचनम्। अत्र च मानावमानौ न विज्ञेयौ, सर्वथा स्वावश्यकमेव साध्यं भवति। मानावमानेऽप्यावश्यके परे च भवतः। यच्चैतत्स्वावश्यकम्, तर्हि, तद्बीजं भवति अत्रायन्नि-यमः—"एतत्प्रकारेणानेन कारणेन, अत्रायं क्रमश्च सिद्धान्तो भवति, एतमन्तरा हानिरियम्" इत्यादिपरिभावनयावश्यकपूर्ण-करणेनावलानं तदभावश्च भवति, मानावमाने द्वे चावस्यके परे यस्य चावश्यकं नास्ति; तत्करणे प्रशंसा भवति। इदमयोग्यं दुस्तरं अनेन कृतम्, इति प्रशंसारूपमुदात्तस्वरजं भवति, यदि-दमयोग्यं दुस्तरं तस्य चैतत्प्रकारेण कृतिरनेनेत्यसूयास्वरूपमव-मानम्; तदनुदात्तस्वरजं भवति। स्वकार्यं हि स्वरितस्वरेण प्रयुक्तं भवति, न तत्र मानावमानौ भवतः। भवत्येव प्रातः सायं मध्याह्नः दिवा रात्रिश्च, नात्र मानावमानारोपणं भवति; किन्तु स्वतस्सर्वथावश्यकतया भवत्येव। एतद्भवननेन हि सर्वे पसन्ना भवन्ति। एतादृशं हि सर्वकार्यकरणौचित्यमिति। नीत्युपदेशः। नीतिर्हि, आवश्यकज्ञापकं शास्त्रं भवति। तत्स्व-

रूपमेवं भवति—इदानीमस्यावश्यकत्वं भवति, अनेन चेदं भवति; अस्यायं प्रकारः, अत्र चैषा क्रिया, अस्यायं कालः, अयञ्चास्य देशः इति प्रज्ञापकं हि नीतिशास्त्रं भवति। तस्मात्तत्राभिनिवेशनमुचितं भवति। यथानीति सर्वाः क्रियाः कर्तव्याः। अत एवावश्यकतायाः यथावद्बोधो भवति। तस्मादावश्यकतायाः ध्यानमुक्तं भवति। अत एव "त्वमेव सन्ध्या सावित्री त्वं देवी जननी परा" इत्यादि प्रवचनम्। सम्यग्ध्यानविषया सन्ध्याचेत्यर्थः। अत एव "यथा त्वं हि जगत्स्रष्टा जगत्पातासि यो जगत्" इत्यादि। एवमेव "परापराणां परमा त्वमेव परमेश्वरी" इत्यादि प्रवचनम्। अस्य च परमावश्यकता सर्वपरमातीतता चेति भावो विज्ञेयः। एतदावश्यकतायाः स्तोत्रमप्यभिधीयते। स्तोत्रेणानेन चेदं सूचितं भवति, सर्वावश्यता चेयं परैवेति। पुनश्चावश्यकतायाश्चातिशयोक्तिलक्षणतया ह्युपदेशकरणमेव स्तोत्रप्रयोजनं भवति। अतिशयोक्तिरिति तु न किञ्चित्, किन्तु प्राधान्याद्बुद्धिव्यापारकल्पनाय तथा प्रयोगः। यद्यपि सादृश्येन हि सर्वे लघुबुद्धयो महाबुद्धयश्च भवन्ति, तथापि क्रमानुष्ठानेन स्वतो लघूनान्तदतिशयोक्तित्वात्। तया सम्यक्प्रवचनमुपदेशकरणमिति स्तोत्रातिशयः। तस्मादेतास्सर्वाश्चावश्यकताः, सर्वस्थाः, प्रत्यणुभूताः, सर्वान्तरायण्यः, प्रण-

वाग्मिकाः, सामवेदस्थाश्चेति बोध्या भवन्ति । एतच्छक्तिमात्रानुरोधेन सर्वप्रदर्शनमिति व्याख्यानफलं भवति । तस्मादेव शक्तिमन्तरा कार्यसाधनत्वं व्याख्यातम् । सर्वशास्त्राभिमतस्तत्प्रयोजनसिद्धान्तश्चायमेव, आवश्यकतां दृष्ट्वा हि कार्यानुष्ठानम् । अत एव चावश्यकताया महत्त्वं सर्वादित्वं चोच्यते । अत एव

"देव्या ययाततमिदं जगदात्मशक्त्या
निश्शेषदेवगणशक्तिसमूहमूर्त्या ।
तामम्बिकामखिलदेवमहर्षिपूज्यां
भक्त्या नताः स्मः विदधातु शुभानि सा नः ॥
यस्याः प्रभावमतुलं भगवाननन्तो
ब्रह्मा हरश्च न हि वक्तुमलं बलञ्च ।
सा चण्डिकाखिलजगत्परिपालनाय
नाशाय चाशुभभियः सुमतिं करोतु ॥
या श्रीस्स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वानताः स्मः परिपालय देवि विश्वम् ॥"

इत्यादि प्रवचनम् । एवं हि तस्यार्थः—याचेत्थं भूता ह्यावश्यकता शक्तिः सर्वसंसारेषु दीव्यति, या च विजगीषा कार्यं

करोतीति, यया देव्या यस्याश्चात्मशक्तेः सकलमिदमखिलं जगद्भासते, तां पुनरावश्यकतां देवमहर्षिपूज्यामंबिकां सर्वातीतरूपां सर्वव्यापिनीं भक्त्या तदिच्छया नतास्स्मः नमाम इति। अत्र-सर्वाभिप्रायेण सर्वस्यैक्यात्, एतद्बहुत्वे युक्तत्वाच्चावश्यकतायाः परमत्वप्रदर्शनाय बहुवचनान्ताक्रियापदोक्तिः।

पुनरेवं यस्याः आवश्यकतायाश्चातुलं भवनमणोरारम्य भवति, तस्याः अतीतानतीता परा इति प्रयोगः। "यत्सत्तया सर्वास्सर्वपरमास्सर्वपरमस्सर्वश्च अपरमश्च सर्वः" इत्याद्यवधारणम्। अतस्तस्याः प्रभावमतुलं ब्रह्मा हरिः हरश्च न हि वक्तमलं समर्थाः। इदमेवात्र महत्वम्, प्रतिवाच्यं प्रतिवाचकं प्रतिवचनञ्च तदुपस्थितेः, अतीतानतीतपरत्वाच्च। न कोऽपि व्यक्तिपदवाच्यः, येन तत्प्रवचनं भवति। तन्महिम्नस्तु पारः परमः। न तस्यामावश्यकतायां मानमुपदेशो भवति, यया च सर्वाशुभभयस्य नाशो भवति। अशुभभयमित्युक्त्या चेदं सूचितं भवति। यदि चेदावश्यकानुसारेणाचारो भवति। तर्हि नाशुभं किञ्चिन्न च भयम्। नाशे नैवावश्यकता प्रशस्ता भवति। अतो ह्यावश्यकतयैव सर्वं कर्तुमुचितमित्युपदेशः। सा चावश्यकता चण्डिका विश्वपरिपालनाय भवतीति तदर्थः। यदा हि सम्यगखिलजगत्परिपालनम्, तदैवावश्यकता नश्यति। तदेव तस्याश्चण्डः

कोपः; आवश्यकता विनाशफल एव कोप इति लोकदर्शनात् । पुनरेव या चावश्यकता, सैव श्रीः लक्ष्मीः अलक्ष्मीः बुद्धिः श्रद्धा लज्जा सर्वाभिरूपा सर्वप्रेरयित्री । इत्थंभूतां त्वां नतास्स्मः। त्वञ्च सर्वं विश्व परिपालय । आवश्यकतायाश्चेदमत्र महत्वम्, सर्वप्रधानत्वात्त्वतोऽपि भिन्नं कृत्वा हि नमस्कारप्रवचनम् । प्रार्थनाचेयं भवत्यावश्यकतायाः । इदमेव पूर्णत्वं विश्वपरिपालनं भवति । विश्वमात्रस्यावश्यकतैव कार्या इत्युपदेशः। आवश्यकतापरमेव हि सर्वम्, याचना प्रार्थना वन्दनमभिवादनं प्रत्यभिवादनं चेति । या ह्यावश्यकता हि स्वचित्ते नियता, तस्याश्चानुसधानकरणत्वमेव भवति—कथमस्य पूर्तिर्भवति, तत्र कुलप्रशंसा, एतत्कथनम्, अस्ति ममैतादृश्यावश्यकता, एषा चैतद्विशिष्टा भवति, एतद्रूपा चेति । इदमेव हि प्रार्थनास्वरूपं भवति । प्रकर्षेणार्थ्यते इति हि प्रार्थना भवति । आवश्यकतया योग्यताकारणमेव हि प्रार्थनेति विज्ञेयम्, योगे सत्येव पूर्णत्वसंभवात् । याचना चैव ह्येवं भवति—यश्च मयि नास्ति, या च ममावश्यकता, ता त्वं पूरय, अत्राहं त्वञ्च ह्येकयुक्तौ भूत्वाभ्यां पूर्णे चास्मिन्प्रवर्तितव्यमिति । वन्दनं हि, स्वात्मनः महताश्चावश्यकतया हि मुख्यं भवति, तदेव महत्, येन यस्यावश्यकता हि सिध्यति । अन्यथा हि सर्वेषां साम्यं भवेत् । तस्मा-

दावश्यकतापरो हि महत्वलघुत्वव्यापारः । मत्पिता मद्गुरुः मद्भ्राता च महान्, एव देवादयश्च तर्हि तेन महता तन्महत्वेन च ममावश्यकसाधनं भवतीत्यभिप्रेत्य हि वन्दनम्। तावत्तत्सङ्गकरण भवति। अभिवादनमपीदं भवति—स्वात्मनः महत्सु चावश्यकतानिवेदनम्, सर्वप्रकारेण भवद्भ्योऽहं लघिष्ठोऽस्मीति वा, पश्यन्तु ममावश्यकतामिति । प्रत्यभिवादनमिदं भवति–दृश्यते तवावश्यकता, सर्वं सर्वस्यास्ति, अहन्तवास्मि, त्वञ्चममासि, न तत्र भेदः, सर्वावश्यकसाधनं हि तुभ्यं भवतु, सर्वथा सर्वदाहं सार्वत्रिकेन नियमेन तवावश्यकता स्वसामर्थ्येन साधयामीति । तदेवाशीर्वचनं भवत्येव । अत एव निष्प्रयोजनेऽज्ञाने शैव्ये वा चानवधान प्राणापानौचित्यम् । यदा च स्वतो महान्कश्चिदन्यत्राभिधाने निविष्टः, नमोवाकेन सह हि वार्ताभियुक्तः, शीघ्रं कुत्रचिद्गच्छति वा, महानप्यज्ञातः एवमनेके च क्रियान्तरपराः, तेभ्योऽस्माभिः प्रणामो न कार्यस्तदा । अत एव

"अश्वारूढं गजारूढं शयानं नाभिवादयेत् ।
पूजाध्यानव्रतहोमाक्रियाया नाभिवादयेत् ॥
संमुखीकरणं नैव यावत्सम्यक्प्रबुध्यते ।
तावन्नैवाभिवादो हि यावच्छैव्येण संवृतः ॥
अज्ञातो नाभिवाद्यो हि सर्वैरेष विधिर्महान् ।

भवेच्च वयसा न्यूनः नाभिवाद्यः कदाचन ॥
प्रत्यभिवादवाक्ये च दर्शनावश्यकेन च ।
आवश्यकस्यानियमः लघुत्वं तत्वमुत्तरम् ॥
आवश्यको हि नियमः महत्त्वं तत्प्रधानकम् ।"

इत्यादि प्रवचनम् । एवमेव

"महान्तं पुरुषं दृष्ट्वा कर्तव्यमभिवादनम् ।
अन्यथा दोषमाप्नोति तदावश्यकनाशनात् ॥
अतस्सर्वो विधिर्नित्यः प्रार्थना याचनादिकम् ।
यथायोग्यञ्च कर्तव्यं संसारस्यानुसाधनम् ॥
आवश्यकपरं नित्यं जगदित्थं हि दृश्यते ।
ज्ञात्वावश्यकञ्च सर्वं क्रियतां सर्वसाधनम् ॥
महाशक्तिः परं मान्या ब्रह्म नित्यं प्रपद्यते ।"

इत्यादि प्रवचनम् । तस्मात्तादृशी शक्तिः परं सर्वप्रकारेण वेदितव्या भवति । अत एव "किं वर्णयामस्तव रूपमाद्यमचिन्त्यमेतत्" इत्याद्युक्तम् । तवपदेन ह्यत्रावश्यकता, तदेतद्रूपं किं वर्णयामीति ध्वनिः । न वर्णितुं शक्यमिति तदाशयः । तस्मादित्थं भूतावश्यकता सर्वसाध्या चैकरूपिणी ह्यनन्तनाम्नी च माया भवति । वस्तुतस्तु तदात्मा, सर्वावश्यकता युक्तो भवति । अत एव

" न शक्तिर्न शाक्तः परस्थोऽयमात्मा
न हव्यादि कर्मादियुक्तोऽयमात्मा ।
न चावश्यकस्संप्रतिष्ठोऽयमात्मा
स्वतस्सर्वमूलप्रसिद्धोऽयमात्मा ॥
न देवी न माया परा योगमाया
न संभावनीया सती शारदा वा ।
रमा पार्वती प्रस्थिता नैव किञ्चित्
स्वयं सर्वरूपो विरूपोऽयमात्मा ॥
न विष्णुर्महाविष्णुनामाभिधेयः
विधाता शिवो भूतनिष्ठो न कश्चित् ।
सदैवाहमेतन्नकारप्रयुक्तः
स्वयं सर्वरूपः स्वतो भिन्ननिष्ठः ॥
न चैवायमात्मा भवेद्गारुडोऽयं
न हंसस्थितो वाहनो वा रथस्थः ।
न देशो न कालः क्रिया भावनीयो
सदैवायमात्मा परं हि प्रधानम् ॥"

इत्यादि प्रवचनम् । एवमेव

" नाहं ब्रह्मा शिवो विष्णुर्महाविष्णुर्नकारजः ।
स्वच्छन्नस्सर्वतो भिन्नः सर्वसिद्धस्सनातनः ॥

नाहं माया परा माया योगनिद्रा न शारदा ।
नाहं सरस्वती लक्ष्मीः पार्वती न रमान्तरा ॥
अहमेकस्सर्वरूपश्चैतन्नेत्यत्र संस्थितः ।"

इत्यादि प्रवचनम् । अत एव

"नैवाभिवाद्यो न चैवाभिवादः
न तत्कर्तुरेवं परं सत्प्रधानम् ।
न मे वन्दनं वन्दनीयो न चाहं
न मे प्रार्थना प्रार्थनीयो न चाहम् ॥
न मे याचना याचनीयो न चाहं
न तद्याचको धर्मबुद्धिस्वरूपः ।
अनन्तं परं गोचरं चिन्तनीयं
सदा ब्रह्मता ब्रह्मतत्वं निरीहम् ॥"

इत्यादि प्रवचनम् । तस्मात्सर्वशुद्धं सर्वाभिपरम्, सर्वं समीयमानं वितथं खल्विदं ब्रह्मेति तद्भावः । अत एव "शक्तिज्ञान-क्रियाभिश्च ब्रह्म विद्धि" इत्याद्युपदेशः ।

तत्र च कारणत्रयेण कार्यविशिष्टा शक्तिरप्येककारणं भवति । तच्छक्तेस्स्वरूपं सामवेदे "अग्न आयाहि वीतये" इत्यादि मंत्रादारभ्यान्तं वर्णितं भवति । तत्रचैवं द्रष्टव्यम्—कावावश्यकता संसारविभागे, तद्विभागः को भवति, कथं

भवति , यदिदमेकं द्विकं त्रिकमित्यादि तत्र किं मानम् , तस्या-वश्यकता पुनः संख्यावृद्धिः, सांख्यं तद्व्यापारश्च, यया शक्त्या विद्याद्युपस्थितिः, शक्तेश्च या वावश्यकता, शक्त्यन्तरा हि शक्तिः परिदृश्यते, तत्क्रमस्य च शक्तिः, तत्फलशक्तिश्च, कालविभागा-वश्यकता, क्रियाविभागावश्यकता, समाहारावश्यकता, जिज्ञासा-वस्थावश्यकता, ध्यानाद्युपस्थितिः, परिभावनादिशक्तिः, मानस-विचारः, बुद्धिकार्यम्, इन्द्रियनिग्रहादिशक्तिः, प्राप्यप्रापकभा-वावश्यकता, कर्तृत्वकारणत्वप्रकारत्वविज्ञानम्, सदसद्व्यापारः, सर्वशक्तिमत्वम्, सर्वातीतशक्तिमत्वं , यश्च तत्वोत्पत्तिहेतुः, यच्च भवनकारणम् , परस्परसंबन्धावश्यकता, परमाणुशक्तिः, अवधार-णावश्यकता, क्रियागुणद्रव्यावश्यकता, तत्प्राधान्यम् , सामान्यत्व-विशेषत्वे,सर्वसामानाधिकरण्यम्, तद्वैयधिकरण्यञ्च, पृथक्त्वैकत्व-निर्देशः, कर्तृकरणयोर्भेदावश्यकता, पदार्थभेदावश्यकता,पदार्थसं-भावना, परस्परसापेक्षता, निर्णयसिद्धान्तादि प्रयोजनम् , निश्चय-सन्देहशक्तिः, तत्स्वरूपम् , तदावश्यकता,तत्र च क्रमः,तद्भवनका-रणम् , लक्षणादिव्यापारः, तदुपस्थितिः, भावाभावयोरनाद्यन-न्तत्वम् , सादित्वसान्तत्वे, युगपदादिव्यवहारः, आरम्भावसाना-वश्यकता, जननमरणशक्तिः, कार्यकारणसामर्थ्यं प्राप्तिपरमप्रा-प्तिपरञ्च, धर्मार्थकाममोक्षाणां तत्वव्यवहारश्चेत्यादि सर्वम् ; सामवेदे

स्पष्टमुक्तं भवति। किञ्चात्र,संसारमात्रस्य या वा निषेधशक्तिः, नकारात्मिका मकारोपपन्ना इति; तस्याः सर्वाख्यानमपि तत्र भवति। किञ्चानेन येन येनकारणेन यद्यद्भवति,तदावश्यकानि सर्वाणि नियमान्युक्तानि भवन्ति। एतत्संसारसाधने हि यौ दुःखशोकौ, सुखहर्षौ, परमानन्दः, तदानन्दः, सत्यशक्तिः, सत्वम्, अस्तित्वम्, नास्तित्वम्, अनस्तित्वम्, कालाकालानकालाः, अतीतानतीताननतीतानि, सर्वव्यावर्तनञ्च सर्वं व्याख्यातं भवति। सामवेदश्चायं हि प्रकारवचनः, प्रणवस्थः, निषेधप्रकाशकश्च भवति। महावाक्यञ्चाहमेतन्नेतिरूपम्। अत एवात्रेदञ्च प्रळयादिविधानं शून्यात्मकं भवति। अत एव

"मकारान्तर्गतो वेदो सामवेदः प्रकीर्तितः।
प्रळयादिवर्णनञ्च सन्यासादिविभावना ॥
सामविद्यापरा विद्या देशकालविवर्तिनी।
इच्छामात्राः क्रियास्सर्वास्सामवेदव्यवस्थिताः ॥
शिवोक्तञ्च भवेत्साम शिवस्संसारकारणम्।
सती शक्तिर्भवेद्यस्य रूपं स्यात्प्रळयात्मकम् ॥
सर्वमेतन्मकारेण सामवेदे प्रयुज्यते।
एतन्नाहमहं नैतदित्यादिपरिभावना ॥
सर्वं सम्यक्समासक्तं सर्वसिद्धान्तसंयुतम्।

सर्वत्राभिगतं चैवं न ब्रह्मेति प्रतिष्ठितम् ॥"

इत्यादि प्रवचनम् । तस्मादृग्यजुस्सामानि, ज्ञानेच्छाक्रियानुसारेण व्यवस्थितानि भवन्ति । विद्यानां तिसृणामेतासां ज्ञानमेव ब्रह्मेत्यभिधीयते । प्रथमं च ज्ञानम्, ततस्सङ्कल्पश्चेच्छा, ततो यत्नः क्रियेति विज्ञेयम् । यद्यप्येतदनुरोधेन हि "ऋगन्तरं साम" इति प्रवचनं युक्तम्, तथापि सामवेदस्य सार्वत्रिकत्वात्, क्रियायाश्चादौ मध्येऽन्ते च तत्प्रयोजनम् । इच्छामात्रस्य सर्वाभिगतत्वात्तृतीयत्वम् ।

अकारोकारमकारेष्वेवान्नियमो दृश्यते । अकारो ह्यात्माहमिति, उकारो ह्यनात्मा चैतदिति, मकारो निषेधश्च नेति । क्रमे चास्मिंश्च कारणमिदं भवति । नकारोऽप्येतादृशः, यो हि सर्वत्र व्यापकः । तस्मात्तस्यान्ते तदुपस्थितिः । तस्यान्तोपस्थितौ सत्यां सर्वत्रैतस्य गमनं भवति । अत एव "आद्यन्तावभेदौ" इति ब्रह्मसूत्रम् । तच्च तत्रैव युक्त भवति । आद्यन्तयोरभेदो हि मन्तव्यः, यो ह्यादिभूतः, सविवर्तनेनान्तो भवति । योह्यन्तः स आद्यो भवतीति बीजात् । अन्तादप्यारंभः परिदृश्यते, न तत्र कश्चिद्बाधकः यथा—अहमेतन्न, एवं नैतदहम्, म. उ. अ. इति प्रशस्तः । प्रथमं हि नास्ति किञ्चित्, "ततो ह्येतद्भवति" इत्यादिसृष्ट्यारंभकाद्याख्यानग्रन्थे स्पष्टमुक्तेः । प्रथमम्, अह-

नास्मि वाहमस्ति वा इति भवति । पश्चादेतद्भवतीत्याद्यपि च । एतदित्यस्मादारंभो न कदापि भवति । अहममन्तरा चैतत्परिभावनापि न भवति । यदा ह्येतत्परिभावना भवति, एतदस्ति, तन्न इति ; तदा तु प्रथमप्रश्ने चेद भवति—यदेतदस्ति, तस्याकारः कः, स च कुत्रास्ति, केन प्रयोजनेनैतन्नियतं भवति, अत्र च कीदृशोऽयमकारः इत्यादि निर्वचनस्यावश्यकत्वं भवतीति। प्रथममहमं मत्वा, ततश्चैतद्विज्ञाय, पश्चादहमेतदोर्नत्वञ्च विज्ञायते। ततश्च पुनरारभ्यते। यन्नत्वम्, तन्नकारविषयमहमेतच्चेति प्रशस्तं व्याख्यातं भवति। अस्मादेव हि बीजादहमस्वरूपनिरूपणपरस्य च ऋग्वेदस्य पूर्वत्वम्। एतद्वाच्यस्य यजुर्बोध्यत्वेन तस्य द्वितीयत्वम्। नकारवाच्यस्य सामवेदबोध्यत्वेन तस्य तृतीयत्वम्। प्रतिवेदम्, ज्ञानेच्छा क्रियाणामेव प्रसिद्धिः, अहन्नैतदिति महावाक्यानुरोधात्। अत एव समाहारार्थके चाथर्वणे वेदे ह्येव विधिः परिदृश्यते—प्रथमं हि ज्ञानम्, ततश्चेच्छा, ततः क्रिया, पुनरिच्छा, पुनर्ज्ञानम्, पुनः क्रिया, क्रियायां ज्ञानं चेति । एवं समाहारेपरिवर्तनादिनियमेनानेकक्रमः। दृश्यतामिह—क्रियाया अपि ज्ञानसंभवः, सत्यां क्रियायां क्रियाकर्तुर्ज्ञानानुरोधेन हि पुनः पुनर्विज्ञाय कर्ता च स्वयमपि तादृशो भवति, एवमेवोपदेशः, एवमेव हि सर्वः क्रमः व्यतिक्रमश्चेति। अत एव

" नकारात्माद्ययं वेदः सामवेदस्तदिच्छया ।
इच्छारूपाद्धि संबन्धादृग्यजूंष्यन्तु चान्तिमः ॥
तृतीया महती विद्या सामविद्या परायणी ।
सर्वनिष्ठा च संबद्धा सर्वरूपानुगामिनी ॥
पूर्वन्नास्ति परन्नास्ति चोभयन्नास्ति सर्वथा ।
मध्यमन्नास्ति संसारे सर्वमेवं परावरम् ॥
क्रमो यो भासते कश्चित्सचाप्येको व्यतिक्रमः ।
तथाह्येकानुरोधेन क्रमस्सर्वो हि बुध्यते ॥"

इत्यादि प्रवचनम् । तस्मात्सामवेदस्य तृतीयत्वं सिद्धं भवति । अत एव " तद्विदस्सामगायनाः " इत्याद्युक्तिः ।

एतेषां त्रयाणामतीतत्वं त्रितयस्य ब्रह्मरूपत्वञ्च सिद्धमित्युच्यते । तस्मिश्च ब्रह्मणि चोच्यमाने न कोऽपि चैतद्वार्ते जानाति । वेदादयस्तु सर्वे महाविष्णोरवधारणरूपा भवन्ति । तेषाव्यक्तिमात्रान्तत्वमप्यनुपयुक्तम्, परन्तु ब्रह्मतत्वमिति निश्चितं भवति । इदमेव ब्रह्मभवनमिति, संपूर्णमाख्यातं भवति । अत एव

" यं धातावरूणेन्द्ररुद्रमरुतस्त्वाख्यान्ति दिव्यैस्तवैः
वेदैस्साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा यास्यन्ति यं योगिनो
यस्यान्तन्नविदुस्सुरासुरगणादेवाय तस्मै नमः ॥"

इत्याद्युक्तिः । अत्र च केवलातीतत्वमेव प्रदर्शयितुमेवं योजनम् ।
एतत्प्रणवस्वरूपन्तु सर्वतोऽतीतम्, अतीतानामप्यतीतम्, परम-
योगिनामनेकमहाविष्णूनां महावेदाद्युपहितानाञ्च विधिमन्त्रस्वरू-
पञ्च भवति । एतदन्तर्गतं सर्वातीतानतीतञ्च भवति । तस्मा-
दोङ्कारोऽपि सामगीतो भवति । सिद्धान्तस्तु, चतुर्वेदगीतोऽयं
प्रणवो भवतीति । अत एव

ओङ्कारः परमं गीतं गीतैस्सर्वैश्च गीयते ।
महाविष्णुस्तथा विष्णुः स्वयं ब्रह्मा शिवस्तथा ॥
रमोमा शारदा गौरी पार्वती परमेश्वरी ।
लक्ष्मी स्सरस्वती ब्राह्मी काळिका भुवनेश्वरी ॥
ओमित्येकाक्षरो मन्त्रः गीयतेऽनुदिनं सुरैः ।
ऋग्वेदस्य महद्गीतं यजुर्वेदस्य सद्गृतम् ॥
सामवेदेन तद्गीतं गायन्ति सामगायनाः ।
अथर्वगीतं सर्वस्वमतीतं प्रणवाभिधम् ॥"

इत्यादि प्रवचनम् । एवमेव

"अतीतानतीतं परन्तत्वमेत
त्समं सर्वरूपञ्च ऋग्वेदसिद्धम् ।
यजुर्वेदभूतन्तथा सामगीतं
ह्यथर्वान्तरश्चैकमेव प्रशस्तम् ॥

तदोङ्काररूपं विरूपं विकल्पं
सदा सच्चिदानन्दमाभासरूपम् ।
अनन्तं परञ्चाव्ययं ब्रह्म सिद्धं
सुखं सुन्दरं सर्वमूलाधिमूलम् ॥
निराधारमाधारसंयुक्तमेत-
त्क्रियाज्ञानसंपन्नरूपन्तदेतत् ।
परस्सामगस्सामसंस्थो मकारो
यजुर्वेदभूतः प्रयुक्तो ह्युकार. ॥
तथा भावना सत्यऋग्वेदसिद्धा
ह्यकारो ह्यकारो ह्यकारो ह्यकारः ।
अकारो ह्युकारो ह्युकारो ह्युकारः
मकारो मकारः परन्तत्वमेषः ॥
स ऋग्वेदमात्रो ह्यकारो ह्यकारो
ह्युकारो ह्युकारो यजुर्वेदसारः ।
स सर्वो मकारो मकारो मकारः
स्वयं सामगो गीयते नित्ययुक्तैः ॥"

इत्यादि प्रवचनम्। तस्मादृग्यजुस्साम्नामोमित्येकत्वमिति सिद्धान्तः।

सामवेदे च सर्वमावश्यकताया व्याख्यानम् । अत एव सामवेदे व्यवस्थितमिदं भवति । अत एव "सत्यं भूतं प्रावृत-

अन्यगर्भं हिरण्यं प्रकाशान्तमश्चाभिभूतम् , अन्तरा सिद्धमेत-त्प्रक्रान्त्यपमत्यं गुणितुमशक्यं धर्मकामार्थसिद्धिः" इत्यादि प्रवचनम् । अत्र च सर्वस्यावश्यकत्वमतीतत्वं सर्वाभिभूतत्वं निषिद्धत्वञ्चोक्तं भवति एतत्सामवेदप्रतिष्ठिता भक्तिरपि लोकप्रसिद्धा भवति। मननं भक्तिरिति तद्व्याख्यानाद्भक्तेरपि मोक्षकारणत्वमुक्तं भवति । यद्यपि "तत्वज्ञानान्मुक्तिः" इति वाक्यविरोधः, तथापि अन्तरा-इच्छां क्रियाया असंभवात् , तद्दृष्ट्या मोक्षस्य क्रियापरत्वाच्च भक्तेस्तत्साधकत्वम् । इच्छामन्तरा तत्वज्ञाने प्रवृत्तिर्नभवति, न च तत्वं जानातीति ज्ञानस्याप्रयोजनत्वात् । प्रयोजनं हि तत्र मोक्षः । इच्छा-मन्तरा प्रयोजनस्याकल्पकत्वम् । तस्माज्ज्ञानविधौ हीच्छाप्रकल्प-कत्वेन कर्मप्रकल्पनं भवति । "कर्माणि कृत्वा मोक्षमुपलभेत्" इति हि सर्वसिद्धान्तः । अत एव "यथायोग्यं भक्त्या साम-वेदं स्तुवर्गाय मोक्षो ह्युपलभ्यते" इत्याद्युक्तिः । स्तोत्रमात्र-विधिस्तु सामवेद एव, भक्त्या हि स्तुतिर्भवति । स्तोत्रञ्चाचार-वर्णनपरम् । आचारो हीच्छापरश्शक्तिपरश्च भवति । तस्मा-त्स्तोत्रमूलस्सामवेद इत्युच्यते । अत एव ऋग्वेदे पठनपाठनाभि-धानम्, यजुर्वेदे यज्ञाद्यभिधानम्, सामवेदे स्तोत्रादेरभिधानञ्च परि-दृश्यते । यद्यपि स्तोत्रेण भेदप्रसङ्गः, स्तोत्रस्याचारपरत्वात् ; तथाप्यावश्यकतया लघुत्वमहत्वव्यापारेण स्तोत्रौचित्यम् । अत्रायं

भाव:—य एष आचारः, स महानतीतः, अनाद्यनन्तः, परमावश्यकः, यदि चेत्त्वं किञ्चिज्जानासि, येन येन प्रकारेण त्वमिदमिदमाश्चर्यमरमद्बुद्धिजन्यम् , तत्कर्तुमहमपि शक्नोमीतीच्छया तत्प्रकारः प्रदश्यतामित्यभिप्रेत्य, तव स्थाने केन विधिना गमिष्यामीति परिभावनया हि स्तुतिर्भवति, अत्रातीतस्यावश्यकतया हि सर्वं नियतं भवति, तथा नियतानामतीतानां प्रातिकरणे हि परमौचित्यं भवतीति। एवं भावना स्तुतिप्रक्रिया भवति। अस्मिंश्च संसारे परस्परं शिक्षा च प्रदश्यते, अहं त्वां शिक्षयामि त्वञ्चान्यं शिक्षयसि इति हि चान्योन्य व्यवहारः । तदिष्टलाभाय स्तोत्रविधिः। अयमेव हि तत्र भेदः। नानेन तदैक्ये भेदविज्ञानमिति च तावज्जगद्गुरुरिति व्याख्यानतया संविधानम् । अत एवैतत्क्रमाधिपानां यथाक्रमं स्वावस्थया स्तुतिरुक्ता भवति। स्तोत्रेणानेन केवलोऽयमभिप्रायो भवति । तस्याचारे स्वबुद्धेरल्पत्वादाश्चर्यतयाभिनिवेशः । अत्राहमप्येवं करोमीतीच्छाप्रज्ञापनमेव । एवं प्रज्ञापने सति तत्प्राप्तिः । तस्मात्स्तुतिरपि तज्ज्ञानसाधनी भवति। यावत्स्वेच्छाद्यन्यं न ज्ञापयति, न तावत्तस्यास्स्तुतेः पूर्तिर्भवति, योगेनैव पूर्तिर्भवेदिति तद्व्याख्यानात् । अत्र चान्यप्रज्ञापनमेव हि योगो भवति । इच्छा संज्ञापि न तस्योच्यते, यावदन्यप्रज्ञापनं नास्ति। यदि चेदिच्छायाः परमावश्यकता, तदा सर्वथा किंचिदपि

ज्ञानं प्राप्य प्रज्ञापनं योगान्वेषणञ्च भवत्येवेति । अयमेव गुरुशिष्यव्यवहारः । शिक्षाप्राप्तये स्वेच्छापूर्तिकामनया प्रज्ञापयति—भोः एषा हि ममेच्छा भवति, त्वञ्चज्ञानादसि मत्तो गुरुः, गौरवं प्राप्तो भवान्, अतो मामिदं शिक्षयेति । एवं तदभिप्रायं ज्ञात्वा गुरुः पाठयतीति तत्फलं भवति । तत्संबन्धस्यैव हि प्रज्ञापनरूपस्य गुरुशिष्यरूपत्वम् । एवमेव भावस्सर्वत्रेति निश्चयात्, इच्छायास्सर्वमूलकत्वाच्च सामवेदस्सर्वोऽपि स्तोत्रात्मको भवतीति बोध्यम् ॥

कार्यकालदेशानुरोधेन हि तत्रानेकभेदो भवति । अत एव "भक्त्यास्तोत्रप्रयोजनम्" इत्यादि सर्वत्राख्यातम् । एकस्मैचिन्महते स्वन्यूनतायाः तन्महत्वस्य च प्रकथनं भवति । न्यूनताज्ञापनं तन्महत्वादीनामनुसन्धानञ्च स्तोत्रं भवति । यद्वा केवलं तन्महत्वानुसन्धानं केवलं स्वन्यूनत्वप्रज्ञापनमित्याद्यनेके प्रकाराः स्तोत्रस्य वेदितव्याः । अत एव

" यच्चातीतमनन्तं वै ह्योमित्येतत्परावरम् ।
तस्मिन्नग्रे स्थिता ये च ये लोके सर्वधर्मगाः ।
मत्सर्वस्वाधिपाश्चैव तेभ्यश्चैवं निवेदयेत् ।
मद्बुद्धेरल्पतां पश्य नाहं जानामि किञ्चन ॥
त्वच्चरित्रमिदं सर्वं दृश्यते यच्च किञ्चन ।
श्रूयते तदनन्तत्वं स्वात्मा च ब्रह्मसंज्ञकः ॥

अतश्च महती शङ्का को वा यश्चात्र वर्तते ।
येन सम्यग्विधानेन चान्यतत्वस्य नाशनम् ॥
कथमेवं महत्तत्वं जानामीति महान्तरम् ।
एवं बुद्धेः प्रतिष्ठा च हीच्छा प्रज्ञापनञ्चयत् ॥
तच्च भक्तिपरं विद्धि सर्वथा स्तोत्रसंज्ञकम् ।
सर्वैश्च लभ्यते सर्वं शिक्षा सर्वेण सर्वशः ॥
अतश्शिष्यो गुरुस्सर्वः संसारोऽयं निरामयः ।
इमं हि प्रणवाधारं ज्ञात्वा ब्रह्मणि तिष्ठति ॥"

त्यादि प्रवचनम् । तस्माद्ब्रह्मकल्पनाय भेदतया च तत्वज्ञानार्थं गोत्रमपीति तद्विधानम् । एवंभूतेच्छामात्रं सर्वावश्यकं सर्वाश्रयं कारस्थं सामवेदवेद्यं भवतीत्युपदेशफलम् । अनेनैव बीजेन ऋग्यजुस्सामान्यध्येतव्यानीत्युपदेशफलम् । अत एव ऋग्यजुस्सा-मान्यध्येतव्यानीत्युपदेशः । तस्मात्सर्वसाधनस्वरूपं सिद्धिस्वरूपं परमावश्यकम्, सामवेदोपन्यस्तमिति व्याख्यानेन प्रणवान्तर-मित्येकं स्वरूपं भवतीति सिद्धान्तः ।

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे तृतीयप्रकरणे
॥ सप्तमस्तरङ्गः ॥
ॐ

---

॥ ॐ ॥

## ॥ अथ अष्टमस्तरङ्गः ॥

अथातस्सर्वाविधेयस्समाहारार्थको ह्यथर्वणो वेदः। अत्र च सर्वसंसरणव्यवहारः, यस्य चाहमेतन्नेति महावाक्यम्। अस्मिंश्च वेदे ह्यहमेतदोर्नस्य व्याख्यानं यथायथमुपन्यस्तं भवति। किञ्चात्र क्रियामात्रस्य व्यवहारः, तत्वज्ञानादिलक्षणम्, कर्माद्युपसंहारः, सर्वाश्च ब्रह्मविद्याः, सर्वञ्च ब्रह्मशास्त्रमन्तःप्रतिष्ठितमाख्यातम्। अतश्चाथर्ववेदमात्रज्ञानेनैव सर्वसंसारतत्वस्य बोधो भवतीति विज्ञेयम्। अणूनाञ्च प्रत्येकं यादृशी क्रिया, तादृश्येवाथर्ववेदेन बुध्यते। संसरणमात्रस्य, योगवियोगप्रयोगसंयोगादयोऽप्यत्राख्याताः। समूहरूपस्यास्य वेदस्य चैकदेशत्वेन, ऋग्यजुस्सामानि भवन्तीति बोध्यम्। यद्यपि सर्वं ज्ञानमयं तुल्यञ्च दृष्टं भवति, सर्वेषां साम्यात्; तथापि तदभिधानेन ज्ञानेच्छाक्रियासमाहाराणां पृथगुपादनं भवति। अत एव।

"ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरम् ।
विषयश्च महाभाग याति चैवं पृथक्पृथक् ॥
दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथापरे ।
केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥
यतो हि ज्ञानिनस्सर्वे पशुपक्षिमृगादयः ।
ज्ञानञ्च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् ॥
मनुष्याणाञ्च यत्तेषां तुल्यमन्यत्तथोभयोः ।"

इत्यादि प्रवचनम्। तुल्यत्वमेवात्र सूचितं भवति । सर्वेषां ज्ञानं हि कार्यं तुल्यञ्चास्ति । केषाञ्चिद्रात्रौ बोधः । एकोत्पत्तिमात्रे सृष्टिर्जाते, न बोधो भवति । स च दिवान्धः प्रळयान्तरमनुप्राप्य पुनश्चोत्पत्तौ बुध्यते । द्वितीयश्च रात्रावन्धः प्रळयान्तरं प्राप्तोऽपि न बुध्यते । अनेकसृष्टिप्रळयसन्धानञ्च निरर्थमुपयाति । अन्येऽप्येवं क्रमेण वर्तन्तेऽप्यनेकजन्तवः । परन्तु केवलमेतद् सूचितं भवति । पूर्वावश्यकतया मानवेदरथ्यया बोधभवनमेव फलं भवति, सर्वस्य ब्रह्मरूपत्वात्, तदेकत्वाच्च । एवमेकब्रह्मसन्धानतया हि तुल्यत्वमभेदश्च बुध्यते । यद्यपि तत्र ज्ञानक्रियेच्छाना प्रयोजनं नास्तीति सूचितं भवति, तथापि भवनपौनावश्यकतया सर्वेषां पृथक्त्वैकत्वनिर्देशो युक्तएव । पृथग्दृष्ट्या हि संसारक्रियया, अहं-पेतच्च, अ. उ. मेति प्रकृतिश्चासन्निवस्था भवति । संसरणव्य-

वहारेण त्वैक्यं विज्ञायते । अतश्च सर्वेण सर्वत्र सर्वो बद्धः सर्वथा सर्वदा चेदमेवेति विज्ञेयम् । यावच्च भेदो दृश्यते, तावत्सर्वमनुपयुक्तं भवति । एवं भेदप्रतीतिरेव दुःखम् । अभेदप्रतीतिरेव चात्मदर्शनं परमानन्दमयं स्वच्छन्नं शुद्धं संवृतं भवति । अत एव

" भेदप्रतीतिर्यावच्च तावद्दुःखस्य संस्थितिः ।
तस्मिन्नष्टे महानन्दः स्वच्छन्नब्रह्मरूपकः ॥
ब्रह्मरूपं परं मत्वा क्रियतां कर्मचाखिलम् ।
हानिलाभौ न तत्रैवं नैवमानावमानजौ ॥"
स्यात्समाहाररूपश्च ह्यथर्वा प्रणवात्मकः ।
सर्वतत्वमिमं विद्धि सर्वसिद्धान्तमेव च ॥
सर्वसारमिमं विद्धि भेदनाशं तथा कुरु ।
ज्ञानेच्छे च क्रियानिष्ठे क्रियाज्ञानप्रदर्शिनी ॥
ज्ञानक्रियाया योगे तु चेच्छासंबन्धरूपिणी ।
परिवर्तनपरं विद्धि तद्विवर्तनसंयुतम् ॥
संपरिवर्तनं तत्र तत्रैवमनुवर्तनम् ।
एवमेव विधानेन वेदितव्यं मनोहरम् ॥
एषैव हि महाविद्या सर्वविद्यानुगामिनी ।"

इत्यादि प्रवचनम् । तस्मादथर्वणो वेदस्समाहारनिष्ठो भवति । स च सर्वक्रियाज्ञापक इति तद्भावो विज्ञेयः । वेदे चास्मिंश्च सृष्टे-

रनेकप्रकारः कथितो भवति । यावच्च संसारव्यवहारः सृष्ट्यनुकूलः, तावत्सर्वोऽपि चात्र व्याख्यातो भवति । अधुना प्रत्येकमपि चैतस्यैवानुकरणं भासते । वेदस्यास्य प्रतिमंत्रं संसरणक्रियायाः भानं हि सर्वबीजत्वाद्भवति । ब्रह्मणो ह्यतीतानन्तत्वात्सृष्टेरतीतानन्तत्वञ्चानवस्थितं भवति । अत एव "ज्ञानान्तरे ज्ञानम्, स्मृत्यन्तरे स्मृतिः, शक्त्यन्तरे शक्तिः, क्रियान्तरे हि क्रिया, प्रसिद्धान्तरे प्रसिद्धिः, धर्मान्तरे धर्मः, पापान्तरे पापम्, व्यक्त्यन्तरे व्यक्तिः, एवमादयस्सर्वेऽप्यनवस्थापरा बोध्याः इति च लोकव्यवहारेण बोध्यम् । उदाहरणञ्चात्र स्वस्वगेहं शरीरं संबन्धश्चेति । दृश्यतामिह—स्वगेहेऽपि गेहमेकं स्वनिवासाय निर्मितं परिदृश्यते, तत्राप्यनेकमान्दिरम्, त्वदीयं मदीयं तदीयमस्येदमित्यादिविभागः । यद्यप्येवं शरीरेऽपि पश्यन्तु, सर्वेऽप्यवयवाः रूपञ्चावयवि, तथापि तत्रावयवानां पृथक्पृथगुपादानम् । एवमेव वीर्यवृक्षव्यवहारोऽणावपि द्रष्टव्यः । सर्वत्र सर्वाभिधाने चैवं प्रकारः । तत्सर्वमथर्ववेदस्यैकस्मिन्नेव मन्त्रे, एकशब्देन च संप्रदृश्यते । अत एव

" सर्वस्यैवान्तरे सर्वसंसारोऽप्यभिधीयते ।
इदमेव परं तत्वं तन्मन्त्रेणैव भासते ॥
एकैकेन च शब्देन सर्वसंसारदर्शनम् ।

सात्त्विक्यः क्रियास्सर्वाः यथानन्तादिवर्जिताः ॥
तथैवाथर्ववेदस्थः शब्दश्चैवं समाश्रितः ।"

इत्यादि प्रवचनम् । तस्मादथर्ववेदे समाहाररूपञ्च संकीर्णं समाख्यानं भवति ।

प्रथमस्तु ज्ञानेच्छाक्रियाविशिष्टः अहमेतदिति रूपः, द्वितीयश्चेच्छाक्रियाज्ञानविशिष्टः, तृतीयश्च ज्ञानक्रियेच्छाविशिष्ट इति चास्य क्रमः । अत एवाथर्ववेदे ब्रह्मणः शिवस्य विष्णोः ब्रह्मविष्णोश्च पृथक्पृथक्कर्तृत्वेन प्रवचनम् । समरणादिभागादन्येषामपि चैतन्यत्वात्तादृशं कर्तृत्वमुपपन्नं भवति । अस्मिंश्चाथर्वणे वेदे समाहारसंभावनया सच्चिदानन्दमिति स्वच्छन्दस्वरूपाख्यानम् । सत्, चित्, आनन्दम्, इति तदर्थो विज्ञेयः । तेषान्त्रयाणाञ्च समाहाररूपत्वेन प्रवचनम् । समाहारं कृत्वा हि चैतन्यैकत्वं प्रतिपादितं भवति । तत्र च सदंशोऽप्येकः, चिदंशश्चैकः, आनन्दांशश्चैकः, एवं मूलांशत्रयेण च ब्रह्मेति प्रतिष्ठितं भवति । यद्यपि पृथक्त्वेऽप्येकैकस्यापि ब्रह्मरूपत्वमुक्तम्' "सद्ब्रह्मेति चैतन्यं ब्रह्मसदन आनन्दमनन्वयं ब्रह्म" इत्यादि श्रुतेः; तथापि ब्रह्मैक्यप्रवचनतया त्रयाणामभेदः सूचितो भवति । एतेषां त्रयाणां नियमस्य चैक्यं सर्वत्राख्यातं भवति । तस्मात्सच्चिदानन्दस्वरूपमिति हि तादृशं त्रितयत्वबोध्यम् । अत्र हि सदिति क्रिया, चिदिति ज्ञानम्,

आनन्दमिच्छेति प्राधान्येन बोधः । अत एव "सद्रूपो ब्रह्मा चिद्रूपो विष्णुः आनन्दरूपश्शिवः" इत्युक्तम् । यद्यपि देशतः कालतः वस्तुतश्चापरिच्छिन्नं सदिति चोच्यते, तथापि चासत्तदन्तरा देशकालवस्तुभिन्नंसदित्यस्य प्रवक्ता न कश्चिदपीति व्याख्यानेन बोध्यम् । अपरिच्छिन्नं हि, देशकालवस्तुभिश्चाप्रमेयन्नाम तदाद्यन्तमपरिभाव्यम् । इदमेवास्ति सदिति न वक्तुमुचितम्, इदमेव तत्फलं भवति । अत एव संसारस्य मिथ्यात्वेन प्रवचनम् । यद्धि न सत्, नैवासत्, सदसद्विशिष्टश्च; तन्मिथ्या । मिथ्यायास्संभवोऽपि मिथ्याभूत एवेति बीजात्सर्वं मिथ्येति प्रवचनम् । अत एव सदसदखिलात्मकं जगदिति न्यायप्रवचनम् । किञ्च "सदसदेतन्नानामिथ्यारूपं वा" इति ब्रह्मसूत्रम् । तत्रासदिति न किञ्चिदिति व्याख्यानम् । असदिति पदेन देशकालौ गृह्येते । देशकालयोर्युक्तत्वमेव सदसच्चेति प्रतीयते । तस्मात्सदंशे देशकालवस्तूनां त्रयाणां ग्रहणं भवति । एतत्त्रितयमेव संसरणम् । अतस्सादिति क्रियापरं वेदितव्यम् । कारणञ्चास्य केवलं समाहार एव । समाहारे तु वस्तुद्वयापेक्षा । अपेक्षया हि वस्तुद्वयं सदसादिति चात्र परिदृश्यते । अतस्तयोस्समाहारो भवति । तस्माद्धि सदंशः क्रियानिष्ठो ब्रह्मेति सिद्धान्तः । चैतन्यंचिदिति व्याख्यानाच्चिदंशो हि ज्ञानम्, तन्निष्ठश्च विष्णुरिति बोध्यम् । चिदित्यस्य संज्ञानपर-

त्वम् । सम्यग्ज्ञायते सर्वं स्वपरमिति संज्ञानाख्यानतया, चिदिति चैतन्यस्वरूपमात्मेति शब्दशास्त्राभिमतं भवति । कारणञ्चास्याह-मेवेति विज्ञेयम् । आनन्दरूपश्शिव इति सर्वत्रोपन्यस्तम् । सर्वा-नन्दमयः, स्वच्छन्नः, सर्वतो निवृत्तः, संहारहेतुः, शिव इति प्रशस्तं भवति । अत एव

" सद्रूपा च क्रिया लोके सर्वसंसारकारिणी ।
चिद्रूपं परमं ज्ञानं परन्तत्त्वमगोचरम् ।
आनन्दस्सर्वदैवेच्छा सर्वावश्यकसाधनी ॥"

इत्यादि प्रवचनम् । एवमेव

" सद्रूपो भाव्यते ब्रह्मा चिद्रूपो विष्णुरेव च ।
सर्वानन्दमयं विद्धि शशङ्क सर्वसाधकम् ॥"

इत्यादि प्रवचनम् । तस्मात्सद्रूपो ब्रह्मा चिद्रूपो विष्णुः आन-न्दश्शिव इति सिद्धं भवति । अत एव शिवस्यानन्दरूपत्वात्तद्वि-शेषणं मुण्डमालादिकं भवतीति विज्ञेयम् । अत एव

" शेते सर्वेषु भूतेषु सर्वसंहारकारकम् ।
त्रिनेत्रं पञ्चवक्त्रञ्च मुण्डमाला विभूषितम् ॥
व्याळमालाकुलं नित्यं परेशं पार्वतीपतिम् ।
नमामि जगदाधारं सर्वानन्दाभिगामिनम् ॥ "

एवं हि किल तस्यार्थः—सर्वस्मिन्शेते इति

यदा कार्यानुरोधेन संज्ञाकालस्य लक्ष्यते ।
क्रियाज्ञानेच्छया नित्यं भवेत्सर्वानुकल्पनम् ॥
प्रळयात्मकश्च यः कालश्शिवस्यासौ सनातनः ।
व्याळरूपंस्स्वयं धृत्वा संसारमभिगच्छति ॥
कालेन नियतं विश्व कालेनैव विनश्यति ।
कालरूपान्तरो भूत्वा नानात्वमभिकल्प्यते ॥
यच्च किञ्चित्क्वचिद्वस्तु सर्वस्थं सार्वकालिकम् ।
तत्सर्वं कालिकं विद्धि कालक्रीडान्तरं जगत् ॥
चन्द्रो भौमो बुधश्चैव मासाब्दयुगकल्पकाः ।
अनेन नियतास्सर्वे जगन्मात्रं प्रभापुरम् ॥
अस्यैवावर्तनं नित्यमस्मिन्नेव हि सर्वशः ।
अस्यैवानेकसंज्ञास्स्युः संप्रयोगो यथावृतः ॥
नकारात्मा ह्ययं कालोऽहमात्मकमिदं तथा ।
ऐतदात्म्यमिदं विद्धि कालरूपं त्रिधा स्थितम् ॥
नकारात्मको यः कालः व्याळसंज्ञस्समानजः ।
तेन सर्वस्य नित्यं वै जायते प्रळयस्स्वयम् ॥"

इत्यादि प्रवचनम्। तस्मात्प्रळयात्मकः कालो व्याळोभवति । स
एव शिवस्योपवीतं कङ्कणं कुण्डलं सर्वाङ्गाभरणञ्च भवति। आभ
रणञ्च क्रियापरमिति व्याख्यातम्। प्रळयरूपा च या वा क्रिया

तद्वारणमेव शिवस्येति विज्ञेयम् । एवं प्रळयकार्ये या वा क्रोधा-
द्युद्भावना, सैव हालाहलं भवति । क्रोधमन्तरा न विश्वविनाशे
प्रवृत्तिर्भवतीति सर्वोक्तिः । लोकोदाहरणेनापीदमवधेयं भवति—
विना च क्रोधं न केषाञ्चिदपि दुष्टं प्रतिवचनादिकं संभवतीति ।
अतः कारणञ्चात्रेदमेवेत्यवधेयम् । किञ्च नकारवाच्यस्य निषेध-
स्यापि कारणं तादृशमेव । यथा ज्ञानादिना क्रिया भवति,
तथैव क्रियाविनाशोऽपीति विज्ञेयम् । न हि विनाशो निष्कार-
णइति सर्वत्र स्पष्टं भवति । अत एव " विषवृक्षोऽपि संवर्ध्य-
स्वयंच्छेत्तुमसांप्रतम् " इत्याद्युक्तिः। तादृशावश्यकतैव तत्क्षयकारणं
भवति, तदावश्यकतया तद्विनाशो भवतीति नियमात् । नाश-
कार्ये प्रवृत्तिरेव हि हालाहलपानं भवति । तच्छिवस्येति सर्वो-
क्त्या विज्ञेयम् । अत एव समुद्रमथनमपि भवति । तस्मादेव हि
हालाहलोत्पत्तिर्युक्ता भवति । समुद्रश्च सर्वाभियुक्तः। कार्यञ्च तत्र
तद्ब्रह्ममथनम् । तच्चावश्यकं भवति । तस्मात्सर्वाणि हि रत्नानि
संभूतानि भवन्ति । सर्वरत्नानि चाहमेतत्रेति विज्ञेयानि । तत्रा-
हमेतदोर्नश्वमेव हालाहलं भवति । तच्च शिवेन पीतम्। अत एव

" अखिलस्सार्वविकं ब्रह्म तदेवं प्रणवार्णवः ।
मन्थनन्तत्र नित्यं वै चातीतं कार्यमेव तत् ॥
तस्मात्सान्निसृतं सर्वं वाक्यं रत्नमयं परम् ।

व्युत्पत्तेः । तद्ग्रहणस्याभावरूपत्वमघोर इति स्पष्टोऽर्थः । अघोराणां मन्त्रं अघोरमन्त्रम् । अघोराणां सर्वकर्मणां विनाशनं मंत्रमिति भवति । नकारात्मकावधारणेन हि घोरमंत्रम् । तस्य च पञ्चवक्त्रक्रमेण पञ्च इति प्रसिद्धिः । तेषां पञ्चमंत्राणां सततक्रमनियतात्मानुच्चारणेन तज्जपेन वा घोरस्वभावविनाश इति तन्माहात्म्यम् । अत एव

" पञ्चमंत्राण्यघोराणि प्रणवावेष्टितानि च ।
जप्यमाने महाधर्मः साक्षाद्देवं शिवो भवेत् ॥
चतुर्णां कार्यमुख्यानां विज्ञानं यत्परावरम् ।
तस्य संस्थितिमाज्ञाय पञ्चमं तद्विनाशनम् ॥
एवं क्रमेण तन्मंत्रं शब्दशास्त्राभिनिर्मितम् ।
प्रणवस्थमिदं सर्वं न शब्देन हि सर्वथा ॥"

इत्यादि प्रवचनम् । तस्मादित्थं भूतानि पञ्चशिवमंत्राणि भवन्ति । तेन कामदहनाङ्गविभूषितभस्मविलेपनमप्यभिधीयते । तन्मन्त्रेण भस्मनः पवित्रीकरणत्वमुक्तं भवति । पवित्रीकरणं हि तत्राभिनिवेशनरूपम् । तच्छक्त्या भस्माभिधारणन्नाम तादृशाचरणकरणं भवति । भस्म हि प्रलयकार्यरूपम् । कामदहनाङ्गविभूषितः इत्यस्य, कामस्य दहनः कामदहनः अङ्गे विभूषित इत्यर्थः । कामदहनस्तावत्कामनाराहित्यमेव । परित्यक्ते कामादिके सति, योत्वा-

कारः, तस्य धारणे दैवलिखितानि दुरक्षराणि लुंपतीत्यत्रासंदेहः।
दैवलिखितं हि शुभाशुभकर्मफलभूतन्दुरक्षरम्। स्वक्षरं हि केव-
लसम्बन्धारोपणेन दुःखादिभानात्मम्। सति च कामनादिवि-
नाशे नरत्वादेरपि नाशः। तस्माद्दुरक्षरं स्वक्षरञ्च न किञ्चित्सर्वं
स्वभावपरभवनमेव लुंपनमिति च सर्वत्र व्याख्यातं भवति।
अस्मादेव हेतोस्तदाह विभूतिधारणमुच्यते। विशेषेण यद्भूति-
धारणं तदेव विभूतिरिति विज्ञेयम्। तद्धारणं हि सर्वकर्मनिवर्तन-
रूपमेवेति तत्सिद्धान्तः। तस्माच्छिवः हालाहलं धृत्वा प्रलयादि-
कारणभूतः कैलासशिखरे निवसतीति स्पष्टमवगम्यते। कैला-
सशिखरस्तावद्योगशिखरः। योगस्यैव वियोगो भवति, वियोग
एव प्रलयः इति सर्वत्र व्याख्यानात्। अहमेतदोर्योगरूपे
कैलासे तस्य वासो भवति। अत एव

"अकारोकारयोर्योगः कैलासः परमो गिरिः।
तिष्ठते शङ्करस्तत्र भूतप्रेतादिसंयुतः॥
नित्यं हालाहलं पीत्वा सर्वस्वं च विनाशयते।
ज्ञात्वा विनाशं तेनैव तस्य नाशानुभावनात्॥
अहमश्चैतदश्चैवं पूज्यतास्ति यथायथम्।
शिवसंदर्शनेनैव सर्वशोको विनश्यति॥
तद्विभूतिधरः प्राप्नोत्यखिलां सपदं सदा।

आपदं हरते नित्यं धर्मकामार्थदायिनी ॥

इत्यादि प्रवचनम् । एवमेव

" पीत्वा हालाहलं नित्यं नाशयत्यखिलं जगत् ।
स्वच्छन्नं सावकाशञ्च कैलासे चास्यसंस्थितिः ॥ "

इत्यादि प्रवचनम् ।

अथ शिवस्य मृगचर्मांबरत्वम्, भूतप्रेतादिसङ्गश्च विज्ञायते । मृगचर्म च तमोगुणः । मृगस्य चर्म मृगचर्म, मृगश्च महाविष्णोर्वाहनभूतः कालः, तस्य चर्म च ह्येवं विनाशक्रमः, स एवांबरं यस्येति तदर्थः । एवं मातङ्ग चर्मेत्यप्युच्यते, मातङ्गो गजः, तस्य चर्मेति तदर्थः । तङ्गो हि विस्तारः, समेतीति तदर्थः ; विस्तृतस्यैव विनाश इति तदाख्यानात् । यदिदं जगद्विस्तृतं सर्वाविर्भूतम्, तद्विनाशश्च बोध्य इति तदर्थः । एवम् " त्रिशूलधर : शिवः" इति प्रवचनम् । शूलं हि तिस्रश्शक्तयः, तत्समूह एव त्रिशूलं भवति । तिस्रश्शक्तीः विस्तार्य, गृहीत्वा वा, सर्वं सर्वदा सर्वत्र सर्वथा नाशयतीति विज्ञेयम् । अत एव " नटराजराजः शिवः" इति विज्ञायते । क्रियते पाल्यते, पुनरेवं नश्यते चेत्यनन्तानन्तक्रमप्रदर्शनमेव हि नर्तनं भवति । एवमेव हीदं क्रीडाकरणम्—एकं वस्तु च संस्थाप्य पुनस्तस्यान्यत्र करणम्, अन्यदेशस्थस्य तदन्यत्र करणम्, यस्मिन्कस्मिंश्चित्स्थि-

तस्य तस्मिन्करणम्, तस्मिन्स्थितस्य कस्मिन्नपि करणम्, कस्मिन्नपि स्थितस्य कुत्रचित्करणमिति । इदमेव हि शिवस्य कार्यमिति विज्ञेयम्। विनाशस्तु न केषाञ्चिद्भवति, सर्वस्य सार्वत्रिकत्वात्। भिन्नभिन्नकरणमेव तत्कार्यं भवति। सर्वथा प्रळयानन्तरश्च पुनर्भवः इति स्पष्टव्याख्यानतया, पुनस्तत्र तदुत्पत्तिधारणं विज्ञायते; तदेव हि ढक्कानादः । ढक्का च स्वस्वरूपम्, नादः, तच्छब्दः। सर्वस्मिन्नपि स्वरूपे शब्दारोपणं भवति, शब्दस्यैव प्राथम्यात्। शब्दमन्तरा कालादेर्न निर्वचनं भवति। तस्मात्तन्निर्वचनाभिधानेन प्रळयानन्तरं शब्दाभिनिवेशनं भवति। सर्वं हि स्वरूपं शब्दप्रतिबद्धं भवति, पश्चाच्च ज्ञानम्, ततः पुनः क्रिया भवतीति वेदैस्स्पष्टमवगम्यते । शब्दं विना ज्ञानस्यासंभवात्, शब्दनिर्माणं पूर्वं भवति। सर्वं प्रळयस्थमेव, प्रळयकर्ता हि साक्षाच्छिवः, नकारात्मकः। तस्मिंश्च स्थले स एव पूर्वः। तस्माच्छब्दनिर्माणं शिवादेवेत्यवगम्यते। अत एव

> "प्रळये च यथायोग्यं सर्वं शब्देन वेष्टितम्।
> ज्ञानवानहमेवास्मि ततश्चैतत्प्रकल्पयेत्॥"

इत्याद्युक्तिः। अत एव "ननाद ढक्कां नवपंचवारम्" इत्याद्यपि च। तस्मात्सर्वमिदं नकारस्वरूपं शैवं सार्वत्रिकमिच्छापरश्चेति वेदितव्यम्। नकारस्याभेदव्यञ्जकत्वादभेदस्यानन्दरूपत्वाच्चानन्द-

रूपश्चिव इति विज्ञेयम् । चिद्रूपो हि महाविष्णुः । अस्य तु चतु-र्भुजः वनमालाविभूषितः शङ्खचक्रगदाधरः मुकुन्दः परमेश्वरः किरीटी मकुटी शुद्धः श्यामलाङ्गः प्रकाशवान् चिन्मयः चित्स्वरूपः सर्वजनपालोद्भवः इत्यादि विशेषणं भवति । अत्रापि च शङ्खचक्र गदाधर इत्यनुक्त्या तादृग्ज्ञानाद्युपलक्षितः भवति । एवं सत्त्व-रूपो ब्रह्मा, अयञ्च लोककर्ता पितामहः कमलासनः स्वयम्भूः परमेष्ठी परात्मकः धाता विद्यारूपो महाबुद्धिः स्रष्टा वेधाः परा-भवः इत्यादिभिरुच्यते । सत्वरूपं चात्र क्रियानिष्ठं वेदितव्यम् । क्रियाज्ञानेन भवनसंभवात्, कमलासनादयः तद्विशेषणस्वरूपा भवन्ति । तस्मात्सच्चिदानन्दं हि समाहाररूपं क्रियाज्ञानेच्छानिष्ठं च भवति ।

अत्र हि क्रमभेदे मुख्यमिदं कारणं भवति । प्रत्यक्षेणै-वानुमानं भवतीति निर्णयात्प्रत्यक्षाश्च सर्वाः क्रिया भवन्ति । क्रियादृष्ट्या ह्येवं विचारो भवति—अस्ति कश्चिदस्य नियन्ता ज्ञापको नियामकश्च इति । विचारेणानेन बोधोऽप्येवं भवति—तच्चित्स्वरूपम्, पुनरेवं परिभावनम्, एतयोः कः संबन्धः, केन वा नियमेन सच्चिदोरनुष्ठानमिति । एवं विचारेण चेच्छानन्द-मयी संबन्धरूपिणी त्वपि च बुध्यते । द्रष्टव्यमेवमस्मिन्संसारे सर्वं पूर्वं सर्वं परं सर्वमपरञ्चेति । तत्र सर्वस्य पूर्वत्वं परत्वमपरत्वञ्च

दर्शयितुं सम्यग्विचार्य ह्यनेकप्रकारविहितं वाक्यं भवति। तत्र प्रथमन्तु, अ, उ, म. इति। तच्च पृथक्प्रदेशम्। ततश्चोमिति संबद्धः प्रदेशः। अयञ्च सार्वत्रिको भवति। पुनश्च तत्र विभागः। तत्रैकस्संसारार्थप्रवचनश्चाहमेतन्नेति संबंद्धो तद्विभागश्च भवति, पुन स्तत्परिवर्तनम्, पूर्वपरापरक्रमविनाशज्ञापनार्थं सर्वस्यैकविधानार्थञ्च समाहाररूपे ह्यथर्वणे वेदे सच्चिदानन्दमित्युक्तम्। अत एव "क्रियया ज्ञानेन चेच्छया वा ज्ञानक्रियया क्रियेच्छया वा सर्वमारभ्यते, अस्मात्तस्माद्यस्मात्कस्माद्वा येन तेन केनानेन सर्वेण सर्वं यंतमेतत्सेनमिमङ्कं विद्धि" इत्यादि समाहारमन्त्रम्। तस्मात्सर्वैस्सर्वेषामारंभः, न्वर्वासाश्चेति स्पष्टं सिद्धम्। एवं बीजेन हि सच्चिदानन्दं ब्रह्मस्वरूपं त्रैमूर्तिकम्, तादृशब्रह्मादिव्यवहारेण सर्वस्मिन्नणावपि सच्चिदानन्दरूपत्वञ्चेति बोध्यम्। अत एव

"सज्ज्ञात्वा च चिदं ज्ञात्वा ज्ञात्वानन्दं समात्मकम्।
स्वज्ञानं प्राप्यते नित्यं सर्वं ब्रह्मेति तत्फलम्॥
क्रिया ज्ञानञ्च तज्ज्ञानं ज्ञानं चिज्ज्ञानमेव च।
आनन्दः कामना ज्ञानं त्रित्वं संसारकारणम्॥
चिदाकारमिदं विद्धि चैतन्यमहमेव च।
तच्चोकारमयं विद्धि चानन्दं प्रणवस्थितम्॥
उकाराकारमकारैस्सच्चिदानन्दमूर्तिमान्।

त्रिकूटश्च त्रिवेण्येषा सर्वमङ्गळदायिनी ॥
एतदावश्यकं यच्च यत्स्वभावपरं सदा ।
परिवर्तनादिभावेन ब्रह्म विद्धि परावरम् ॥
प्रथमं सदिति ज्ञानं चिदानन्दं ततः परम् ।
एतदावश्यकी शक्तिर्गङ्गा मुक्तिप्रदायिनी ॥
अत्रावश्यं हि त्रितयं क्रमस्स्याद्भिन्नसंस्थितिः ।
शक्तिरेतत्त्रयाणां वै क्रमो भेदेन सर्वथा ॥
गङ्गा सरस्वती संज्ञा यमुना त्रितयात्मिका ।"

इत्यादि प्रवचनम् । तस्मात्सच्चिदानन्दं ब्रह्मेति समाहारवचनम् । अयमेव त्रिकूटस्त्रिवेणी च भवति । अवस्थाभेदेनैव नामभेदः । क्रमभेदश्चैवावस्थाभेदः इति व्याख्यानात् , क्रियायाः पूर्वत्वं ज्ञानस्य च परत्वं इच्छायाश्चापरत्वमिति भेदाच्च त्रिवेणी च तदावश्यकता भवति । सतः पूर्वावश्यकताया च गङ्गा , चितः परावश्यकता यमुना, आनन्दस्यापरावश्यकता च सरस्वतीति विज्ञेयम् ।

एतत्त्रयाणामपि तादृशशक्त्यधिष्ठितत्वं विज्ञेयम् । अस्याश्चैवानुकरणं ह्यस्मिन्शरीरेऽपि, इडा पिङ्गळा सुषुम्ना चेति तिस्रः नाड्यः ब्रह्मरूपिण्य इति स्पष्टं विज्ञायते । अस्मादेवबीजात्सच्चिदानन्दस्वरूपं ध्यायतामित्युपदेशः । यद्यपि ब्रह्मविष्णुशिवाना

त्रयाणां प्रत्येकं सच्चिदानन्दरूपविशेषणम्, तथापि तत्त्रितयं कार्य-
परं वेदितव्यम्। प्रत्यण्वपि चैतत्त्रयस्योपस्थितेः, सर्वमेतत्त्रित्व-
विशिष्टं सर्वानुगतं सर्वार्थं भवतीति विज्ञेयम्। एतदभिधानेनैव
क्रियापि देशपरा, देशश्च कालपरः, कालोऽपि देशक्रियापर इति
सर्वेऽपि सर्वैस्संबद्धा इति प्रदर्शिता भवन्ति। अत एव सच्चि-
दानन्दमिति सर्वं विशेषणम्। सर्वस्य चेति पृथग्विशेषणमप्यु-
पस्थितो भवति, मुख्यकार्यानुरोधात्। अत एव

"सद्रूपो हि क्रियानिष्ठो जगत्कर्ता पितामहः।
विशिष्टस्सर्वभूतैश्च चिद्रूपो विष्णुरुच्यते॥
आनन्दं परमं विद्धि शिवं संबन्धरूपिणम्।
ब्रह्मविष्णुशिवान् ज्ञात्वा मुक्तिं प्राप्नोति मानवः॥
सर्वं ब्रह्मान्तरं विद्धि सर्वमेव शिवान्तरम्।
सर्वं विष्ण्वन्तरं विद्धि सर्वं शक्तिपरायणम्॥
सर्वा लक्ष्मीः परा प्रोक्ता सर्वैषा शारदा परा।
सर्वा सती परा प्रोक्ता परा विद्या हि पार्वती॥
यथा यथा क्रमेणैवं सर्वस्यैवानुवर्तनम्।
सर्वं सर्वान्तरं ज्ञात्वा चोङ्कारं विद्धि निश्चितम्॥
अतीतश्चानतीतश्च तदाद्यन्तविवर्जितम्।
अनाद्यन्तन्ततो भिन्नं सच्चिदानन्दसंज्ञकम्॥

सर्वमूलं सर्वसिद्धं सर्वशाखासमन्वितम् ।
समाहारं समाधिस्थं समायुक्तं समात्समम् ॥
अथर्वाणं क्रमस्थञ्च रूपमेवं व्यतिक्रमम् ।
सर्वस्यातिक्रमं विद्धि सर्वात्मकमिदं तथा ॥
त्रिवर्णस्थं परं नित्यं प्रकृष्टं पूर्वसंज्ञकम् ।
पूर्वापरपरोद्भिन्नं कालदेशविवर्जितम् ॥
कालदेशक्रियानिष्ठं प्रतिष्ठं प्रणवेक्षितम् ।
ब्रह्म ज्ञात्वा स्वयं ब्रह्म भूत्वा सिद्धान्तसाधनम् ॥
अथर्वस्थञ्च यत्किञ्चित्तत्सिद्धान्तमनुष्ठितम् ।
तत्परं हृदयं सारं प्रत्यण्वपि च दृश्यताम् ॥
अभेदं सर्वथा ज्ञात्वा समाचारो विधीयते ।"

इत्युपदेशः । तस्मात्सर्वपरं सर्वस्थं सनातनं सच्चिदानन्दरूपं इति प्रणवसंज्ञकं बोध्यम् । सच्चिदानन्दमित्यत्र प्रतिपदं त्रिषु वर्णेषु चैवमर्थो द्रष्टव्यः—यः अकारः सोऽमृतम् ; यत् स् तन्मृतम् , यत् त् तत्त्राति , एवं यत् इ तदहं शक्तिः, यत् च स चरति स संसारः, यत् त् तत्पतति विनश्यति , एवं यः आस आत्मानात्मसहितैः, यन्न तज्ज्ञानमात्मानात्मयोगरूपम् , यदं स ददाति सर्वमिति । अस्यावश्यकता हीच्छारूपा । एवं क्रमेण सति चिति आनन्देऽपि च वेदितव्यम् । प्रतिशब्दमपि त्रित-

प्रतिपन्नात्, तादृशसमाहारत्वं क्रमाक्रमसहितं वेदितव्यम् ।
अत एव

" सदित्येतत्त्रयं विद्धि त्रिवर्णात्मकमेव हि ।
तादृशं चित्स्वरूपेऽपि त्रितयं ब्रह्मसंज्ञकम् ॥
तादृशश्चापि चानन्दे सर्वसंबन्धसंवृतम् ।
अकारोकारमकारास्समाहारव्यवस्थिताः ॥
ज्ञानक्रियेच्छाभियुक्तमेतदेवमहन्न च ।
अथर्वस्थाः क्रियास्सर्वाः समाहारपरा मताः ॥
परिवर्तनादियोगेन प्रत्यण्वपि भवन्ति हि ।"

इत्यादि प्रवचनम्।तस्मात्सर्वसिद्धान्तज्ञापकमंत्रमिदं सच्चिदानन्दामि-त्यथर्वास्थितं वेदितव्यम् ।तत्र सदिति क्रियापरम्,चिदिति ज्ञान-परम्,आनन्द मितीच्छापरम्। प्रधानमेकञ्च ब्रह्मेति व्याख्यानफलम्। सर्वत्रेदं स्पष्टमुक्तं भवति- सर्वशास्त्राद्युपदेशाध्ययनाध्यापनादिव्यव-हारस्य सर्व क्रियामात्रस्यफलमिदम्,परिवर्तनविवर्तनसंपरिवर्तनानु-वर्तनज्ञानं भवति,एतज्ज्ञानमेव ब्रह्मत्वम्,तावत्पुनस्तादृशकल्पनमेव कार्यमिति तत्फलम् , तादृशञ्च देशनिर्माणम् , क्रियानिर्माणम् , कालनिर्माणम् , तेषां संबन्धनिर्माणम्, देशकालक्रियाणां फल-निर्माणम्, पुनस्तेषान्निर्मितानामपि तादृशव्यवहारप्रज्ञापनम्, इद-मेव प्रज्ञापनं सनातनो धर्मः, वैदिकः, सर्वयज्ञः सर्वसिद्धान्तः इति

तत्प्रज्ञापनायैव सर्वप्रकाराणामुपदेशः । तेन सार्वत्रिकनियमेन ह्याचारः कर्यव्य इत्युपदेशः । वस्तुतस्तु चैतदात्मनः न किञ्चिदपि प्रयोजनमस्ति, ''सर्वथा निरस्तः समस्तः सर्वाभीष्टश्चाभिधेयोऽनुषिद्धः, सर्वायुक्तस्सार्वत्रिकस्सर्वरूपः, आत्मानात्मनोश्चान्तरं लक्ष्यमेतत्, नित्यं तत्वं तत्वसिद्धान्तमेतत्,रूप सारं सर्ववेदान्तमेतत्, विद्याज्ञानं तापसं ज्ञानमेतत, नित्यम्, शुद्धं सार्वत्रिकं सर्वमेतत्, अन्यद्भूतं भावन स्वस्वरूपम्, देशः कालः कालिकं चित्स्वरूपम् , ज्ञानम् , सत्यम् , सच्चिदानन्दरूपम् , सर्वे ह्यष्टास्सर्वसिद्धान्तमेतत्, शुद्धो भावस्सार्वत्रिकत्वात्तमेतत् , ज्ञानञ्चेच्छा वा क्रियारूपमेतत्, आत्मानात्मवर्जितं युक्तमेतत् , सर्वं सर्वं सर्वमेतत्प्रसरणम्, सर्वा सर्वा सर्वस्था सार्वत्रिकी, सत्यं सत्यं सर्वमेतात्त्रिसत्यम् , सत्यं सत्यं सत्यसिद्धान्तमेतत् ,'' इत्यादिभावस्थं तत्वं परमात्मानं सच्चित्स्वरूपमानन्दाधिभूतं सर्ववेष्टितं सर्वेष्टकामिष्टरूपं समाहारजं समाहारश्चाथर्ववेदेन पश्येदित्युक्तेः । एवं बीजेनैव हि सच्चिदंशे , आनन्दांशे चाभेद उक्तो भवति—आनन्दं चित्सद्ब्रह्म, चित्सदानन्दं ब्रह्मेत्यादि । अत एव

'' तदानन्दं चित्सद्ब्रह्म सदानन्दं चितः परम् ।
सच्चिद्ब्रह्म तदानन्दं ब्रह्म चित्सत्समाहृतम् ॥

न सद्ब्रह्म न चिद्ब्रह्म नानन्दं ब्रह्म केवलम् ।
चिदानन्दश्च सद्ब्रह्म ह्योमित्येकाक्षरावृतम् ॥"

इत्यादि प्रवचनम् । तस्मात्त्रयो वेदाः ऋग्यजुस्सामानि समाहृतानि चाथर्ववेदेन । त्रिष्वपि तेषु व्यतीतक्रमश्च सच्चिदानन्दवद्द्रष्टव्यः । सति चाथर्वणे, संसारभावप्रदर्शनायैवायं विधिरिति सर्वसिद्धान्तो भवति । अस्मिन्नेव वेदे सर्वेषां महावाक्यानामृग्यजुस्सामगतानां परिवर्तनमभिधीयते । वेदे हि चास्मिन्नेव विविधमंत्रवाक्यानां प्रयोगः, एकस्मादेकस्य भवनम्, अनेकेष्वेकसंभावना, तद्व्यापारफलञ्च समम्, सामानाधिकरण्यमेकरूपम्, त्यागः, ग्रहणम्, अपरित्याज्यमग्राह्यञ्च सर्वमाख्यातम् । अस्मिन्नेव हि वेदे, सर्वक्रियामात्रस्य संसरणव्यवहारस्य सर्वाभ्यनुगतिः, दृश्यताम्—आत्मानात्मनोरिच्छायाश्च त्रितयत्वनिर्णयानन्तरमेव, को वा व्यवसायः कीदृशी हि क्रिया चेत्यादिसर्वस्य सकारणस्य बीजत्वमाख्यातम् । ब्रह्मणश्चानेका व्यक्तिः, एवमेव शिवस्य विष्णोश्चापि तादृशानन्तक्रमेण सर्वव्यवहारः, ज्ञानेच्छाक्रियानुभवनञ्च सर्वं प्रदर्शितम् । तादृशावश्यकतयैव शक्तेरप्यभिधानम् । अतः, यथायोग्यं संसरणशीलं विश्वमिदं वेदितव्यम् । अत एव

"यच्च सर्वं क्रियामात्रं ज्ञानेच्छासंपरायणम् ।
देशकालपरो भावः क्रियाभावस्सनातनः ॥

अन्यदेतदिदश्चैव ततश्चैवं यतस्तथा ।
यानि कानि च सर्वाणि समाहारवृतानि च ॥
प्रत्येकश्चानुभवेन द्रष्टव्यः प्रणवः परः ।
अकारोकारमकारस्थं विधानं सदुत्तमम् ॥
कृते संसरणे भावे सर्वं प्रादां यथायथम् ।
अकारोकारमकारस्थाहमेतत्प्रवर्तनम् ॥
सर्वमात्रविधानानामाचारश्चान्तरायणः ।
अथर्ववेदे संसिद्धे संपत्तिस्तु परोदयम् ॥"

इत्यादि प्रवचनम् । तस्मात्सर्वस्वमिदं यथायोग्यम्, सर्वेषां सम्यक्प्रयोगः, सर्वेषामप्यणुमात्राणां सम्यग्व्यवहारः, प्रकल्पनश्चानवस्था परा, सर्वाभिनियतम्, सच्चिदानन्दम्, सम्यक्परिवर्तनं सर्वमोमित्येकाक्षरवेष्टितमित्यथर्वविधिना विज्ञायते । तथा च, क्रियाज्ञानेच्छानां साम्यम्, सर्वाभिनिष्ठं सार्वदेशिकं सार्वकालिकश्चैतदथर्वज्ञानफलं भवति । अत्र हि आकाशादीनां सम्यक्परिभावनम्, तत्वमहत्वबुद्धिप्रकृतिमायापरावरप्रतिष्ठितं सर्वमाख्यातम् । तथा चाकाशवाय्वोरेकवृत्तित्वम्, आकाशे एव पूर्वादितत्वप्रयोगः, वायौ चाकाशत्वाभिनिवेशनम्, एवं तेजसि चाकाशवाय्वोः प्रवेशः, एवमप्सु सर्वाभिनिवेशनम्, एवं पृथिव्याः तादृशी च सर्वोपस्थितिः, तदाद्युपयोगेन सर्वसाधारणविधिना संप्र

योगः, एवं विनाशकालिकसर्वनियमः, यथा पार्थिवधर्मं सामान्येन विपरीततया वा तद्व्यापारः, तस्मात्तद्विधानेन सर्वमिदं प्रत्यण्वपि विहितम्, क्रियायोगा न सर्वमित्यादि चाथर्वविधिना वेदितव्यम् । सर्वमिदं सम्यक्प्रयोगेणाहमेतन्नेति महावाक्येन सर्वाभिलक्षितस्य सन्देहनिश्चयस्य निर्णयानन्तरं भवति । अतश्चात्र सर्वसिद्धान्तानां चर्चैव सर्वव्यवहारफलं भवति । अत्र च क्रमनियन्तॄणां शक्तीनाञ्च, कार्यकाल देशसंख्यानां सम्यग्योगः, सत्यानुभावनं सर्वमपिभवतीति विज्ञेयम् । तस्मादेषाथर्वविद्या सर्वसमाहारेण सर्वासां क्रियाणामपि स्वरूपं व्याख्याति । अन्यथात्वयमात्मा सर्वतोऽपरिच्छिन्नस्सत्यस्सनातनस्सोपक्षो निरपेक्षश्शक्त्यशक्तिविवर्जितस्सर्वमूलोऽभिरक्षितः, स्वयं ब्रह्मेति रूपान्तरप्रतिष्ठितः, शक्त्यन्तर्भृतः सर्वपर इति च समाहारादिवर्जितः, चैतन्यम्, परमगोचरः, प्रणवपरः सर्वथा कथं वेदितव्यः भवेत् इति सिद्धान्तः ।

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे
तृतीयप्रकरणे अष्टमस्तरङ्गः ॥

ॐ

---

ॐ

## ॥ अथ नवमस्तरङ्गः ॥

---

एवं प्रकारेण हि चत्वारो वेदास्समुपजाता भवन्ति। महाविष्णुविष्णुब्रह्मशिवनिर्मिताश्चैते परिदृष्टाः । महावाक्यं हि सूक्ष्मविचाररूपम् । एवमेतदर्थो वेदेषु व्याख्यातो भवति। ततस्ते प्रत्येकमुपनिषदः ब्राह्मणानीति क्रियाज्ञानानुसारेण भवन्ति। प्रत्येकञ्च चतुर्णां वेदानां ब्राह्मणानि तादृशनियमेनोपस्थितानि भवन्ति। सर्वस्मिन्नपि तस्मिन्ब्राह्मणे मन्त्रे च ज्ञानेच्छाक्रियासमाहाराणां प्रत्येकमंशश्च व्याख्यातो भवति । यद्यपि ब्राह्मणादिसंज्ञा तु, तत्तद्वर्णाश्रमधर्मोपाध्युपस्थितानां जातीनां व्यवस्थापिका भवति, तत्प्रकारप्रदर्शनपरे च ग्रन्थांशे तत्प्रयोगो न भवति; तथापि ब्रह्मप्रकारबोधकतातात्पर्यमात्रेण वेदांशेऽपि तथा व्यवहारः। ब्रह्म जानातीति ब्राह्मण इत्यर्थमङ्गीकृत्य तज्ज्ञापकत्वमपि प्रसहेत । यो हि जानाति, तेनैव विज्ञापनमपीति सर्वत्राख्या-

तम् । ज्ञानेच्छाक्रियासमाहारान्प्राप्य, ब्रह्म भूत्वा च सर्वेभ्यः प्रदीयतामित्युपदेशः । इदमेव हि ब्रह्मभवनफलं भवति, सर्वस्यै-करूपम् । तस्माद्ब्रह्मस्वरूपनिर्णयविषयाः वेदाशाः ब्राह्मणमङ्ग-का व्यवस्थिता भवन्ति । "ब्राह्मणानि ज्ञात्वा ब्राह्मणो भवति" इत्युपदेशः । अत एव

"ज्ञात्वा वेदान्यथायोग्यमृग्यजुस्सामाथर्वणः ।
ज्ञातव्यानि ब्राह्मणानि ब्रह्मज्ञानं फलं परम् ॥
अकारोकारमकारस्थं ज्ञात्वा तत्प्रलभ्यते ।
प्राप्य तत्वं यथायोग्यं ब्राह्मण्यं स च विन्दति ॥"

इत्यादि प्रवचनम् । तस्मात्प्रतिवेदं तादृशनियमेन चत्वारि ब्राह्म-णानि व्यवस्थितानि भवन्ति । ब्राह्मणग्रन्थे तु, प्रत्येकमंशस्य व्याख्यानं पृथक्पृथग्दृश्यते । अनवस्था परा सृष्टिरिति व्याख्या-नाद्विष्णुर्ब्रह्मशिवाश्च, ह्यनेकप्रकारकार्यनिर्मातारश्चेत्युच्यन्ते । विष्णु-व्यवस्थिताश्च तादृशाश्चत्वारो नियमाः । तेषां प्रत्येकं ज्ञानपरत्वं विज्ञे-यम् । क्रियामात्रनिष्ठस्य ब्रह्मणश्चैवं चत्वारो नियन्तारो भवन्ति । एव-मिच्छाप्रधानस्यापि शिवस्य चत्वारो नियन्तारः । एवं समाहारे-ऽपीति विज्ञेयम् । एकस्मिन्नपि च संसारे, कार्यस्यानन्त्यव्यवहा-रात् पृथक्पृथक्प्रयोगा भवन्ति । यत्र च यादृशं बहुत्वम्, तादृ-शाश्च तत्क्रमविधातारो भवन्ति । दृश्यतामिह—इदञ्च सर्वसिद्धा

न्तनिर्णीतमस्ति, प्रत्यण्वपि सर्वसंसारः, सर्वेष्वपि च संसारेष्व-णवश्च भवन्तीति स्पष्टं व्याख्यातं भवति, एकोऽपि चाणुरने कानि कार्याणि करोति, प्रतिदिनं कार्यपरिगणना हि ज्योति-श्शास्त्रानिर्णीता भवतीति सर्वनिश्चितं भवतीति । यद्यपि निर्णीतमिदम् , एकस्माचाणोरेकस्मिन्दिवसे चैतानि कार्याणि मुख्य-तया कर्तव्यानि सन्ति, तथापि कार्यान्तरे कार्यमिति नियमेन न तत्परिगणितुं शक्यं भवति । अत एव

" कालसंख्याक्रमेणैवं बोधार्थं ज्योतिषं भवेत् ।
तथाप्यणुपरं कार्यं भासते नैव किञ्चन ॥
अनवस्था परा सृष्टिस्सर्वथा सार्वकालिकी ।
क्रियास्सर्वास्समुत्पन्नाः क्रियास्सर्वा विनाशगाः ॥
तिष्ठन्त्येव क्रियास्सर्वाः ज्ञातुं योग्या न काश्चन ।
ज्ञानमात्रमिदं नित्यं केवलं ब्रह्मसाधनम् ॥
अनन्तं स्यादतीतञ्च सर्वं सर्वं न किञ्चन ।
एवं बोधपरो भूत्वा विरतश्च भवेत्पुमान् ॥ "

इत्यादि प्रवचनम् । तस्मात्प्रत्यणु कार्यमप्यनन्तसृष्टीति व्याख्यानं भवति । केवलं तत्र सामानाधिकरण्यमेव बुध्यते इति हि तज्ज्ञा-नफलं भवति । अत एव

" अध्येयं वेदवेदाङ्गं तथोपाङ्गं सनातनम् ।

ब्राह्मणश्चोपनिषदं ज्ञात्वा सर्वं समं भवेत् ॥
यदीदं भासते नित्यमनन्तं सृष्टिसंज्ञकम् ।
तावस्थितमिदं यच्च व्यपदेशपरायणम् ॥
तदेकत्वन्तदेकत्वन्तदेकत्वं प्रबुध्यताम् ।
एवं त्वमपि नैवासि द्वितीयादेर्विभावनात् ॥
न द्वितीयं तृतीयं वा नानेकश्चैकसंज्ञकम् ।
समस्सर्वसमं सर्वं समं सर्वं प्रबुध्यताम् ॥
समानोऽहं समानस्त्वं समानन्तत्समात्मकम् ।
समानोऽयं समानान्या तत्समानं समं समः ॥
समश्शब्दस्समस्तोऽयं ब्रह्मबोधः परं फलम् ।
ओङ्कारविहितं ज्ञानमहमेनन्न संस्थितम् ॥
सर्वमेकपरं ज्ञात्वा क्रियतां निश्चला मतिः । ”

इत्यादि प्रवचनम् । तस्मात्केवलैतद्बोधमात्रमेव ब्रह्मत्वम् । अन्यथा तु सृष्टिरेषा ह्यनवस्था परापरातीता स्यान्न ज्ञानविषयिणी । अत एव

“ ज्ञानं वा ज्ञायमानं वा यो न पश्यति पश्यति ।
जिज्ञासा नैव कर्तव्या स्वास्मिन्सर्वं प्रबुध्यताम् । ”

इत्यादि प्रवचनम् । अत्रैवमिदमाश्चर्य मभिलक्ष्यते—स्वयमेव सर्वमसि, कथं स्वात्मनि स्वं रूपं न बुध्यसे, त्वमसि वा नासि,

करोषि वा न करोषि, जानासि वा न जानासि इति । एवं परिभाव्य-ताम् , यदिचेत्स्वकार्यस्यापि बोधो न भवति । तदा संसारज्ञाने प्रवृत्तिरिति किमाश्चर्यमतः परम् । यच्च वा वस्तु स्वज्ञानविषयन्न भवति , बुद्धेरतीतत्वादप्रसङ्गादपरिभावनीयत्वाद्वा तस्यैवाश्चर्य-विषत्वेन प्रवचनम् । वस्तुतस्तु सर्वस्य सर्वत्र विद्यमान-त्वान्न चैवाश्चर्यविभावना । तस्मादत्रैवमुपदिश्यते—सम्यक्छू-यतां विचार्यताम् , प्रथमं कार्यं लघुक्रमं स्वात्मनो द्रष्टव्यम्, पश्चात्स्वपुत्रकळत्राभिसंबन्धि, दैशिकम् , पश्चात्क्रमेण देशनि र्माणाभिधानक्रमः, ततः स्वपृथिवीमात्रस्य पश्चाद्ब्रह्माण्डेऽपि प्रवि-श्यताम् , एवं कृते कृतेन सर्वेषामैक्यस्यैव प्रबोधो भवति, यथा हि तव कार्येऽनेकक्रमः तथैवानुमेयः, महाविष्णोः कार्यं हि संसारस्य भवति इति ।

मूलव्यवस्थितिरेव शाखायां प्रभासते इति हि लोक-न्यायः । तच्च परमन्तत्वम् , यस्ययेन विधिना सर्वनिर्माणं तद-तीतनिर्माणञ्च भवति । स एव विधिः सर्वस्मिन्नणौ भासते, लघुत्वमहत्वयोस्समानत्वात् , तयोरभावाच । यल्लये प्रदृश्यते तदेव तत्रापीति सिद्धान्तनिश्चयः । महता पदार्थेन महाशक्त्या च तत्वबोधो न भवति । तत्वबोधोपायस्तु , साक्षात्स्वच्छन्नत्वम् , एकाणुचिन्तनमिति च सेर्ववेदैस्स्पष्टमुक्तं भवति । यद्यपि तर्हि

सर्वशास्त्राणाम्, तथा सर्वबोधस्योपदेशस्य च वैयर्थ्यम्; तथापि तादृशैकाणुस्वभावपरिचिन्तनार्थकत्वेनैव तच्चारितार्थ्यम्। अन्यथा तु केवलं साहसमिदमपि भवेत्, "ज्ञातश्चायमपि ज्ञातो भवति, ज्ञातश्चेदमपि, न तेन सम्यक्प्रबोधोपस्थितिः, एकस्मिन्नणावेव सर्वशास्त्राणां सर्वसदुपदेशानाञ्च प्रयोगकरणौचित्यम्, सर्वस्य साम्यं सामानाधिकरण्यं निश्चित्य व्यधिकरणानाञ्चनिवृत्तये, सर्वावश्यकसाधनसंपादनाय, अनावश्यकनिरसनाय च, सर्वाणि च शास्त्राण्यध्येतव्यानि" इति शिक्षाङ्गेन व्यवस्थितत्वात्। तस्मात्सर्वबोधाय सर्वमध्येयं भवति इत्याद्युच्यते। प्रयोजनं चात्रेदं भवति—यथा स्वस्य क्रमः कार्यञ्च तथैव तत्रापि वेदितव्यमिति विज्ञेयम्। अत एव

"स्वस्मिन्यादृश्यते काचिन्नानावस्था परा गतिः।
अत्रागतं गतन्तत्र यत्र कुत्रेति वै स्थितिः॥
एतत्कार्यमिदङ्कार्यमन्यत्कार्यङ्करोमि वा।
करिष्यामि कृतञ्चैतत्पूर्वमेवं परन्तथा॥
अपरञ्चोत्तरञ्चैतद्गौणं मुख्यं व्यवस्थितम्।
संसारमूलकं सर्वं तादृशं विद्धि नित्यशः॥
तव कार्ये महाकार्ये भेदो नैवास्ति कश्चन।
केवलं त्वं भ्रमेणैव यथा भेदं हि मन्यसे॥

तत्रापि वर्तते नित्यं तादृशं वै विधिस्थितम् ।
कार्यमात्रे क्रियामात्रे ज्ञानमात्रे समाश्रये ॥
इच्छामात्रे तदेकत्वे चैकवत्सर्वसंस्थितिः ।
एकोमहान्क्रमाधीशो द्वितीयस्तत्परो भवेत् ॥
तृतीयस्तत्परश्चैवं चतुर्थस्तत्परस्तथा ।
अतीतानन्तयोश्चैवं क्रमो ह्याद्यन्तवर्जितः ॥
साद्यन्तं सर्वशः पश्येत्सर्वञ्चाद्यन्तसंज्ञकम् ।
यो लघुर्दृश्यते कस्मात्समहान्दृश्यतेऽन्यतः ॥
यो महान्दृश्यते कस्मात्सलघुर्दृश्यतेऽन्यतः ।
सर्वमेवं समासाद्यं त्रिवर्णैश्चैव संभृतम् ॥
वर्तते नैव भेदो हि स्यात्सामानाधिकरण्यम् ।"

इत्यादि प्रवचनम् । तस्मान्महाविष्णोः विष्णोश्च क्रमेऽपि च तादृशाश्चत्वारो नियन्तारः । एवं ब्रह्मणः शिवस्य तच्छक्तेश्चापि, सम्यग्ज्ञानेच्छाक्रियाप्रयोगैश्च चत्वारो नियमाः प्रत्येकमपि संभवन्तीति विज्ञेयम् ।

संसारमात्रे चैतच्चतुर्णामेव प्रदर्शनम् ! पुनश्चात्रापि प्रत्येकं चत्वारः भेदाः, एवं तत्रापीति सर्वव्यवहारादनन्तत्वमेकत्वञ्च संसूच्यते।अनन्तत्वसूचनं हि, बहुप्रकारव्यक्तिसन्निधानेनैव,एकत्वस्य तितयावश्यकत्वात् , आवश्यकस्यैकवृत्तेश्चेति बोध्यं भवति ।

दृश्यताम्—आवश्यकस्य तु न कश्चिन्महांल्लघुश्च भवति, यथा-वश्यकत्वञ्च लघोः, तथा महत्वस्यापीति । एवमावश्यकता मात्रे-ऽपि लघुत्वं महत्वमपि च नास्तीति सिद्धान्तः । यद्यपि, इदञ्च महदावश्यकं इदमस्याप्यावश्यकमिति लोकव्यवहारः; तथापि तात्कालिकावश्यकता हि महत्वविशिष्टैव । यस्मिन्काले हि या आवश्यकता, तत्कालानुसन्धानतया तस्याश्च महत्वमभिधीयते । अत एव

"सदा सर्वदावश्यकं सर्वमेत-
द्विधानं परं कार्यरूपन्तदेतत् ।
सदैवाहमेतन्नकारस्वरूपं
विचिन्त्यं विचिन्त्यं समावेदनीयम् ॥
यथैवाहमात्मा तथैवैतदेत-
त्स्वयं सर्वरूपं क्रियावेदनीयम् ।
तथैवायमात्मैव चैवं स्वरूपः
नकारो नकारस्स्वयं वेदनीयः ॥
यथावश्यकं दृश्यते वा महत्वे
तथैवायमत्रापि संभावनीयः ।
सदा सर्वदा सर्वरूपः प्रशस्तः
ह्यहं ह्येतदन्तन्नकारस्वरूपम् ॥

सर्वत्र विद्यते चाहमेतत्सर्वत्र विद्यते ।
नेतीति विद्यते नित्यं सर्वान्तर्यमतो भवेत् ॥
नाहं विना तदेतत्स्याद्द्वयोर्योगो नकारजः ।
अयमेवावश्यकस्स्यान्मूलमस्य समानता ॥
तत्साम्यावश्यकं विद्धि महाविष्णोः परस्य च ।
अणोरप्येवंरूपेण योगो भावेन वेद्यते ॥"

इत्यादि प्रवचनम् । तस्मादावश्यकतामात्रे साम्यमेव सादृश्यमिति बोध्यम्, सर्वसाम्यात्सर्वबीजत्वाच्च । अत एव

"यथावश्यकता लोके महद्भिस्संप्रदृश्यते ।
समावश्यकताप्येवं तादृशी त्रितयात्मिका ॥
एतत्त्रितयभिन्नानां नानुगुण्यं कदाचन ।
सर्वस्मिन्गणना नित्या त्रितयेनाभिधीयते ॥
एकं द्विकं त्रिकं चैव पश्चात्संख्या सनातनी ।
अत्रापि प्रथमैकत्वं सर्वांशे संप्रयुज्यते ॥
यो भवेत्प्रथमो लोके सर्वन्तेन हि जायते ।
तिष्ठति प्रथमस्तत्र कार्यकर्तृप्रभावतः ॥
अतस्सर्वस्य चैक्यं हि सर्वेणैवाभिसिध्यति ।
स्यादावश्यकतामात्रं समानं सर्वगं परम् ॥"

इत्यादि प्रवचनम् । तस्मादेकवृत्त्या सर्वावश्यकता बोध्या । एवं

महाविष्णोरावश्यकता महामाया भवति। तया हि सम्यगेतत्संसारा-
वधारणं भवति । अस्मिन्संसारेऽपि तादृशातीतावश्यकतानुरोधेन
चानन्तः क्रमो भवति । अत एव सर्वत्रानवस्थामङ्गीकृत्यानवस्था-
या एकत्वबोधनाय, सामानाधिकरण्याय, संसारमात्रस्य प्राधान्य-
बोधनाय च वेदशास्त्राद्युपदेशः । अन्यथा हि सर्वस्यैक्यात्, ज्ञा-
तृज्ञानज्ञेयानामभेदाच्च वक्तुमनुचितं भवेत्, यन्नभवति, तस्य सं-
भवारोपोऽप्यनुचित इति सर्वाख्यानात् । अन्यथा तु सर्वस्यौचित्यं
तादृशं प्रसह्यं भवेत् । तस्मादहमनहमननहमिति बीजेन महाविष्णौ
ब्रह्मणि शिवे च तच्छक्त्यामपि च तद्भावनानुकथनम्; इतिहि सेव-
सिद्धान्तः । एवं सृष्टेः स्वरूपवर्णनन्तु, यथाकार्यं तत्वविभावनयैव
कर्तव्यं भवति । प्रथमं हि संसारमात्रस्य मूलतत्वं वेदितव्यं भवति।
तच्च तावदतीतं प्रणवसंज्ञकश्चास्ति ।

ततः परं गायत्रीमहावाक्यस्थितं महाविष्णोरवधारणं सूक्ष्म-
परं वेदितव्यम्। ततश्च सार्वत्रिको बहुधा विस्तृतश्च विष्णुब्रह्मशिवा-
नान्निर्णयरूपः महाविष्णोर्ज्ञापनानुसारी वेदविषयश्च वेदितव्यो
भवति। किञ्च यथायोग्यं सार्वत्रिकं वेदविषयं सर्वतत्वं संसारमात्राव-
स्थितञ्च ज्ञात्वा, तत्प्रकारभेदश्च पृथक्पृथग्विज्ञेयः।तद्बोधाय हि षोड-
शब्राह्मणग्रन्थाश्च भवन्ति।यद्यपि तेषां ब्राह्मणग्रन्थानान्नियमस्तु ज्ञाने
च्छाक्रियासमाहारनिष्ठः,तथापि प्रत्येकं ज्ञानेच्छाक्रियासमाहारप्रका-

रप्रवचनमेवंनियतं भवति, यथा च ऋग्वेदे प्रथमब्राह्मणे विष्णोरव-यारणं ज्ञाननिष्ठं भवति। स च विष्णुः स्वकार्यकर्तृन्नियन्तृन्प्रत्युवाच-चत्वारि ब्राह्मणानि, ज्ञानस्य चैवं चत्वारो भेदाः इति । एवं स्वनियन्तारं प्रदर्शयति । दृश्यताम्—प्रथमं हि स्वयं ज्ञानं ज्ञान-मात्रस्यैव सर्वाभिनिवेशनरूपं तदहं बुद्धिः, ततः क्रियान्तरं ज्ञानं द्वितीयम्, ततश्चाहमं ज्ञात्वाहमः प्रयोजनत्वेन क्रियायां प्रवेशक-रणं तृतीयम्, तच्च ज्ञानमिच्छापरम्, अहमश्च ज्ञातव्यमेतदश्च ज्ञातव्यमहमेतदोर्मध्ये हीच्छाकरणम्, चतुर्थश्च ज्ञानं समाहाररू-पम्, अहमं ज्ञात्वा तज्जन्येच्छया कर्म कुरु, कर्मज्ञानमन्तराहमश्चेच्छा-याश्च न कुत्राचित्स्थितिर्भवतीति । तस्मादहम क्रियामिच्छाञ्च विज्ञाय हि त्रितयं समाह्रियते।अत एव विष्णोःकार्यं परिपालनं भवति। यस्मि-न्यस्मिंश्चाहमि, यस्य यस्य पदार्थस्येच्छा प्रदृश्यते; तस्य तस्य च पूर्तेः करणं यथावश्यकं परिपालन भवति । इदमेव हि विष्णु-कार्यं भवति । स च विष्णुः स्वांशभूतेभ्यो नियंतृभ्यो ह्येवमुप-दिशति—क्रियतां हि सर्वपरिपालनं यथाविहितामिति । अत एव लोके चैवमुच्यते—सर्वस्य विष्णुस्सार्वत्रिकः स्वसंवे वस तीति । यद्यपि विना च तं यत्नः परिदृश्यते—मया कृतम् त्वया न कृतम्, अहमेतादृशः, त्वञ्च नैतादृशः, अधिपश्चाहम् राजा चाहम्, तथा विद्वान्गुणीत्याद्यहङ्कारबुध्या प्रवचनमिति

तथापि तत्र ज्ञानमेव सर्वस्य कारणं भवति । अन्यथा तु "योऽस्य कारयिता, स एव विष्णुः, विष्णोरंशे न हि सर्वमिदम्, प्रत्यत्रापि तत्संबन्धानुरोधेन पालनं भवति, प्रथमञ्च विष्णुरेवं जानाति, अहमस्ति सर्वनियन्ता, नियतकारणौचित्यम्" इत्यादिवाक्यं विरुध्येत । ज्ञानांशेऽपि ज्ञानङ्कारणं भवति । पश्चात्स्वनियममवधार्य, ह्यणुमात्रमपि जानाति—अयञ्चाणुर्ममाधीन इति । एतद्बुद्धिश्च, एतदंशे ज्ञानं भवति । पुनरणोरिच्छामपि जानाति । अस्त्यस्यैतादृश्यावश्यकता इति च न ज्ञानांशः । अस्तीत्यवधारणात्परिभावनायामपि, नास्तीत्यस्य प्रयोगः । अस्ति वा नास्तीत्यस्यावश्यकता । एवं विज्ञाय हि निश्चित्य तदभिपूरयति, तदेव हि समाहाररूपं ज्ञानम् । एवं विधञ्च ज्ञानञ्चतुर्विधमृग्ब्राह्मणे व्यवस्थितं भवति । दृश्यताम्—प्रथमं स्वात्मनः कार्यं जानाति, पश्चात्स्वकारणावश्यकताम्, अनयास्माकमिदं फलम्, पश्चात्तत्कार्यनिष्ठपदार्थेन स्वात्मनस्संबन्धमभिजानाति ।

कथङ्केन प्रकारेण भवति, न भवति वा, इत्यादिलोकपरिभावनया तत्राप्यनुमितिरुचिता भवति । अत एव ऋग्ब्राह्मणमात्रे ज्ञानांशव्याख्यानम् । यथाकाशेऽपि त्रित्वम्, आकाशः चिदाकाशः महाकाशः, आकाशो हि सार्वत्रिकः, तत्र ज्ञानांशः चिदाकाशः, क्रियांशो हि महाकाशः, इच्छांशस्त्वाकाश

एव इति । समाहारः पराकाशः इति हि चतुर्थो भेदः, शब्दगुणकमाकाशमिति बीजात् । तथा नियमेन शब्दस्यापि चत्वारो भेदास्संभवन्ति—परा पश्यन्ती मध्यमा वैखरी चेति शब्दशास्त्रसिद्धान्तः । तस्मिन्नाकाशत्रये, तत्समाहारे च ऋग्वेदब्राह्मणेन ज्ञानांशमात्रस्य निर्णयो भवति । योयं चिदाकाशः, स च ज्ञानपरः । अस्मिन्नंशे च ज्ञानस्य यत्प्रयोजनम् , येन नियमेन तस्य ज्ञानरूपत्वम् , तत्सर्वं ऋग्वेदब्राह्मणे स्पष्टमुक्तं भवति। एवमाकाशात्पूर्वमपि तत्वद्वयम् , तादृशज्ञानेच्छाक्रियाणां प्रत्येकं द्विधाक्रमेण षट्प्रकारास्समाहारश्च सप्तम इति बीजात् । यद्यपि पाञ्चभौतिकमेव सर्वमिति चोच्यते, तथापि तथा कथनं स्थूलपरं वेदितव्यम् । पञ्च तत्वानि च स्थूललोके प्रसिद्धानि । तत्वद्वयञ्च योगविषयमलौकिकं भवति । वेदादौ हि तत्प्रयोगः । ये च वा वैदिका वेदान्सञ्जानन्ति, वेदद्वारा चैतत्संसारतत्वविज्ञानेन कार्यं कुर्वन्ति ; तेषामेव तत्तत्वद्वयस्य बोधो भवति । प्रसिद्धानि चात्र पञ्च तत्वानि । लोकार्थमेव तानि च व्याख्यातानि भवन्ति । अत एव सर्वशास्त्रेषु " लक्ष्यानुसारि व्याख्यानमेव शरणम् " इत्युच्यते । तस्मात्पूर्वस्मिन्तत्वद्वयेऽपि चैवं नियमो भवति । सा द्वयोस्संज्ञा चेयम् । " प्रथमञ्च महत्तत्वम्, द्वितीयं बुद्धितत्वम्, तस्मिन्नंशेऽपि प्रत्येकं भेदत्रयमित्येतच्च सर्वमपि ऋग्वेदब्राह्मणैर्बोध्यं

भवति । एवं वायोस्तेजसः अपां पृथिव्याश्च प्रत्येकं त्रितयत्वम् । तत्र ज्ञानांशमात्रं स्थूलसूक्ष्मविधिना ऋग्वेदब्राह्मणैरुपन्यस्तं भवति । तदेवम्—चिदाकाशस्य वाय्वाकाशे च किङ्कार्यम्, चिद्रूपो वायुश्च को भवति, त्रयाणां वायूनां परस्परं कः संबन्धः, एवं तैजसांशेऽपि चिद्वाय्वाकाशाभ्याञ्च किं भवति, चित्तेजश्च कि रूपम्, त्रितयभवने च कस्संबन्ध इत्यादि, एवमप्सु त्रितयत्वम्, अपाश्चिद्भावः को भवति, चिदाकाशवायुतेजांसि च कानि, किमनेनसंबन्धेनेत्यादि च, एवं पृथिव्यामपि तादृश नियमेन त्रितयत्वम्, तत्संबन्धादिपरिभावनञ्च यथायोग्यमृग्वेदब्राह्मणस्थितमित्यादि । एतेषा परिज्ञानाय विष्णोः कार्याभिधानप्राधान्यबोधनाय च ऋग्वेदस्सब्राह्मणानि ह्यध्येतव्यानि इत्युपदेशः ।

एवं क्रियांशेनापि यजुर्वेदस्य चत्वारि ब्राह्मणानि भवन्ति । तेषां नियन्ता च स्वयं ब्रह्मा, यस्य च क्रियापरत्वं यजुर्वेदस्थत्वञ्चोक्तम् । स च क्रियापरो ब्रह्मा क्रियामात्रविधान करोति । स च तथा विधिं कृत्वा स्वक्रमनियन्तृणां बोधको भवति । दृश्यताम्—क्रियाप्येवं चतुर्विधा भवति, प्रथमा च सा ज्ञाननिष्ठा, द्वितीया हीच्छापरा, तृतीया क्रियास्वरूपिणी, चतुर्थी समाहारनिष्ठा चेति । स च पुनरप्येवं प्रबोधयति—सर्वे च क्रमाद्यस्मदीयाः विष्णोरनुवर्तकाश्च, विष्णोस्सकाशाच्च ज्ञानं प्राप्य क्रिया

निर्वर्त्यतामिति । यथा विष्णोश्च नियमाद्यनेकक्रमास्तथा ब्रह्मणोऽपीति निश्चयः । तस्माद्यथाक्रममधिष्ठानस्य ज्ञानप्राप्तिसाधनौचित्यम् । लोकेऽपीदमनुकरणम्—येन येन यस्य यस्य च साम्यं भवति, तेन तेन तस्य तस्य च संबन्धो भवति ज्ञानेच्छा क्रियासमाहारांशेऽपीति । तच्च नित्यकर्मानुरोधेनैव द्रष्टुमुचितं भवति । तत्र च प्रथमा ज्ञाननिष्ठा क्रियाचेयम् । प्रथमञ्च क्रियाकर्तृत्वं ज्ञातव्यम् । तच्च विष्णोरंशभूतं केवलं ज्ञानमात्रम् । पश्चात्क्रियाकरणतत्वं ज्ञातव्यं भवति । क्रियायाश्चेमे प्रकारा भवन्ति । अत्र चायं क्रमः—एतन्नियमेन योजनं तत्प्रकाराचरणमित्याद्याः । ज्ञाननिष्ठा च क्रिया, पुनस्तस्यैवेच्छाकरणत्वं भवति । इच्छानिष्ठा च क्रिया—मया चायमर्थो ज्ञातः, अतस्तत्करणौचित्यमितिस्वरूपः । पुनस्तत्करणञ्च तावदिच्छया तदावश्यकतामवधार्याचरणमेव । आचरणे हि पुनस्सर्वसमाहार इति समाहारनिष्ठा क्रिया भवति । क्रियानिष्ठा क्रियाचेच्छासमाहारयोर्मध्यवर्तिनी भवति । तत्र हीत्थं चतुर्णां स्वरूपम्—अहंब्रह्मास्मि, एषैवावश्यकता, इदङ्करोमि, एतच्च मत्कृतमिति । पुनश्च महत्तत्वे क्रियांशोऽयम् । बुद्धितत्वेऽप्येवम् । तस्मात्क्रियातत्वं ज्ञात्वा तयोस्संबन्धः तत्फलञ्च वेदितव्यं भवति । पुनरेवमाकाशादावपि तद्विधानं भवति । अत्र हि—महाकाशः क्रियापरः, अस्य च यो यो विषयः, यद्यत्कार्यम्, येन येन च

संबन्धः, एवं पृथिव्यप्तेजोवायूनाञ्चापि क्रियामात्रकञ्च यत्तत्वं प्रतिष्ठितम् ; तत्कार्यादिव्याख्यानं तादृशसूक्ष्मस्थूलविधिना यजुर्वेदब्राह्मणे प्रतिपादितं भवति । तच्च यथा पृथिव्यप्तेजोवायुमहाकाशादीनां या वा क्रिया च प्रसिद्धा; तथा तासां क्रियाणां परिवर्तनादिनियमस्सर्वोऽपि यथाक्रमं यजुर्वेदब्राह्मणेन बोध्यो भवति।

एवञ्चतुर्विधाश्चापीच्छास्सामवेदब्राह्मणैर्वेदितव्या भवन्ति। इच्छायामप्येवन्तादृशाश्च भेदाश्चत्वारः, ज्ञानक्रियेच्छा समाहार निष्ठा प्रसिद्धेच्छा इति । एवं लोकेऽपि द्रष्टव्यम्–प्रथमा हि जिज्ञासा, ततस्तदीप्सा, ततः प्राप्तिकरणेप्सा, ततः प्राप्तिः ; ततस्समाहारोऽपि च । तस्मात्तत्रापि तदभिधानं भवति । इच्छाया नियन्ता तु शिवः, तस्मिन्नपि तादृशाश्चानेके क्रमनियन्तारः भवन्ति । तत्र च स शिवः स्वक्रमं प्रत्येवमुवाच, एवं प्रदर्शयति च । एवं हि दृश्यताम्—अस्मत्कार्यन्तु विनाशनम् , तत्र चैवं क्रमः प्रकारश्चाप्यस्त्येवम् , पूर्वमिदं प्रणाश्य ततश्चैवं प्रणाश्यम् , कार्यमप्येतादृशनकारनिष्टङ्कर्तुमुचितमिति । दृश्यताम्—प्रथमं जिज्ञासाकरणं संपूर्णमहमतच्च ज्ञातव्यम् , पुनरेवं तदीप्सा कार्या, एतदमहमं प्राप्स्यामि, प्राप्य चैवं नेति प्रवचनम् , नान्तरे हि सर्वसमाहारः, अयमेव संहारः, इति चत्वारः तादृशेन विधिना च स्थूलसूक्ष्मेण बोध्या भवन्तीति । यन्महत्तत्वं बुद्धितत्वम् , यत्त्रे-

च्छांशोऽयम्, अस्य च यदिदं कार्यम्, एवमाकाशेऽप्याकाश-मिच्छापरम्, त्रयाणां संबन्धः, एवं वायौ तेजसि च यत्प्रश-स्तम्; तत्सर्वं वेदितव्यं भवति। ततश्चापामिच्छांशः पृथि-व्याश्च य इच्छांशः, तत्संबन्धश्च ज्ञातव्यः। ज्ञात्वा हि निषेध-प्रवचनम्। पृथिव्याश्च योऽयमिच्छांशः नकारपरः, तस्मादेव प्रळयारम्भो भवति। पुनरेवं क्रमेण सर्वनाशः एवं व्यवहारश्च सार्वत्रिकः प्रत्यणवप्येवं दृश्यताम्—प्रथममिच्छाकरणं ज्ञानवि-शिष्टम्, ततः प्राप्तिः, ततो विनाशः इति। एतत्सर्वमपि सामवेद-ब्राह्मणेन बोध्यं भवति। इच्छायामेवास्यामवज्ञा, तिरस्कारोऽना-दरः, वैरम्, विवादोऽपवादः, क्रोधो निन्दादयश्च प्रसिद्धा भव न्ति। एतत्सर्वं सामवेदब्राह्मणे स्पष्टमुक्तं भवति।

एवं समाहारेऽपि चत्वारो भेदास्संभवन्ति। महाविष्णोः कार्ये चास्मिन्नपि तादृशनियमेन क्रमनियन्तारस्संभवन्ति। समा-हारेऽप्येवञ्चातुर्विध्यं तादृशं। तच्च ज्ञाननिष्ठमिच्छानिष्ठम्, क्रिया-निष्ठम्, समाहारनिष्ठञ्चेति विज्ञेयम्। अत्र चायन्नियमः, स्वक्रम-नियन्तॄन् महाविष्णुरेवं प्रदर्शयति। दृश्यताम्—प्रथमं ज्ञानक-रणम्, तत्र तस्मिंश्च ज्ञाने प्रथमा हि जिज्ञासा, ततश्चाधिकार-प्राप्तिः, अधिकारमन्तरा न ज्ञानप्राप्तिरिति सिद्धान्तादिति। तस्मात्पूर्वं जिज्ञासा, ततश्चाधिकारी भवनम्, द्वयोर्मध्यवर्तनेन प्रज्ञापनम्।

यावच्च स्वजिज्ञासां नान्येभ्यः प्रज्ञापयति, तावदधिकारज्ञानमपि न भवति । तस्मादित्थं ज्ञानांशे चत्वारो नियमास्संभवन्ति— प्रथमं जिज्ञासा, द्वितीयं तत्प्रज्ञापनम् , ततस्सा क्रिया, ततोऽविकारधारणम् , ततस्तज्ज्ञानम् , ततो ज्ञानलाभः इति चैवं समाहारः । एवमिच्छायामपि प्रथमं ज्ञानम् , ततश्चेप्सा भवति । वस्त्विदं प्रियम् , तत्र प्रियत्वादीप्सा जायते । ततश्च तत्प्राप्तिस्समाहारः, एवं चिकीर्षापि । तच्चिकीर्षया हि करणजिज्ञासा, ततश्च करणम् । पुनर्जिहासा, एवमपि समाहारः । एवं समाहारेऽपि, जिज्ञासा, ईप्सा, चिकीर्षा, करणमित्यादि भवति । इदञ्च सर्वमथर्ववेदे ब्राह्मणेन बोध्यम् । अत एव "जिज्ञासेप्सा चिकीर्षा करणं जिहासा तत्फलं स्वावस्था स्वमन्यदिदं त्वमहं यं तं सर्वम् , यर्हि तर्हि यस्मात्तस्मात्कस्मात्सर्वस्मादहमो युष्मदः एतदः अस्मात्पूर्वस्मात्परस्मादपरस्मात् , परः पूर्वोऽपरश्चेति" इत्यादि प्रवचनम् । तस्मादेतत्सर्वं तत्वञ्चाथर्ववेदब्राह्मणेन बोध्यं भवतीत्याद्युपदेशः । अत एव

"स ब्राह्मणं वेदमात्रमध्येयं ब्रह्मसंज्ञकम् ।
ज्ञात्वा तच्च यथायोग्यं स्वात्मतामधिगच्छति ॥
अहमात्मा स्वयं तत्वमेतत्तत्वञ्च वेद यः ।
तस्य तत्वं यथायोग्यं ज्ञात्वा वै मुक्तिमान्भवेत् ॥

परन्तत्वमिदं सर्वं वेद ब्राह्मणभाषितम् ।
आत्मा नात्मा च तद्भिन्नो नकारस्समधिष्ठितः ॥
प्रत्यणु दृश्यते सर्वं नियमोऽयं चतुर्विधः ।
चत्वारस्तद्विधानेन कार्यं कुर्वन्ति च स्थले ॥
एषां कार्यं पृथग्युक्तं या हि यस्य विभावना ।
तत्सर्वं ब्राह्मणेनैव तद्वेदेनापि बुध्यताम् ॥
तादृशं प्रणवेऽस्तित्वं षोडशानां समं भवेत् ।
ऋग्वेदब्राह्मणं सर्वं कालेनैवमुकारजम् ॥
ओमित्येकाक्षरान्तस्थमतीतं सर्ववर्जितम् ।
समाहारमयं चैवं तद्रूपं चाभिलक्ष्यते ॥
ऋग्वेदब्राह्मणं सर्वं यजुर्वेदपरायणम् ।
सामस्थाश्च क्रियास्सर्वाश्चाकारोकारमावृताः ॥
समाहारपरो वेदो ब्रह्माथर्वेति चोच्यते ।
सन्धिस्थं प्रणवाभ्यस्तं सर्वेषामन्तराहितम् ॥
महावाक्येऽपि तादूप्यं तद्वेद ब्राह्मणानि च ।
अहमात्मा परश्चायमृग्वेदब्राह्मणं स्वयम् ॥
यजुर्वेदपरं सर्वं ब्राह्मणञ्चैतदुत्तरम् ।
सर्वोऽनात्मा परो नित्यो क्रियामात्रान्तरायणः ॥
नात्मकं सामवेदस्थं समाहारो ह्यथर्वणः ।

एवमेवं विधानेन लभ्यते परमा क्रिया ॥
स्वयं तत्वञ्च संभूय संसारेषु महासुखी ।
एवं विधो न वै यावद्धर्षशोकौ समौ परौ ॥
अन्यथा तु स्वयं ब्रह्म सर्वानन्दपरो भवेत् ।

इत्यादि प्रवचनम्।तस्मात्तेनैव प्रकारेण च ऋग्यजुस्सामाथर्वस्थितानि च ब्राह्मणानि यथायोग्यमुपन्यस्तानि सन्ति । ब्राह्मणमन्तरा वेदमात्रस्य प्रबोधासंभव एवेति स्पष्टमुक्तं भवति । यावच्च ब्राह्मणग्रन्थेन सर्वनियमानुसन्धानं पृथक्परं तदभिधानं च न जानाति, तावद्ब्रह्मकल्पनकार्यमसङ्गतमेवेति सर्वत्र स्पष्टं भवति । तस्मात्पृथक्पृथङ्नियमकल्पनाय ब्राह्मणोपन्यास इति तद्भावः । एतेषाञ्च चतुर्णां ब्राह्मणग्रन्थानां प्रत्येकं वेदाभिधानकं मूलमहावाक्यञ्चात्र प्राधान्यबोधनाय चोपस्थीयते । “ अहन्तत्वमपरम् ’ प्रस्थितं पूर्वापरं कृतमकृतं कारणकर्तृकम्, नैवञ्च चैतत्प्रत्याशासमाधिस्थञ्चानन्वयं ब्रह्मतत्वमखिलम् , क्रियागुणधर्मसंपत्तिसाधनलक्षणमलक्षणञ्चसमाहृतम् ” इत्यादिक्रमेण मूलवाक्येन ब्राह्मणग्रन्थानामारंभः । एतन्मूलस्यैव सर्वग्रन्थेषु प्रतीतिः । सर्वस्मिन्नपि ब्राह्मणग्रन्थे चाहमेतन्नेति महावाक्यानुरोधेन प्रतिमहावाक्यं तत्कल्पनम् । तदनुरोधेनैव प्रतिवाक्यं तच्छब्दानां प्रयोगः। अत एव

"महावाक्यानुरोधेन वेदाश्च ब्राह्मणानि च ।
ओमित्येकाक्षरेणैव बुध्यमानं यथायथम् ॥
बुध्वा मूलं महावाक्यं महाविष्णोर्विभावनम् ।
तत्परं बुध्यते सर्वं वेदब्राह्मणसंवृतम् ॥
ज्ञात्वा तन्मूलवाक्यञ्च सम्यग्बोधोऽभिवर्द्धते ।
मूलवाक्यं विना लोके ज्ञानं नैवास्ति कस्य चित् ॥
मूलं ज्ञात्वा यथायोग्यं शाखाज्ञानं भविष्यति ।
एवं सनातनो धर्मस्तथा तदनुवर्तनम् ॥"

इत्यादि प्रवचनम् । तस्मात्प्रतिवेदं ब्राह्मणस्य मूलवाक्यमवधेयं भवति । मूलवाक्यमवधार्यैव, महावाक्यानुरोधेन चेद्ब्राह्मणग्रन्थ-पठनम्, तर्हि संपूर्णमिदं सिद्धान्ततत्वं प्रबुध्यते । अन्यथा तु तद्बोधो दुर्लभ एव । अत्र च प्राधान्यबोधनाय महावाक्यञ्चोपस्थापितं भवति । एतन्महावाक्यमूलवाक्ययोर्बोधकारणन्तु प्रणव एव, सर्वातीतत्वात्परमातीतपरत्वाद्वा । अन्यथा त्वयमात्मा सर्वभिन्नस्वरूपः, सर्वाभिगलश्च भवेत् । अत एव

"न ऋग्वेदसिद्धं यजुर्वेदसिद्धं
न तद्ब्राह्मणेभ्योपहारः प्रचारः ।
न वा सामवेदेन संसिद्धमेत-
न्न चैवं समाहारनिष्ठेन सिद्धम् ॥

न तद्ब्राह्मणेनोपहारःप्रचारो
  न संहारहारक्रियाहारमेतत् ।
न वेगेन गम्यं सता वर्त्मचैत-
  न्न चारण्यकेन क्रियासाध्यमेतत् ॥
अनन्तं परं ज्ञानगम्यातिगम्यं
  समानं समानं समानं समानम् ।
न चाद्यन्तवर्ज्यैनचार्तातरूपं
  न चैवायमात्मा परं वेदतत्वम् ॥
न च ब्राह्मणं मंत्रयुक्तं प्रशस्तं
  समानं समानं समानं समानम् ।
क्रियाज्ञानमिच्छापरं नैवमेत-
  त्समाहाररूपं सुखं नैवमेतत् ॥
अनन्तः परश्चाहमेकोऽयमात्मा
  सदा सत्यरूपस्समस्तः प्रशंस्तः ।
न चैवायमात्मा महावाक्यसिद्धः
  न च ब्राह्मणैर्मूलवाक्येन गम्यः ॥
न चैवायमात्मा परं बीजमन्त्रं
  सदैवाहमेतत्समानं समानम् ।
न चैवायमेतन्न वै यत्र तस्मि-

त्र कुत्रेति सर्वत्र संभावनीयः ॥
सदा सच्चिदानन्दमाकारमेकं
निरानन्दमानन्दमध्यस्थमेवम् ।
निरस्तं न चैवं समस्तङ्कुतस्त-
त्प्रधानञ्च चैवं विधानं कुतस्स्यात् ॥
सदा सर्वदावश्यकं शुद्धबुद्धं
समानं समानं समानं समानम् ।
अकारो ह्युकारो मकारो न वेद्यः
न चाकेवलाकेवलश्शून्यसत्वः ॥
सदा सच्चिदंशं समानन्दरूपं
तदोङ्कारनिष्ठं समानं समानम् ।"

इत्यादि प्रवचनम् । एवमेव

" ओमित्येकाक्षरात्सत्यात्परस्माद्ब्रह्म तत्परम् ।
अनन्तमव्ययं विद्धि सर्वशास्त्रमिदं मतम् ॥
वेदैश्च ब्राह्मणैश्चैव महावाक्येन सर्वथा ।
गायत्र्या सार्वत्रिकया प्रणवो ह्येव बुध्यते ॥
बोद्धव्यं तत्परं रूपं ब्रह्म ब्रह्मेति सर्वथा ।
अहं ब्रह्म त्वञ्च ब्रह्म ह्ययं ब्रह्म सनातनम् ॥
अन्यत् [illegible] चेदं [illegible] यत्र तत्रेति कुत्रचित् ।

सर्वत्र सर्वथा ब्रह्म सर्वदावश्यकं तथा ॥
सर्वावश्यं सदावश्यं सर्वं सर्वञ्च सर्वशः ।"

इत्यादि प्रवचनम् । तस्मात्प्राधान्यबोधनायैव महावाक्याद्युपन्यासः-तत्प्राधान्यञ्च यथायोग्यं बोद्धव्यम्।अनेनैवाभिनियमेन षोडश ब्राह्मणानि सुप्रसिद्धानि वेदोपन्यस्तानि भवन्ति ।

इदञ्चात्र विधानं भवति-प्रथमन्तु महाविष्णुः प्रणवं प्राप्नोति,स च प्रणवः ओमित्येतत्स्वरूपः,तदवधारणं कृत्वाचायमतीतोऽनन्तः, प्रकाशते अत्र क्रमोऽपिभासते, तत्परिज्ञानाय महावेदादिकमधीतं भवति, सोऽप्यस्ति कस्य चिदवधर्ता, क्रमिकस्यानन्तत्वान्नतदत्र वक्तुं शक्यम् , तत्र च महाविष्णुर्यथायथं महावेदादितत्वं ज्ञात्वा ब्रह्मभावं प्राप्य पुन रेवं ब्रह्माण्डकल्पकत्वेन संसाराभिकल्पने प्रवृत्तो भवतीति । संसारकल्पने च तन्महावेदादितत्वानुरोधेन प्रणवातीततायां स्वावधारणमुक्तं भवति । प्रथमश्च विचारस्तत्रैवं भवति—केन प्रकारेणायं संभवति, सर्वविज्ञानेनेदं ज्ञातं भवति, अस्माकं कार्यं हि संसारकल्पनम् , तत्र चेमे प्रकारा भवन्ति, तस्य च केन वा क्रमेण योजनौचित्यमित्यादि च परिभावनमिति ।

इदमेव हि क्षीरसागरशयनं भवति । दृश्यतामिति पूर्वव्याख्यानेनाणुरेव पुनः पुनः प्राप्तेन ज्ञानेन महाविष्णु र्भवति । यश्चात्राणुत्वेन विवक्ष्यते, स च स्वाणुत्व-

निर्देशे महाविष्णु रस्तीदानीमपीति च सार्वत्रिकोदाहरणेन स्पष्ट-मुक्तं भवति । पुनरेवं यं यं त्वमिदानीं महाविष्णुं मन्यसे, सोऽप्यस्ति कस्यचिदणुः । अयमेव भ्रान्तर्यव्यवहारः । पुनरेवं वि-चारेणापि द्रष्टव्यम्—योऽयमस्त्यत्राणुः त्वं वा च स्वयं, सोऽपि पूर्वविधिनातीतेऽस्मिन्ननन्ते महाविष्णोरवस्थां प्रतिपद्यते, एवं क्रमेण महाविष्णोरप्यस्य संसारस्य लक्षणेन बोध्यत्वम्, योहीदा-नीमेतस्य संसारस्य महाविष्णुर्भवति पूर्णसंसारमात्रनियन्ता, स च कस्य चित्संसारस्याणुर्भवतीति । एतच्च, अणवन्तर्गतस्संसारः, संसारान्तर्गतोऽणुरिति व्याख्यानेन बोध्यं भवति । तस्मान्महा-विष्णुः ज्ञानस्य प्राप्तौ सत्यां करोत्येवं विचारम्, तद्विचारकरणा-वस्थैव क्षीरसागर इति विज्ञेयम्; क्षीरं निर्मलं तस्य च सागर-इति तदर्थात् ।

समलं निर्मलं चात्र न किञ्चिदस्ति, सर्वस्यातीतत्वात्, ब्रह्मणश्शुद्ध-त्वाच्छुध्यशुद्धिरहितत्वाच्च । स्वकीयया ह्यवस्थया समलं निर्मलञ्चेति भ्रमादुच्यते । यस्मिंश्चाहमस्मि स समलो भवति, यस्मिंश्च सोऽस्ति स निर्मलः इति हि सर्वत्राभिधीयते । तादृशं हि च सर्वमावश्यकपरमेव तस्मादस्मदादेरवस्थायाः परा या च महाविष्णोरवस्था सा च निर्मला भवति। तस्य निर्मलावस्थायामेवं विचारः। अत्र चावस्थैव सागर इति सर्वत्र स्पष्टमुक्तं भवति । अत एव "सागरो भवसागरः" इति

प्रवचनम् । भवनञ्चावस्थापरं तदेव सागरो यस्येति हि तदर्थः । अत एव

" असारसंसारमहाब्धिमण्डले
　क्रमो नदी तत्र समानशीलता ।
　व्यतिक्रमस्तत्र महातरङ्गकः
　समानरूपा तरणिर्व्यवस्थिता ॥
　समानतां प्राप्य विना प्रयासतां
　संसारसत्सागरमातरन्ति ते ।
　एकाक्षरं तत्र तटं ह्यनन्तजं
　　ह्यतीतमेकन्तटमद्वितीयकम् ॥
　समुद्रमध्ये परिसंप्रजायते
　　सत्वन्तदाद्यन्तमनन्तमद्भुतम् ।"

इत्यादि प्रवचनम् । तस्मादेष भवसागरः अपारः, तत्र च क्रमरूपा नदी समानशीलता संप्रयुक्ता भवति । तत्र च व्यतिक्रमरूपो महातरङ्गः । यद्यपि व्यतिक्रमो न कश्चित्, तथापि क्रमस्थितानां कदाचिद्भ्रमेण क्रमोऽपि व्यतिक्रमत्वेन भासते । एवमेव जलार्णवेऽपि च तदनुकरणम् । तज्जलस्यैव तरङ्गत्वभवनम् । तत्र समानरूपा च तरणिर्व्यवस्थिता, तान्तरणिं प्राप्य नाम सर्वसाम्यं बुध्वा निर्वाहः। समानतां तरणिं प्राप्य जनास्तरन्तीति

ॐ

## ॥ अथ पञ्चमस्तरङ्गः ॥

अथ चैतेषां वर्णानां त्रयाणां संयोगवियोगवृत्तिर्ज्ञातव्या भवति। नह्यावश्यकानां संयोगावियोगवृत्तिः कदाचिदपि भवति। संयोगस्त्वेषामेव, येषां पृथग्भावस्समुपलब्धो भवति। पृथग्भावो हि वियोगे नियामको भवति। तत्रानावश्यकस्यापि प्रयोजनं भवति, सत्यावश्यकत्वे संयोगः, तद्विरोधे वियोगश्च विज्ञायते। यद्यप्यस्यनावश्यकस्यापि संयोगः, तथापि तस्यावश्यकान्तर्गतत्वं बोध्यं भवति। "नावश्यकः कश्चिद्विद्यते" इत्यतस्संयोगावियोगौ न कस्यचिद्भवत इति स्पष्टमुक्तं भवति। यद्यप्यवैय्यर्थ्यं शब्दानामुक्तम्, तथापि संयोगावियोगशब्दयोस्तदर्थयोश्च क्रम एव तत्र कारणं भवति। क्रमेण ह्यवस्था विज्ञायते। तयैव भवतस्संयोगवियोगौ। अनेनास्य संयोगः, अनेन च वियोग इति तु भ्रममूलक एव। यदिदं त्रितयं संसारात्मनिषेधरूपम्, तस्मिन्संगवियोगवृत्तिर्हि केवलारोपरूपैव भवति। सत्यावश्यके संसारे, साकमात्मना भवति संयोगः। तस्मादयं संयोगस्तादृशश्चावश्यकः प्रतीयते। आत्मसंसारयोर्निर्धारणं हि यस्यावश्यकम्, यस्मिंश्चावश्यकमित्यादिपृथक्करणम्, तदेव वियोगः। अन्यथा तु संसारावश्यको भवत्यात्मा, आत्मावश्यकस्संसार इति स्यात्। न तयोः परस्परं कर्तृत्वम्,

प्राप्त्यौचित्यम् । भाव्यश्चेदमेव। यदि तद्विधानमन्तरा तत्र प्राप्ति-रसंभवः, तर्हि स्तोत्रादेः प्रयोजनश्चैवं विधानेन बोध्यम् । योहि संसार नियन्ता, स चायमस्माकमधिपः। तं प्रति तारयस्वेत्युक्त्या, केवलतरणोपायं येन प्रकारेण तत्रागमनं भवति , तदुपायं ज्ञापयस्वेति भावो विज्ञेयः । यो हि येन मार्गेण यं प्राप्नोति, स एव तस्य मार्गस्य पूर्णाभिधानमपि जानाति । तस्मात्तेनैव तज्ज्ञा-नग्रहणौचित्यम् ।

यद्यपि वेदशास्त्रादिषु तन्मार्गगमनोपायं हि स्पष्ट-मुक्तमेव, तद्विधिना तदाचारेण चावश्यन्तत्प्राप्तिः ; तथापि ह्याचारलाभः प्रज्ञापनं विना न संभवतीति न्यायतस्सिद्धः। यथा—द्रष्टव्योऽयम्, लिखितञ्च ज्ञानमिदं भवति, अयमस्ति, एवमस्तीत्यादि । यावदेवमित्यस्य चायमित्यस्य नाचरणम्, तावज्ज्ञानञ्च सर्वं निष्फलमेव । ज्ञानं प्राप्य सह चाचारेण, तदा-चारकरणमुचितं भवति, यथा—कश्चिच्च देशवासी पुरुषः, अन्यदेशं जिगमिषति, स चैतन्मात्रं लिखितेन जानाति, अस्मा-द्देशादस्यान्दिश्ययन्देशः, मार्गे चास्मिन्नेता नद्यः, समुद्राश्चैते, देशाश्चैते, मार्गश्चैतादृशः, इत्यादि । परन्तु तादृशस्य पथिकस्या-वश्यकत्वम्, यश्च तद्देशमधिगतवान्। तमभिगम्य चैवं प्रवचन-मवश्यं भवति—भोः दृश्यतामत्रेदमिदं लिखितमास्ति, भवांश्च

तत्र गतवान्, स्यादेतत्सत्यमिति। स च तथाचेदासीदिति प्रतिवदति । स चैवं श्रुत्वा तद्देशगमनाय सङ्गमन्वेषते । सङ्गेन तेन तत्र गच्छतीति हि लोकानुभवः । यद्यपि चासङ्गमपि गच्छति, तथापि तस्मिन्पथि प्राप्ते सति सङ्गस्यावश्यकता भवत्येव ।

यद्वा विशेषश्चायं विधिः।एवममुम्मार्गमास्थिताश्च ये पुरुषास्तान्प्रत्येवं प्रतिवचनम्,यद्वा तन्नियन्तारं प्रति।"सर्वे सर्वसहायकाश्च" इति व्याख्यानतया सर्वे सर्वान्प्रत्येवं वदन्ति। तारयस्व मामित्यस्य, तत्रागमनव्यवहारं ज्ञापयस्वेति भावः। इदमेव हि सत्सङ्गफलं भवति, सतस्सङ्गो हि सत्सङ्गः, सङ्गं कृत्वा सन्तं ज्ञात्वा सन्तं प्राप्नोतीति तद्भावः, ये हि सन्तं प्रचिन्तयन्ति, जानन्ति, परिभावयन्ति; तेषां हि सङ्गस्सत्सङ्गः इति तदर्थात् । अत्रापि सर्वसहायकत्वमेव बीजं भवति । सर्वसाम्यात्सर्वे सर्वांश्च शिक्षयन्ति । इदमेव हि ज्ञानफलं भवति । अन्यथा ज्ञानप्राप्तिसाधनं तदप्राप्तिसाधनञ्च तुल्यमेव भवेत् । ज्ञानन्त्वेतदर्थं भवति, येन सर्वेषां तज्ज्ञानलाभो भवेत्, ज्ञानस्य तत्प्राप्तिकर्तुश्च सार्वत्रिकत्वात् । अहमोंशस्तु ज्ञानम् । अहञ्च सार्वत्रिकं भवति । अतो ज्ञानमपि सार्वत्रिकमिति बोधः। तस्मात्तारयस्व निस्सारयस्वेत्यादिप्रवचनोपपत्तिः।

अत्रेदं सूचितं भवति—एष संसारस्तु सागरः भवनमात्रस्यावस्थापरत्वात् संसारेऽप्यवस्थाया विद्यमानत्वाच्च, अव-

स्थायास्सागरत्वञ्च सर्वसम्मतं भवति ; अत्र च निर्मलसागरो हि निर्मलावस्था, अस्मदवस्थातः महाविष्णोरिति बोध्यमिति । अस्मिंश्च सागरे महाविष्णुश्शेते, शयनञ्च निष्कार्यकत्वम् , तच्चपूर्वव्याख्यानेन स्पष्टमुक्तं भवति । कार्यस्य निवर्तनन्नाम निष्क - र्यकत्वम् , तच्च न कदापि भवति । क त य इत्येतत्सर्वञ्च पृथक्कृत्य, दामात्रस्य पृथक्करणमपि च न संभवति, तस्मादेवैवमत्र द्रष्टव्यम्—शयनेऽपि तस्य निष्कार्यकत्वन्नायाति , किन्तु कार्यकरणप्रसरणरूपव्यापाराभिविष्टः , तत्र प्रकारादिपरिभावनं करोतीति विज्ञेयम् । शेषस्तावद्देशः दृश्यताम्—सर्वस्यान- न्तातीतत्वाद्देशोऽप्यनन्तातीतः , तन्मध्ये देशस्य यस्मि- न्यस्मिंश्च भागे संसार आसीदास्ति च स देशो बद्धः, तस्मा- च्छेषो यो देशः तस्मिन्शेते इति । अतः क्षीरसागरशायी भग- वान्साक्षात्सर्वञ्च संसारमसृजदिति स्पष्टमुक्तं भवति ।

तस्य हि लक्ष्म्या सह शयनञ्चेच्छापरम्,इच्छायास्सर्वत्र विद्यमा नत्वात्,शेषदेशेऽभिनिविष्टो महाविष्णुस्तु कार्यचिकीर्षया सर्वमवधा- रयति । तत्रैव हि विष्णुरजायत। विष्णोर्जायमानत्वं हि, महाविष्णो : प्रसङ्गेन । स च तद्गतोऽणुः । त्वञ्चैवं ज्ञाननिष्ठः कार्यं कुरु इति तत्प्रज्ञापनम् । तस्मादेव हि ब्रह्माप्यजायत, तं प्रत्येवमभिव- चनम्—त्वञ्च क्रियानिष्ठः कार्यं कुरु । ततश्शिवोऽजायत, तं

प्रत्येवं वचनम्—त्वञ्चेच्छानिष्ठं कार्यं कुरु इति । अहञ्च समाहाररूपं कार्यं करिष्यामीति स्वप्रज्ञापनम्। अत्रचैवं भावः—प्रथमावधारणरूपा च गायत्री भवति।पृथक्पृथग्बोधसाधनानिमहावाक्यानि, तद्व्याख्यानरूपाः वेदाः, ततो महाविष्णुः, ब्रह्मा, शिवश्च तं व्याख्यानं प्राप्य स्वकार्यकरणे प्रवृत्तो भवति , क्रियमाणे च कार्ये, तेषामपि क्रमनियन्तॄणां प्रयोजनं भवति , ते च हि स्वत्वावधारणं तन्त्रं प्रत्यूचुः , तदेव ब्राह्मणं भवति , अस्मादेव बीजाद्ब्राह्मणवेदयोरेकरूपं महत्वं, वेदव्याख्यानमेव ब्राह्मणमिति सिद्धान्तः।महाविष्णोरप्येवं कार्यं भवति।समाहाररूपत्वेन तु केवलमेवं न बोद्धव्यम्, एतत्त्रितयकार्यमेव महाविष्णोः कार्यम्। यतस्स्वांशभूतेषु महाविष्णुरपि कार्यं करोति, स्वमहाविष्णुत्वानुरोधात्। पुनरेतत्त्रयाणां समाहरणमपि करोतीति विज्ञेयम् । दृश्यताम्— एतन्महाविष्णोर्यो महाविष्णुः, तस्य चेदं तादृशम्, विष्णुब्रह्माशिववदेकत्वम्, तन्न जानाति ज्ञाननिष्ठोऽयङ्क्रियानिष्ठश्चेच्छानिष्ठो वा, तादृशज्ञानस्यासंभवात् इति । यद्यप्यवाच्यमिदम्, तथापि चास्मिन्सर्वशक्तिप्रदर्शने नायन्तु संसारकल्पकः ज्ञानेच्छानान्त्रयाणामुत्पादकाधिकारीति तेनानुमीयते । तत्र च ज्ञाननिष्ठोऽयं महाविष्णुः इति महावेदादौ स्पष्टमुक्तं भवति । महाविष्णुस्तु, अपरायणस्य समाहारस्य ज्ञानमिति विज्ञेयम् । नेदमत्र विचार्यं भवति , निष्प्र-

योजनोऽयं विचारः, सार्वत्रिकमोमित्यन्तर्गतमतीतं ब्रह्म विद्धि, येनानेकमहाविष्णोर्ज्ञानं भवेत्, त्वमपि तादृशो भवेति । अतीतमनन्तञ्च कार्यमिदं भवति। तस्मान्महाविष्णोः परमचिन्त्यम् । अत्र चेदं केवलैतद्बोधायोपदिश्यते । एतत्समाहरणमात्रं महाविष्णोः कार्यमिति न वेदनीयम्, किन्तु स्वानुरोधेन कार्यमपि सर्वं करोतीत्यपि विज्ञेयम्।

तदेवं क्रमेण सार्वत्रिके प्रणवे शेषदेशे चेच्छया सह शयनं कृत्वा नामावधारणं करोति, ततो नाभेः कमलं भवति, ततो ब्रह्मा, तस्मादेव शिवोऽपीति विज्ञायते।तेनैव संसारः साधनं भवतीति विज्ञेयम्। तत्र च प्रणवस्सार्वत्रिकः,गायत्री च महाविष्णोरवधारणरूपा, तत्प्रकाशनञ्च महावाक्यम्, तद्व्याख्यानरूपाश्च वेदाः विष्णुब्रह्मशिवपराः, स्वपरञ्च समाहरणमिति हि क्रमः। ते च विष्ण्वादयः तत्तत्प्रकारमालोच्य यथा संसारविभागम्, तथा प्रकारानवधार्य ब्राह्मणानि प्रकल्पयन्ति । अत एव

"वैष्णवं ब्राह्मणं ज्ञात्वा ज्ञात्वा ब्राह्मं यथायथम् ।
शैवं स ब्राह्मणं ज्ञात्वा सर्वस्वं ज्ञानमुत्तमम् ॥
ब्राह्मञ्च वैष्णवं चैव शैवमेव समाहृतम् ।
वेदोह्यध्येयश्चैवं हि तत्वज्ञानं लभेत्ततः ॥
ज्ञात्वा तत्वं परात्मानं प्रतिष्ठं प्रणवाभिधम् ।

पृथङ्निवर्तको भूत्वा सर्वभावमधिष्ठितः ॥
अयमेव परो धर्मः परं ज्ञानमगोचरम् ।
निश्चयं कुरु नित्यं वै सर्वबुद्धिस्सनातनी ॥"

इत्यादि प्रवचनम् । तस्मात्स ब्रह्मणो वेदोऽध्येयो भवति । तादृशञ्च महत्वं विज्ञेयम् । एतत्सर्वञ्च ह्येकत्वप्रज्ञापनार्थमेव । यथा ।

" तदेकत्वमेकत्वमेकत्वरूपं
समानं समं तादृशं सर्वसिद्धम् ।
स्वतस्सिद्ध एषःप्रचारप्रभाव-
स्सदावश्यकोऽयं सदावश्यकोऽयम् ॥
सदावश्यकं स्याच्छुभं सर्वरूपं
ह्यनन्तं परं वेदनीयञ्च तत्वम् ।
समानं समानं समानं समानं
परब्रह्मरूपं हि तद्भावनीयम् ॥"

इत्यादि प्रवचनम् । तस्मादेवं विधानेन सर्वप्रज्ञापनेन सर्वेषां प्रज्ञापितत्वेन सर्वप्रकारबोधाय ब्राह्मणग्रन्थाश्च भवन्ति । अत एव "ब्रह्मविद्या परायणी ब्राह्मणपरा वेदपरा सार्वत्रिकी संप्रसिद्धा" इति व्याख्यानफलम् ।एतद्भावेनैव वेदपरं ब्राह्मणं प्रणवस्थं वेदितव्यमिति हि परमः सिद्धान्तः ।

इति श्रीमहर्षिगार्ग्यायणप्रणीते प्रणववादे तृतीयप्रकरणे
॥ नवमस्तरङ्गः ॥

॥प्रथमभागश्च संपूर्णः॥

ॐ

॥ ब्रह्मविदाप्नोति परम् ॥

ओं शान्तिः

ॐ



## ॥ शुद्धाशुद्धपत्रिका ॥

| पत्र. सं | पङ्क्तिसं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२ | ११ | शास्त्रार्थनां | शास्त्रार्थानां |
| १६ | ४ | जगद्दष्टया | जगद्दृष्टया |
| २१ | ३ | सर्वधा | सर्वथा |
| २९ | २ | भूताति | भूतानि |
| ३० | १८ | व्यञ्चन | व्यञ्जन |
| ३१ | १४ | मावश्यकञ्ज | मावश्यकञ्च |
| ,, | १८ | तस्मद्वेदोक्तं | तस्माद्वेदोक्तं |
| ४१ | ६ | शद्वद्वयं | शब्दद्वयम् |
| ४५ | २ | पृथङ्ग्ि | पृथङ्ङि |
| ४६ | १५ | मकार | मकारो |
| ४७ | ५ | सर्वधा | सर्वथा |
| ४७ | ५ | सर्व | सार्व |
| ४८ | १४ | संग | संयोग |
| ५४ | १३ | सर्वधा | सर्वथा |
| ,, | १८ | शद्वार्थाना | शब्दार्थाना |
| ५८ | १ | शद्वः | शब्दः |

| पत्र सं | पङ्क्तिसं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | ९ | शद्बस्य | शब्दस्य |
| ,, | १७ | सदित्युक्या | सादित्युक्त्या |
| ६० | १५ | स्याश्री | स्यात्स्री |
| ६४ | ३ | अव्युप्पन्न | अव्युत्पन्न |
| ६४ | ४ | सर्वधा | सर्वथा |
| ८८ | ३ | सर्वधा | सर्वथा |
| ९१ | ३ | व्यारव्यानच्च | व्यारव्यानाच्च |
| ,, | १० | शत्चवारिंश | शच्चत्वारिंश |
| ९४ | १९ | न्कर्ये | न्कार्ये |
| १०९ | ६ | श्चेत्युचते | श्चेत्युच्यते |
| ११० | १ | च्छद्ब | च्छब्द |
| ,, | १३ | वश्ययकत्वं | वश्यकत्वं |
| ११५ | ३ | निसंकल्प | निस्संकल्प |
| ११७ | १० | अन्यघा | अन्यथा |
| ११९ | ११ | भवियत्तीति | भाविष्यतीति |
| १२१ | १३ | मविष्य | भाविष्य |
| १२३ | ११ | त्यज्ये | त्याज्ये |
| १२८ | १२ | यत्सततदमृतं | यत्सत्तदमृतं |

| पत्र. सं | पङ्क्तिसं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३६ | १४ | सर्वधा | सर्वथा |
| २४५ | ५ | सर्वधा | सर्वथा |
| १५१ | २ | मुलभ्यताम् | मुपलभ्यताम् |
| १५७ | १४ | द्वितिया | द्वितीया |
| १५८ | ११ | तर्वते | वर्तते |
| १६३ | ४ | अतस्मरणं | अतस्स्मरणं |
| १७३ | ८ | शर्वशक्ति | सर्वशक्ति |
| १७४ | १ | संथिस्तौ | संस्थितौ |
| १७५ | १ | वथितः | वस्थितः |
| १८० | १९ | विद्धिति | विद्धीति |
| १९३ | १७ | मनाद्यन्तन | मनाद्यनन्त |
| २०४ | ९ | सर्वधा | सर्वथा |
| २२६ | १८ | सर्वधा | सर्वथा |
| २२९ | १२ | सर्वधा | सर्वथा |
| २३६ | ९ | एतन्नहामस्मि | एतन्नाहमस्मि |
| ,, | १९ | परनम् | परम् |
| २४१ | ८ | वादीनी | वादीनि |
| २६५ | २ | साक्षाद्बृह्म | साक्षाद्ब्रह्म |

| पत्र. सं | पङ्क्तिस | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६६ | १० | यक्तिद्भवति | यत्किञ्चिद्भवति |
| २६९ | १९ | माञ्च | मात्रञ्च |
| २७३ | १४ | पुरुषोत्ततम् | पुरुषोत्तमम् |
| २९५ | १९ | सर्वधा | सर्वथा |
| ३१० | १४ | स्थितस्यात् | स्थितस्स्यात् |
| ३१५ | ९ | रूपाणी | रूपाणि |
| ३१८ | ६ | यज्ञादिकञ्ज | यज्ञादिकञ्च |
| ३१९ | २ | चैदत | चैत |
| ३२० | ८ | रूपत्वाञ्च | रूपत्वाच्च |
| ३३३ | १५ | सन्याया | सन्ध्याया |
| ३३६ | ६ | धर्मस्या | धर्मस्स्या |
| ३५६ | १२ | संभवत्येवेति | संभवन्त्येवेति |
| ,, | १९ | यद्यति | यद्यपि |
| ३८४ | ९ | अवश्यकपरः | आवश्यकपरः |
| ,, | १० | अवश्यक | आवश्यक |
| ३८६ | ७ | तस्माद्वयो | तस्माद्वयो |
| ३९९ | ४ | तत्पमन्वन्तरेषु | सप्तमन्वन्तरेषु |
| ,, | १७ | वैवस्ततो | वैवस्वतो |

| पत्र. सं | पङ्क्तिसं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १८ | भववि | भवति |
| ४१४ | १७ | एतद्भवननेन | एतद्भवनेन |
| ,, | १८ | पसन्ना | प्रसन्ना |
| ४४० | ११ | शरङ्क | शङ्करं |
| ४६४ | ५ | विषत्वेन | विषयत्वेन |
| ,, | ६ | सम्यक्छूयतां | सम्यक्छ्रूयतां |
| ४७३ | ११ | दस्स | दस्य |
| ४८६ | ४ | वञ्चोच्यते | त्वञ्चोच्यते |

